THE

# KASHI-SANSKRIT-SERIES

( HARIDÂS SANSKRIT GRANTHAMĀLĀ )

## NO. 60.

( Nātya S'āstra Section, No. I )

श्रीभरतमुनिप्रणीतं

# नाट्यशास्त्रम् ।



PRINTED, PUBLISHED AND SOLD BY
JAI KRISHNADAS HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,
North of Gopalmandir, Benares City.

1929.

THE
KÂSHI-SANSKRIT-SERIES
( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )
NO. 60.
( Nāṭya S'āstra Section, No. I. )



# THE
# NĀṬYA S'ĀSTRA

*Of*

BHARATA



*Edited*

By

*Batuk Nāth Sharmā, M. A., Sahityopādhyāya*
and
*Baldeva Upādhaya, M. A., Sahitya S'āstrī*
PROFESSORS, BENARES HINDU UNIVERSITY.



PRINTED PUBLISHED & SOLD BY
JAI KRISHNADÂS HARIDÂS GUPTA
*The Chowkhamba Sanskrit Series Office,*
*Vidyâ Vilâs Press, Benâres City.*

1929

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरीज़पुस्तकमालायाः

६०

नाट्यशास्त्रविभागे (१) प्रथमं पुष्पम् ।

श्रीभरतमुनिप्रणीतं

# नाट्यशास्त्रम् ।

पण्डित बटुकनाथ शर्मा, एम. ए., साहित्योपाध्यायः,

तथा

पण्डित बलदेव उपाध्याय, एम. ए., साहित्यशास्त्री,

इत्येताभ्यां सम्पादितम् ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा-संस्कृत-सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९८५.

# किमपि सम्पादकीयं निवेदनम्

विदितमेवेदं विदुषां संस्कृतविद्याजुषां यद् वरीवर्ति तद्विदां मनांसि रञ्जयत् किमपि ग्रन्थरत्नं भरतमुनिप्रणीतं नाट्यशास्त्रं नाम। सत्स्वपि कतिपयेषु नाटकीयविषयप्रतिपादकप्रबन्धेषु दशरूपकादिषु, सर्वाङ्गीणतया प्रतिपादनविशदतया च भरतमुनेर्नाट्याचार्यस्य कीर्तिरद्यापि सुधियां समाजमावर्जयन्ति भूमण्डलं मण्डयन्तीव परितोऽपरिहीयमानविभवाऽक्षुण्णेव जगति जागर्ति। इदं तु विचित्रं चित्रमिव नः प्रतिभाति यदेतादृशस्यापि ग्रन्थस्य न समुल्लसति किमपि शुद्धं सुलभं संस्करणम्। अस्त्येकं निर्णयसागराख्ययन्त्रालये मुद्रितं, किन्तु तदपि वहुदोषयुक्तत्वान्नातिसमीचीनम्। अधुना तदप्यप्राप्यमेव। सुलभप्रचारो भवत्वेष ग्रन्थ इति तत्सम्पादनाय श्रेष्ठिजयकृष्णदासमहोदयैः प्रार्थिताः, पण्डितवर्यैः श्रीगोपीनाथ कविराज महाशयैः समुत्साहिताश्च वयस्मिन् दुष्करकर्मणि प्रवृत्ता अभूम। कियदंशेन साफल्यमस्माकं संजातमिति गुणैकपक्षपातिनो मधुकरायमानमानसा विद्वांस एव विदाङ्कुर्वन्तु।

अस्य सर्वानुषङ्गिविषयपर्यालोचनचणां विशदां विस्तृतां च भूमिकां विलिख्य एतस्यात्र समुद्रितस्य ग्रन्थस्य शोभां समृद्धिं समुपयोगितां च संवर्धयितुं प्रतिश्रुतं तत्रभवद्भिः सहृदयहृदयधुरीणः पण्डितराजैः श्रीगोपीनाथकविराजैः किन्त्वनेककार्यव्यापृतानां तेषां वहुविषयपर्यालोचनापेक्षमेतादृशं कार्यं नूनमेव कमपि कालमपेक्षते। पण्डितानां छात्राणां च समुत्कण्ठा सर्वथैव कालाक्षमेति मनसि निधाय भूमिकारहितमिदं संस्करणं तावत्प्रकाश्यते। आशास्महे यदचिरादेव भूमिकादिभिः सहितमपि संस्करणं विद्वज्जनकरामर्शमहोत्सवं समुपैष्यति।

# PREFATORY NOTE.

It is with a feeling of great pleasure that we are presenting herewith the text of भरत's नाट्यशास्त्र to the lovers of Sanskrit Learning. It is, we presume, for the first time that an attempt has been made to edit the well—known but much vitiated text of नाट्यशास्त्र in one handy volume with the critical comparision of the two recensions. We do not know how far our efforts have been crowned with real success.

It is a matter of great good fortune that Pandit Gopinath Kaviraj has, with his usual kindness towards us, consented to contribute an Introduction to the present work. We need not say what kind of introduction it will make, for his name is a guarantee that whatever comes from his pen will not be a thing of the common run. But unfortunately so many responsible duties of official nature—so harassing to a scholar of genuine worth-have been placed upon his shoulders that they leave little time to him. In spite of this fact, we have full confidence in his wonderful capacity for work and hope that his learned Introduction will not take long in coming before the learned public.

As some customers-learned Pandits and students-have been, here and outside, clamouring for the speedy issue of the text, the publisher has considered it advisable to bring out, in the meanwhile, an edition of this work consisting only of the text,

Benares Hindu, University
2nd March, 1929

THE EDITORS.

# विषयानुक्रमणी ।



---

---

---

---

---

---

---

श्रीगणेशाय नमः ।

# नाट्यशास्त्रम्

## अथ प्रथमाध्यायप्रारम्भः ।

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥ १ ॥
समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् ।
अनध्याये कदाचित्[1] तं भरतं नाट्यकोविदम् ॥ २ ॥
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा ।
पप्रच्छुस्ते[2] महात्मानो नियतेन्द्रियबुद्धयः ॥ ३ ॥
योऽयं भगवता सम्यक् ग्रथितो वेदसम्मितः ।
नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः[3] कस्य वा कृते ॥ ४ ॥
कत्यङ्गः[4] किंप्रमाणश्च प्रयोगश्चास्य कीदृशः ।
सर्वमेतद्यथातत्त्वं भगवन् वक्तुमर्हसि ॥ ५ ॥
तेषां तद्[5] वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति ॥ ६ ॥
भवद्भिः शुचिभिर्भूत्वा तथाऽवहितमानसैः ।
श्रूयतां नाट्यवेदस्य सम्भवो[6] ब्रह्मनिर्मितः ॥ ७ ॥
पूर्वं कृतयुगे विप्राः वृत्ते स्वायम्भुवेऽन्तरे ।
त्रेतायुगेऽथ सम्प्राप्ते मनोर्वैवस्वतस्य च ॥ ८ ॥
ग्राम्यधर्मप्रवृत्ते[7] तु कामलोभवशं गते ।
ईर्ष्याक्रोधाभिसंमूढे लोके सुखितदुःखिते ॥ ९ ॥
देवदानवगन्धर्वयक्षरक्षोमहोरगैः ।
जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते ॥ १० ॥

---

१ तु—क । २ क०—ख । ३ चायं—ख । ४ कत्यंशः—क । ५ तु—क । ६ संक्षेपः -ख । ७ संप्रवृत्ते-ख ।

महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥ ११ ॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥ १२ ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित् ॥ १३ ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥ १४ ॥
सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम् ।
नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥ १५ ॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् ॥ १६ ॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥ १७ ॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना ।
एवं भगवता सृष्टो ब्रह्मणा ललितात्मकम् ॥ १८ ॥
उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् ।
इतिहासो मया दृष्टः स सुरेषु नियुज्यताम् ॥ १९ ॥
कुशला ये विदग्धाश्च प्रगल्भाश्च जितश्रमाः ।
तेष्वयं नाट्यसंज्ञो हि वेदः संक्राम्यतां त्वया ॥ २० ॥
तच्छ्रुत्वा भगवान् शक्रो ब्रह्मणा यदुदाहृतम् ।
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् ॥ २१ ॥
ग्रहणे धारणे ज्ञाने प्रयोगे चास्य सत्तम ।
अशक्ता भगवन् देवा अयोग्या नाट्यकर्मणि ॥ २२ ॥
य इमे वेदगुह्यज्ञा मुनयः संश्रितव्रताः ।

---

१ नव्य ( न च ) वेदविहारोऽयं-ख । २ शिष्य-ख । ३ नाट्याख्यं पञ्चमं—ख । ४ सम्बन्धो-क । ५ अतः परं त्रयस्त्रिंशत् श्लोकाः खपुस्तके नोपलभ्यन्ते ।

एतेऽस्य ग्रहणे शक्ताः प्रयोगे धारणे तथा ॥ २३ ॥
श्रुत्वा तु शक्रवचनं मामाहाम्बुजसम्भवः।
त्वं पुत्रशतसंयुक्तः प्रयोक्ताऽस्य भवानघ ॥ २४ ॥
आज्ञापितो विदित्वाऽहं नाट्यवेदं पितामहात्।
पुत्रानध्यापयं योग्यान् प्रयोगं चाऽस्य तत्त्वतः ॥ २५ ॥
शाण्डिल्यं चापि वात्स्यं च कोहलं दन्तिलं तथा।
जटिलाम्बष्ठकौ चैव ताण्डुमग्निशिखं तथा ॥ २६ ॥
सैन्धवं सपुलोमानं शाड्वलीं विपुलं तथा।
बन्धलं भक्तकं चैव मुष्टिकं सैन्धवायनम् ॥ २७ ॥
कपिञ्जलिं वादिरं च यमधूम्रायणौ तथा।
जम्बुध्वजं काकजङ्घं स्वर्णकं तापसं तथा ॥ २८ ॥
केदारं शालिकर्णं च दीर्घगात्रं च शालिकम्।
कौत्सं ताण्डायनिं चैव पिङ्गलं छत्रकं तथा ॥ २९ ॥
बन्धुलं भल्लकं चैव मुष्टीकं सैन्धवायनम्।[1]
तैतिलं भार्गवं चैव शुचिं बहुलमेव च ॥ ३० ॥
अबुधं बुधसेनं च पाण्डुकर्णं सकेरलम्।
ऋजुकं मण्डकं चैव शम्बरं वञ्जुलं तथा ॥ ३१ ॥
मागधं सरलं चैव..................मेव च।
तुषारं पार्षदं चैव गौतमं बादरायणिम् ॥ ३२ ॥
विशालं शबलं चैव सुनालीमेषमेव च।
कर्त्तराक्षं हिरण्याक्षं कुशलं दुःसहं तथा ॥ ३३ ॥
जालं भयानकं चैव बीभत्सं सविचक्षणम्।
कालियं भ्रमरं चैव तथा पीठमुखं मुनिम् ॥ ३४ ॥
तरुकुट्टारमकुट्टौ च षट्पदं सोत्तमं तथा।
पादुकोपानहौ चैव श्रुतिकं षट्स्वरं तथा ॥ ३५ ॥
अग्निकुण्डाज्यकुण्डौ च वितण्ड्यं ताण्ड्यमेव च।
पुण्डाक्षं पूर्णनासं च असितं सितमेव च ॥ ३६ ॥

---

१. श्लोकार्द्धमिदं पुनरुक्तमिवाभाति।

त्रिद्युज्जिह्वं महाजिह्वं शालङ्कायनमेव च ।
श्यामायनं माठरं च लोहिताङ्गं तथैव च ॥ ३७ ॥
संवर्त्तकं पञ्चशिखं त्रिशिखं शिखमेव च ।
शङ्खवर्णमुखं षण्डं शङ्कुकर्णमथापि च ॥ ३८ ॥
शक्रनेमिं गभस्तिं चाप्यंशुमालिं शठं तथा ।
विद्युतं शातजङ्घं च रौद्रवीरमथापि च ॥ ३९ ॥
पितामहाज्ञयास्माभिर्लोकस्य च गुणेप्सया ।
प्रयोजितं पुत्रशतं यथा भूमिविभागशः ॥ ४० ॥
यो यस्मिन् कर्मणि तथा योग्यस्तस्मिन् स योजितः ।
भारतीं सात्वतीं चैव वृत्तिमारभटीं तथा ॥ ४१ ॥
समाश्रितः प्रयोगस्तु प्रयुक्तो वै महाद्विजाः ।
परिगृह्य प्रणम्याऽथ ब्रह्मा विज्ञापितो मया ॥ ४२ ॥
अथाऽऽह मां सुरगुरुः कैशिकीमपि योजय ।
यच्च तस्याक्षमं द्रव्यं तद्ब्रूहि द्विजसत्तम ॥ ४३ ॥
एवं तेनाभ्यभिहितः प्रत्युक्तश्च मया प्रभुः ।
दीयतां भगवन् द्रव्यं कैशिक्याः सम्प्रयोजकम् ॥ ४४ ॥
मृदङ्गहारसंयुक्ता रसभावक्रियात्मिका ।
दृष्टा मया भगवतो नीलकण्ठस्य नृत्यतः ॥ ४५ ॥
कैशिकी श्लक्ष्णनेपथ्या शृङ्गाररससम्भवा ।
अशक्या पुरुषैः साधु प्रयोक्तुं स्त्रीजनादृते ॥ ४६ ॥
ततोऽसृजन् महातेजा मनसाऽप्सरसो विभुः ।
नाट्यालङ्कारचतुराः प्रादान् मह्यं प्रयोगतः ॥ ४७ ॥
मञ्जुकेशीं सुकेशीं च मिश्रकेशीं सुलोचनाम् ।
सौदामिनीं देवदत्तां देवसेनां मनोरमाम् ॥ ४८ ॥
सुदतीं सुन्दरीं चैव विदग्धां विविधां तथा ।
सुमालां सन्ततिं चैव सुनन्दां सुमुखीं तथा ॥ ४९ ॥
मागधीमर्जुनीं चैव सरलां केरलां धृतिम् ।
नन्दां सुपुष्पमालां च कलभां चैव निर्ममे ॥ ५० ॥

स्वातिभाण्डो नियुक्तस्तु सह शिष्यैः स्वयम्भुवा ।
नारदाद्याश्च गन्धर्वा नाट्ययोगे नियोजिताः ॥ ५१ ॥
भावनाट्यमिदं सम्यग् बुध्वा सर्वैः सुतैः सह ।
स्वा[1]तिनारदसंयुक्तो वेदवेदाङ्ग[2]कारणम् ॥ ५२ ॥
उपस्थितोऽहं लोकेशं प्रयोगार्थं कृताञ्जलिः ।
नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम् ॥ ५३ ॥
एतत्तु वचनं श्रुत्वा प्रत्युवाच पितामहः ।
महानयं प्रयोगस्य[3] समयः समुपस्थितः ॥ ५४ ॥
अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते ।
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् ॥ ५५ ॥
ततस्तस्मिन् ध्वजमहे निहतासुरदानवे ।
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ॥ ५६ ॥
पूर्वं[4] कृता मया नान्दी आशीर्वचनसंयुता ।
अष्टाङ्गपदसंयुक्ता विचित्रा दे[5]वसंमता ॥ ५७ ॥
तदन्तेऽनुकृतिर्बद्धा यथा दैत्याः सुरैर्जिताः ।
संफेटविद्रवकृता छेद्यभे[6]द्याहवात्मिका ॥ ५८ ॥
ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः ।
[8]प्रददुर्हृष्टमनसः सर्वोपकरणानि नः ॥ ६० ॥
प्रीतस्तु प्रथमं शक्रो द[9]त्तवान् स्वध्वजं शुभम् ।
ब्रह्मा क[10]मण्डलुं चैव भृङ्गारं वरुणस्तथा ॥ ६१ ॥
सूर्यश्छत्रं शिवः[11] सिद्धिं वायुर्व्यजनमेव च ।
विष्णुः सिंहासनं चैव कुवेरो मुकुटं तथा ॥ ६२ ॥
श्रा[12]व्यत्वं प्रेक्षणीयस्य ददौ देवी सरस्वती ।
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६३ ॥

---

१ येन-ख । २ ता०—क । ३ ०श्च समया-ख । ४ ०पू०-क ।
५ वेदनिर्मिता—ख । ६ वे०—क ७ र०—ख । ८ प्रययुः प्रददुर्हृष्टा—कः ।
९ दत्तस्तु ( अदत्ततु ) ध्वजमुत्तमम्—ख । १० कुटिलकं—ख ।
११ शिवा सिद्धिं (?)-ख १२ इदं श्लोकार्द्धं खपुस्तके नोपलभ्यते ।

तस्मिन् सदस्यभि[1]प्रेतान् नानाजातिगु[2]णाश्रयान् ।
अंशांशैर्भा[3]वितान् भावान् रसान् रूप[4]बलैं [5]क्रियाम्॥ ६४ ॥
[6]दत्तवन्तः प्रहृष्टास्ते मत्सुतेभ्यो दिवौकसः ।
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने ॥ ६५ ॥
[7]अभवन् क्षुभिताः सर्वे दैत्या ये तत्र संगताः ।
विरूपाक्षपुरोगास्तु विघ्नान् प्रोत्साद्य तेऽब्रुवन् ॥ ६६ ॥
नेत्थमिष्यामहे नाट्यमेतदागम्यतामिति ।
ततस्तैरसुरैः सार्द्धं विघ्नमायामुपाश्रिताः ॥ ६७ ॥
वचश्चेष्टां स्मृतिं चैव स्तंभयन्ति स्म नृत्यताम् ।
तथा विध्वंसनं दृष्ट्वा तत्र तेषां स देवराट् ॥ ६८ ॥
कस्मात् प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् ।
अथापश्यत् तदा विघ्नैः समन्तात् परिवारितम् ॥ ६९ ॥
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् ।
उत्थाय त्वरितं शक्रः क्रोधात् जग्राह तं ध्वजम् ॥ ७० ॥
सर्वरत्नोज्वलन्तं तु किञ्चिदुद्वृत्तलोचनः ।
रंगपीठगतान् विघ्नानसुरांश्चैव देवराट् ॥ ७१ ॥
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः ।
निहतेषु च सर्वेषु विघ्नेषु सह दानवैः ॥ ७२ ॥
संप्रहृष्य ततो वाक्यमहुः सर्वे दिवौकसः ।
अहो प्रहरणं दिव्यमिदमासादितं त्वया ॥ ७३ ॥
नाट्यविध्वंसिनः सर्वे येन ते जर्जरीकृताः ।
तस्माज् जर्जर इत्येव नामतोऽयं भविष्यति ॥ ७४ ॥
शेषा ये चैव हिंसार्थमुपयास्यन्ति हिंसकाः ।
दृष्ट्वैव जर्जरं तेऽपि गमिष्यन्त्येवमेव तु ॥ ७५ ॥
एवमेवास्त्विति ततः शक्रः प्रोवाच तान् सुरान् ।

---

१ ०तिप्रीता—ख । २ गणाश्रयः—ख । ३ भाषितं—ख । ४ बलं—ख । ५ तथा—ख । ६ प्रदद्दुर्मत्सुनेभ्यश्च चित्रमाभरणं बहु—ख । ७ अथासुरांश्चाभितोष्य ये तत्रासन् समागताः—क ।

रक्षाभूतश्च सर्वेषां भविष्यत्येव जर्जरः ॥ ७६ ॥
प्रयोगे प्रस्तुते ह्येवं स्फीते शक्रमहे पुनः ।
त्रासं सञ्जनयन्ति स्म विघ्ना मद्वधबुद्धयः ॥ ७७ ॥
दृष्ट्वा तेषां व्यवसितं मदर्थे विप्रकारजम् ।
उपस्थितोऽहं ब्रह्माणं सुतैः सर्वैः समन्वितः ॥ ७८ ॥
निश्चिता भगवन् विघ्ना नाट्यस्यास्य विनाशने ।
अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर ॥ ७९ ॥
ततः स विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः ।
कुरु लक्षणसम्पन्नं नाट्यवेश्म चकार सः ॥ ८० ॥
कृत्वा यथोक्तमेवं तु गृहं पद्मोद्भवाज्ञया ।
प्रोक्तवान् द्रुहिणं गत्वा सभायां तु कृताञ्जलिः ॥ ८१ ॥
सज्जं नाट्यगृहं देव तदवेक्षितुमर्हसि ।
ततः सह महेन्द्रेण सुरैः सर्वैश्च सत्तमैः ॥ ८२ ॥
आगच्छत् त्वरितो द्रष्टुं द्रुहिणो नाट्यमण्डपम् ।
दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान् सुरांस्ततः ॥ ८३ ॥
अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः ।
रक्षणे मण्डपेऽस्याऽथ नियुक्तो रजनीकरः ॥ ८४ ॥
लोकपालास्तथा दिक्षु विदिक्ष्वपि च मारुताः ।
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणेश्वरः ॥ ८५ ॥
वेदिकां पावकः पातुं भाण्डं सर्वे दिवौकसः ।
वर्णाश्चत्वार एवाथ स्तंभेषु विनियोजिताः ॥ ८६ ॥
आदित्याश्चैव रुद्राश्च स्थिताः स्तंभान्तरेष्वथ ।
धरणीषु स्थिता भूताः शालास्वप्सरसस्तथा ॥ ८७ ॥
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः ।
द्वारशालानियुक्तस्तु कृतान्तः काल एव च ॥ ८८ ॥
स्थापितौ द्वारपार्श्वे तु नागराजौ महाबलौ ।
देहल्यां यमदण्डस्तु शूलं चोपरि संस्थितम् ॥ ८९ ॥
द्वारपालौ स्थितौ चोभौ नियतिर्मृत्युरेव च ।

पार्श्वे तु रङ्गपीठस्य महेन्द्रः स्थितवान् स्वयम् ॥ ९० ॥
स्थापिता मत्तवारण्यां विद्युद् दैत्यनिषूदिनी ।
स्तंभेषु मत्तवारण्याः स्थापिताः परिपालने ॥ ९१ ॥
भूता यक्षाः पिशाचाश्च गुह्यकाश्च महाबलाः ।
जर्जरे चैव निक्षिप्तं वज्रं दैत्यनिबर्हणम् ॥ ९२ ॥
तत्पर्वसु च निक्षिप्ताः सुरेन्द्रा ह्यमितौजसः ।
शिरःपर्वस्थितो ब्रह्मा द्वितीये शङ्करस्तथा ॥ ९३ ॥
तृतीये भगवान् विष्णुश्चतुर्थे स्कन्द एव च ।
पञ्चमे च महानागाः शेषवासुकितक्षकाः ॥ ९४ ॥
एवं विघ्नविनाशाय स्थापिता जर्जरे सुराः ।
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ॥ ९५ ॥
इत्यर्थं रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् ।
पातालवासिनो ये च यक्षगुह्यकपन्नगाः ॥ ९६ ॥
अधस्ताद्रङ्गपीठस्य रक्षणे विनियोजिताः ।
नायकं रक्षतीन्द्रस्तु नायिकां तु सरस्वती ॥ ९७ ॥
विदूषकमथोंकारः शेषास्तु प्रकृतीर्हरः ।
यान्येतानि नियुक्तानि दैवतानीह रक्षणे ॥ ९८ ॥
एतान्यैवाधिदैवानि भविष्यन्तीत्युवाच सः ।
एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः ॥ ९९ ॥
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया ।
पूर्वं साम प्रयोक्तव्यं द्वितीयं दानमेव च ॥ १०० ॥
तयोरुपरि भेदस्तु ततो दण्डः प्रयुज्यते ।
देवानां वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ १०१ ॥
अलं वो मन्युना दैत्या विषादं त्यजतानघाः ।
भवतां दैवतानां च शुभाशुभविकल्पकः ॥ १०२ ॥
कर्मभावान्वयापेक्षो नाट्यवेदो मया कृतः ।
नैकान्ततोऽत्र भवतां देवानां चात्र भावनम् ॥ १०३ ॥
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ।

क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छ्रमः ॥ १०४ ॥
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः ।
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् ॥ १०५ ॥
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया ।
क्लीवानां धाष्टर्यकरणमुत्साहः शूरमानिनाम् ॥ १०६ ॥
अबुधानां विबोधश्च वैदुष्यं विदुषामपि ।
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ॥ १०७ ॥
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ।
नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ॥ १०८ ॥
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ।
उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ॥ १०९ ॥
हितोपदेशजननं नाट्यमेतद्भविष्यति ।
एतद् रसेषु भावेषु सर्वकर्मक्रियासु च ॥ ११० ॥
सर्वोपदेशजननं नाट्यमेतद्भविष्यति ।
दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ॥ १११ ॥
विश्रामजननं लोके नाट्यमेतद्भविष्यति ।
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ॥ ११२ ॥
लोकोपदेशजननं नाट्यमेतद्भविष्यति ।
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ॥ ११३ ॥
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते ।
सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च ॥ ११४ ॥
अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम् ।
तन्नात्र मन्युः कर्त्तव्यो भवद्भिरमरान् प्रति ॥ ११५ ॥
सप्तद्वीपानुकरणं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ।
वेदाविद्येतिहासानामाख्यानपरिकल्पनम् ॥ ११६ ॥
विनोदजननं काले नाट्यमेतत् भविष्यति ।
श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम् ॥ ११७ ॥

१ बन्धः ( द्वन्द्वः )—ख० ।

देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥ ११८ ॥
एतस्मिन्नन्तरे देवान् सर्वानाह पितामहः ।
क्रियतां नाट्यविधिवद् यजनं नाट्यमण्डपे ॥ ११९ ॥
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः ।
जप्यैर्भक्ष्यैश्च भोज्यैश्च बलिः समुपकल्प्यताम् ॥ १२० ॥
मर्त्यलोकेष्ययं वेदः शुभां पूजामवाप्स्यति ।
अपूजयित्वा रङ्गं तु नैव प्रेक्षा प्रवर्त्तते ॥ १२१ ॥
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति ।
तस्य तन्निष्फलं ज्ञानं तिर्यग्योनिं च यास्यति ॥ १२२ ॥
यज्ञेन सम्मितं ह्येतद् रङ्गदैवतपूजनम् ।
तस्मात् सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ॥ १२३ ॥
नर्तकोऽर्थपतिर्वापि यः पूजां न करिष्यति ।
कारयिष्यति वा चैव प्राप्स्यत्यपचयं तु सः ॥ १२४ ॥
यथाविधि यथाशास्त्रं यस्तु पूजां करिष्यति ।
स लप्स्यते शुभानर्थान् स्वर्गलोकं गमिष्यति ॥ १२५ ॥
एवं भवत्विति प्राह द्रुहिणः सह दैवतैः ।
रङ्गपूजां कुरुष्वेति मामेवं समचोदयत् ॥ १२६ ॥

इति भारतीये नाट्यशास्त्रे शास्त्रोत्पत्तिर्नाम प्रथमोऽध्यायः ।

---

## अथ द्वितीयाध्यायप्रारम्भः ।

भरतस्य वचः श्रुत्वा प्रत्यूचुर्मुनयस्तदा ।
भगवन् श्रोतुमिच्छामो यजनं रङ्गसंश्रयम् ॥ १ ॥
अथवा याः क्रियास्तत्र लक्षणं यच्च पूजनम् ।
भविष्यद्भिर्नरैः कार्यं कथं वै नाट्यवेश्मनि ॥ २ ॥
इहादिर्नाट्यवेदस्य कीर्तितो नाट्यमण्डपः ।
तस्मात्तस्यैव तावत् त्वं लक्षणं वक्तुमर्हसि ॥ ३ ॥

तेषां तु वचनं श्रुत्वा मुनीनां भरतोऽब्रवीत् ।
लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनः ॥ ४ ॥
दिव्यानां मानसी सृष्टिर्गृहेषूपवनेषु च ।
नराणां यत्नतः कार्या लक्षणाभिहिताः क्रियाः ॥ ५ ॥
श्रूयतां तद्यथा तत्र कर्तव्यो नाट्यमण्डपः ।
तस्य दैवतपूजा च यथा योज्या च वास्तुषु ॥ ६ ॥
इह प्रेक्षागृहाणां तु धीमता विश्वकर्मणा ।
त्रिविधः सन्निवेशश्च शास्त्रतः परिकल्पितः ॥ ७ ॥
विकृष्टश्चतुरश्रश्च त्र्यश्रश्चैव हि मण्डपः ।
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथाऽवरम् ॥ ८ ॥
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम् ।
शतं चाष्टौ चतुष्षष्टिर्द्वात्रिंशच्चेति निश्चितम् ॥ ९ ॥
अष्टाधिकं शतं ज्येष्ठं चतुष्षष्टिस्तु मध्यमम् ।
कनीयस्तु तथा वेश्म द्वात्रिंशत् करमिष्यते ॥ १० ॥
देवानां भवनं ज्येष्ठं नृपाणां मध्यमं भवेत् ।
शेषाणां प्रकृतीनां तु कनीयः संविधीयते ॥ ११ ॥
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा ।
प्रेक्षागृहाणां सर्वेषां तच्चैवं हि निबोधत ॥ १२ ॥
अणू रजश्च बालश्च लिक्षा यूका यवस्तथा ।
अङ्गुलं चैव हस्तश्च दण्डश्च परिकीर्तितः ॥ १३ ॥
अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ बाल उच्यते ।
बालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकं भवेत् ॥ १४ ॥
यूकास्त्वष्टौ यवः प्रोक्तः यवास्त्वष्टौ तथाङ्गुलम् ।
अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते ॥ १५ ॥
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः ।
अनेनैव प्रमाणेन वक्ष्याम्येषां विनिर्णयम् ॥ १६ ॥
चतुष्षष्टिं करान् कुर्याद् दीर्घत्वेन तु मण्डपम् ।

द्वात्रिंशेन तु विस्तारं मर्त्यानां योजयेदिह ॥ १७ ॥
अत ऊर्ध्वं न कर्त्तव्यः कर्तृभिर्नाट्यमण्डपः ।
यस्मादव्यक्तभावं हि तत्र नाट्यं भवेदिति ॥ १८ ॥
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारितस्वरम् ।
अनभिव्यक्तवर्णत्वाद् विस्वरत्वं भृशं भवेत् । १९ ॥
यश्चाप्यस्य गतो रागो भावस्तुष्टिरसाश्रयः ।
स वेश्मनः प्रकृष्टत्वाद् व्रजेदव्यक्ततां पराम् ॥ २० ॥
प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते ।
यस्माद्वाद्यं च गेयं च सुखं श्राव्यतरं भवेत् ॥ २१ ॥
देवानां मानसी सृष्टिर्गृहेषूपवनेषु च ।
यत्नभावाद् विनिष्पन्नाः सर्वे भावास्तु मानुषाः ॥ २२ ॥
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः ।
मनुष्यस्य तु गेहस्य संप्रवक्ष्यामि लक्षणम् ॥ २३ ॥
भूमेर्विभागं पूर्वं तु परीक्षेत विचक्षणः ।
ततो वास्तुप्रमाणं च प्रारभेत शुभेच्छया । २४ ॥
समा स्थिरा च कठिना कृष्णा गौरी च या भवेत् ।
भूमिस्तत्र तु कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥ २५ ॥
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत् ।
अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् ॥ २६ ॥
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत् ततः ।
त्रीण्युत्तराणि सौम्यञ्च विशाखापि च रेवती । २७ ॥
हस्ततिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि ।
पुष्यनक्षत्रयोगे तु शुक्लं सूत्रं प्रसारयेत् ॥ २८ ॥
कार्पासं बादरं चापि वाल्कलं मौञ्जमेव च ।

---

१ द्वात्रिंशतं च विस्तारान् मर्त्यानां यो भवेदिह—ख । २ तस्मात्—ख । ३ अनिःसरणधर्मत्वात्—ख । ४ यस्य लास्यगतो भावो नानादृष्टिसमन्वितः-ख । ५ पाठ्यं-ख । ६ यत्र-ख । ७ अयं श्लोकः खपुस्तके नोपलभ्यते । ८ बाल्वजं-ख ।

सूत्रं बुधैस्तु कर्तव्यं यस्य च्छेदो न विद्यते ॥ २९ ॥
अर्धच्छिन्ने भवेत् सूत्रे स्वामिनो मरणं ध्रुवम् ।
त्रिभागच्छिन्नया रज्वा राष्ट्रकोपो विधीयते ॥ ३० ॥
छिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते ।
हस्तप्रभ्रष्टया वापि कश्चित्त्वपचयो भवेत् ॥ ३१ ॥
तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते ।
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु ॥ ३२ ॥
मुहूर्तेनानुकूलेन तिथ्या च करणेन च ।
ब्राह्मणांस्तर्पयित्वा च पुण्याहं वाचयेत् ततः ॥ ३३ ॥
शान्तितो यत्नतो धृत्वा तत्र सूत्रं प्रसारयेत् ।
चतुष्षष्टिं करान् कृत्वा द्विधा कुर्यात् पुनश्च तान् ॥ ३४ ॥
पृष्ठतो यो भवेद्भागो द्विधा भूतो भवेच्च सः ।
तस्यार्धेन[1] विभागेन रङ्गशीर्षं प्रयोजयेत् ॥ ३५ ॥
पश्चिमे तु पुनर्भागे नेपथ्यगृहमादिशेत् ।
विभज्य भागान् विधिवत् यथावदनुपूर्वशः ॥ ३६ ॥
शुभे नक्षत्रयोगे तु मण्डपस्य निवेशनम् ।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः ॥ ३७ ॥
सर्वतूर्यनिनादैश्च स्थापनं कार्यमेव च ।
उत्सार्याणि त्वनिष्टानि पाषण्डाश्रमिणस्तथा ॥ ३८ ॥
काषायवसनाश्चैव विकलाश्चैव ये नराः ।
निशायां च बलिः कार्यो नानाभोजनसंयुतः ॥ ३९ ॥
गन्धपुष्पफलोपेतो दिशो दश समाश्रितः ।
पूर्वेण शुक्लान्नयुतो नीलः[2] स्याद् दक्षिणेन च ॥ ४० ॥
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु ।
यस्यां यच्चाधिदैवं तु दिशि संपरिकीर्तितम् ॥ ४१ ॥
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः ।
स्थापने ब्राह्मणेभ्यश्च दातव्यो घृतपायसः ॥ ४२ ॥

---

१ तस्याप्यर्द्धार्द्धभागे तु –ख। २ निधानो–क।

मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडोदनम् ।
नक्षत्रेण तु कर्त्तव्यं मूलेन स्थापनं बुधैः ॥ ४३ ॥
मुहूर्त्तेनानुकूलेन तिथ्या सुकरणेन च ।
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् ॥ ४४ ॥
भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं ततः ।
तिथिनक्षत्रयोगेन शुभेन करणेन तु ॥ ४५ ॥
स्तम्भानां स्थापनं कार्यं रोहिण्या श्रवणेन वा ।
आचार्येण सुयुक्तेन त्रिरात्रोपोषितेन च ॥ ४६ ॥
स्तम्भानां स्थापनं कार्यं प्राप्ते सूर्योदये शुभे ।
प्रथमे ब्राह्मणस्तम्भे सर्पिस्सर्षपसंस्कृते ॥ ४७ ॥
सर्वशुक्लो विधिः कार्यो दद्यात् पायसमेव तु ।
ततश्च क्षत्रियस्तम्भे वस्त्रमाल्यानुलेपनम् ॥ ४८ ॥
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गुडोदनम् ।
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ॥ ४९ ॥
सर्वं पीतं प्रदातव्यं द्विजेभ्यश्च घृतोदनम् ।
शूद्रस्तम्भे विधिः कार्यः सम्यक् पूर्वोत्तराश्रये ॥ ५० ॥
नीलप्रायं प्रदातव्यं कृसरं च द्विजाशनम् ।
पूर्वे तु ब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ॥ ५१ ॥
निक्षिपेत् कनकं मूले कर्णाभरणसंश्रयम् ।
ताम्रं चापि प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके ॥ ५२ ॥
वैश्यस्तम्भस्य मूले तु रजतं सम्प्रदापयेत् ।
शूद्रस्तम्भस्य मूले तु दद्यादायसमेव च ॥ ५३ ॥
शेषेष्वपि च निक्षेप्यं स्तम्भमूलेषु काञ्चनम् ।
स्वस्तिपुण्याहघोषेण जयशब्देन चैव हि ॥ ५४ ॥
स्तम्भानां स्थापनं कार्यं पर्णमालापुरस्कृतम् ।
रत्नदानैः सगोदानैर्वस्त्रदानैरनल्पकैः ॥ ५५ ॥
ब्राह्मणाम् स्थापयित्वा तु स्तम्भमुत्थापयेत् ततः ।

---

१ इत आरभ्य त्रयोदश श्लोकाः खपुस्तके नोपलभ्यन्ते ।

अचलं चाप्यकम्पं च तथैवाचलितं पुनः ॥ ५६ ॥
स्तम्भस्योत्थापने सम्यग् दोषा ह्येते प्रकीर्तिताः ।
अवृष्टिरुक्ता चलने वलने मृत्युतो भयम् ॥ ५७ ॥
कम्पने परचक्रात् तु भयं वदति दारुणम् ।
दोषैरेतैर्विहीनं तु स्तम्भमुत्थापयेच्छिवम् ॥ ५८ ॥
पवित्रं ब्राह्मणस्तम्भे दातव्या दक्षिणा च गौः ।
शेषाणां भोजनं कार्यं स्थापने कर्तृसंश्रयम् ॥ ५९ ॥
मन्त्रपूर्वं च तद्देयं नाट्याचार्येण धीमता ।
पुरोहितं नृपं चैव भोजयेन् मधुपायसम् ॥ ६० ॥
कर्तृनपि तथा सर्वान् कृसरं लवणोत्तरम् ।
सर्वमेवं विधिं कृत्वा सर्वातोद्यैः प्रवादितैः ॥ ६१ ॥
अभिमन्त्र्य यथान्यायं स्तम्भमुत्थापयेच्छुचिः ।
यथाचलो गुरुर्मेरुर्हिमवांश्च महाबलः ॥ ६२ ॥
जयावहो नरेन्द्रस्य तथा त्वमचलो वह ।
स्तम्भद्वारं च भित्तिं च नेपथ्यगृहमेव च ॥ ६३ ॥
एवमुत्थापयेत् तज्ज्ञो विधिदृष्टेन कर्मणा ।
रङ्गपीठस्य पश्चात् तु कर्तव्या मत्तवारणी ॥ ६४ ॥
चतुःस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः ।
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी ॥ ६५ ॥
उत्सेधेन तयोस्तुल्यं कर्त्तव्यं रङ्गमण्डपम् ।
तस्य माल्यं च वस्त्रं च गन्धमाल्यं तथैव च ॥ ६६ ॥
नानावर्णानि देयानि तथा भूतप्रियो बलिः ।
पायसं चात्रं[1] दातव्यं स्तम्भानां कुशलैरधः ॥ ६७ ॥
भोजने कृसरं चैव दातव्यं ब्राह्मणाशनम् ।
एवंविधिपुरस्कारैः कर्तव्या मत्तवारणी ॥ ६८ ॥
रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा ।
रङ्गशीर्षं तु कर्त्तव्यं षट्दारुकसमन्वितम् ॥ ६९ ॥

---

१ आयसं ताम्र ( तत्र )–ख ।

कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु ।
पूरेण मृत्तिका चात्र कृष्णा देया प्रयत्नतः ॥ ७० ॥
लाङ्गलेन समुत्कृष्य निर्लोष्टतृणशर्करा ।
लाङ्गले शुद्धवर्णौ तु धुर्यौ योज्यौ प्रयत्नतः ॥ ७१ ॥
कर्त्तारः पुरुषास्तत्र येऽङ्गदोषविवर्जिताः ।
अहीनाङ्गैश्च वोढव्या मृत्तिका पीठकैर्नवैः ॥ ७२ ॥
एवंविधैश्च कर्त्तव्यं रङ्गशीर्षं प्रयत्नतः ।
कूर्मपृष्ठं न कर्त्तव्यं मत्स्यपृष्ठं तथैव च ॥ ७३ ॥
शुद्धादर्शतलाकारं[1] रङ्गशीर्षं[2] प्रशस्यते ।
रत्नानि चात्र देयानि पूर्वं वज्रं विचक्षणैः ॥ ७४ ॥
वैदूर्यं दक्षिणे चैव स्फटिकं पश्चिमे तथा ।
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् ॥ ७५ ॥
एवं रङ्गशिरः कृत्वा दारुकर्म प्रवर्त्तयेत् ।
ऊहप्रत्यूहसंयुक्तं नानाशिल्पप्रयोजितम् ॥ ७६ ॥
नानासञ्जवनोपेतं[3] बहुव्यालोपशोभितम् ।
[4]अट्टालभञ्जिकाभिश्च समन्तात् समलंकृतम् ॥ ७७ ॥
निर्यूहकुहु(ह)रोपेतं नानाग्रथितवेदिकम् ।
नानाविन्याससंयुक्तं यन्त्रजालगवाक्षकम् ॥ ७८ ॥
सुपीठधरणीयुक्तं कपोतालीसमाकुलम् ।
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् ॥ ७९ ॥
एवं काष्ठविधिं कृत्वा भित्तिकर्म प्रवर्त्तयेत् ।
स्तम्भं वा नागदन्तं वा वातायनमथापि वा ॥ ८० ॥
[5]कोणं वा सप्रतिद्वारं दारुविद्धं न कारयेत् ।
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ॥ ८१ ॥
मन्दवातायनोपेतो निर्वातो धीरशब्दभाक् ।
तस्मान्निवातः कर्त्तव्यः कर्तृभिर्नाट्यमण्डपः ॥ ८२ ॥

---

१ तलप्रख्यं-ख । २ पीठं--ख । ३ भञ्जवरोपेतं (?)-ख । ४ एतत् सार्धश्लोकद्वयं कपुस्तके न दृश्यते । ५ काष्णायसं-ख ।

गाम्भीर्यं सुस्वरत्वं च कुतपस्य भवेदिति।
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् ॥ ८३ ॥
सुधाकर्म तथैवास्य कुर्याद् बाह्यं प्रयत्नतः।
भित्तिष्वपि च लिप्तासु परिमृष्टासु सर्वतः ॥ ८४ ॥
समासु जातशोभासु चित्रकर्म प्रवर्त्तयेत्।
चित्रकर्मणि चालेख्याः पुरुषाः स्त्रीजनास्तथा ॥ ८५ ॥
लताबन्धाश्च कर्त्तव्याश्चरितं चात्मभोगजम्।
एवं विकृष्टं कर्त्तव्य नाट्यवेश्मप्रयोक्तृभिः ॥ ८६ ॥
अतः परं प्रवक्ष्यामि चतुरस्रस्य लक्षणम्।
समन्ततस्तु कर्त्तव्यो हस्ता द्वात्रिंशदेव तु ॥ ८७ ॥
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डपः।
यो विधिः पूर्वमुक्तस्तु लक्षणं मण्डलानि च ॥ ८८ ॥
चतुरस्रस्य तान्येव कारयेन्नाट्यवेश्मनः।
चतुरस्रं समं कृत्वा सूत्रेण प्रविभज्य च ॥ ८९ ॥
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टका दृढा।
तत्राभ्यन्तरतः कार्या रङ्गपीठे यथादिशम् ॥ ९० ॥
दश प्रयोक्तृभिः स्तम्भाः शक्ता मण्डपधारणे।
स्तम्भानां बाह्यतः स्थाप्यं सोपानाकृति पीठकम् ॥ ९१ ॥
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम्।
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ॥ ९२ ॥
रङ्गपीठविलोक्यं च कुर्यादासनिकं विधिम्।
षडन्यान्[1] सुन्दरान् दद्यात् पुनः स्तम्भान् यथादिशम् ॥ ९३ ॥
विधिना स्थापयेत् प्राज्ञो दृढान् मण्डपधारणे।
अष्टौ स्तम्भान् पुनश्चैव तेषामुपरि कारयेत् ॥ ९४ ॥
[2]संस्थाप्यं च पुनः पीठमष्टहस्तप्रमाणतः।
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे ॥ ९५ ॥
धारणीधारितास्ते च शालस्त्रीभिरलंकृताः।

---

१ अन्तरे चैव-ख। २ विद्धास्यमष्टहस्तं च पीठं तेषु ततो न्यसेत्-ख।

नैपथ्यगृहकं चैव ततः कार्यं प्रयोक्तृभिः ॥ ९६ ॥
द्वारं चैकं भवेत् तस्य रङ्गपीठप्रवेशने ।
जनप्रवेशनं चैवमाभिमुख्येन कारयेत् ॥ ९७ ॥
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु ।
अष्टहस्तं तु कर्त्तव्यं रङ्गपीठं प्रमाणतः ॥ ९८ ॥
चतुरस्रं समतलं वेदिकासमलंकृतम् ।
पूर्वप्रमाणनिर्दिष्टा कर्त्तव्या मत्तवारणी ॥ ९९ ॥
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः ।
समुन्नतं समं चैव रङ्गपीठं तु कारयेत् ॥ १०० ॥
विकृष्टेप्युन्नतं कार्यं चतुरस्रं समं तथा ।
एवमेतेन विधिना चतुरस्रं गृहं भवेत् ॥ १०१ ॥
त्र्यस्रस्य मण्डपस्यापि संप्रवक्ष्यामि लक्षणम् ।
त्र्यस्रं त्रिकोणं कर्त्तव्यं नाट्यवेश्म प्रयोक्तृभिः ॥ १०२ ॥
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत् ।
द्वारं[1] तेनैव कोणेन कर्त्तव्यं तु प्रवेशने ॥ १०३ ॥
द्वितीयं चैव कर्त्तव्यं रङ्गपीठस्य पृष्ठतः ।
स तु सर्वः प्रयोक्तव्यः त्र्यस्रस्यापि प्रयोक्तृभिः ॥ १०४ ॥
एवमेतेन विधिना कार्यं नाट्यगृहं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि पूजामेषां यथाविधि ॥ १०५ ॥

इति भारतीये नाट्यशास्त्रे प्रेक्षागृहलक्षणं नाम द्वितीयोऽध्यायः ।

## अथ तृतीयाध्यायप्रारम्भः ।

सर्वलक्षणसम्पन्ने कृते नाट्यगृहे शुभे ।
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः ॥ १ ॥
ततोऽधिवासयेत् वेश्म रङ्गपीठं तथैव च ।
मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे ॥ २ ॥

---

१ वामेन केन-क ।

यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः ।
त्रिरात्रोपोषितो भूत्वा ना[1]ट्याचार्योऽहताम्बरः ॥ ३ ॥
नमस्कृत्य महादेवं सर्वलोकेश्वरं भवम् ।
पद्मयोनिं सुरगुरुं विष्णुमिन्द्रं गुहं तथा ॥ ४ ॥
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां स्मृतिं मतिम् ।
सेन्दुं सूर्यं च मरुतो लोकपालांस्तथाश्विनौ ॥ ५ ॥
मित्रमग्निं [2]स्व[3]रान् रुद्रान् वर्णान् कालं कलिं तथा ।
मृत्युं च नियतिं चैव कालदण्डं तथैव च ॥ ६ ॥
विष्णुप्रहरणं चैव नागराजं ख[4]गेश्वरम् ।
वज्रविद्युत्समुद्रांश्च गन्धर्वाप्सरसो मुनीन् ॥ ७ ॥
भूतान् पिशाचान् यक्षांश्च गुह्यकांश्च महोरगान् ।
[6]असुरान्नाट्यविघ्नांश्च तथान्यान् दैत्यराक्षसान् ॥ ८ ॥
तथा ना[7]ट्यकुमारीश्च महाग्रामण्यमेवच ।
एतांश्चान्यांश्च राजर्षीन् प्रणिपत्य कृताञ्जलिः ॥ ९ ॥
यथास्थानस्थितान् देवान् निमन्त्र्यैतद्वचोऽवदत् ।
भवद्भिर्नो निशायां तु कर्तव्यः संपरिग्रहः ॥ १० ॥
साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः ।
संपूज्य देवताः सर्वाः कुतपं संप्रयुज्य च ॥ ११ ॥
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये ।
त्वं महेन्द्रप्रहरणं सर्वदानवसूदनम् ॥ १२ ॥
निर्मितं सर्वदेवैश्च सर्वविघ्ननिवारणम् ।
नृपाय विजयं देहि रिपूणां च पराजयम् ॥ १३ ॥
गोब्राह्मणहितं चैव नाट्यस्य च विवर्धनम् ।
एवं कृत्वा यथान्यायमुषित्वा नाट्यमण्डपे ॥ १४ ॥
निशायां च प्रभातायां पूजनं प्रक्रमेद् बुधः ।

---

१ नायकोऽहतवस्त्रधृक्–ख । २ विष्णु–क । ३ सु०–क । ४ ०क०–क । ५ च वासुकिम्––ख । ६ श्लोकार्धमिदं खपुस्तके न दृश्यते । ७ नाट्यं च मातृश्च––क ।

आर्द्रायां वा मघायां वा याम्ये पूर्वेषु वा त्रिषु ॥ १५ ॥
आश्लेषामूलयोर्वापि कर्त्तव्यं रङ्गपूजनम् ।
आचार्येण सुयुक्तेन शुचिना दीक्षितेन च ॥ १६ ॥
रङ्गस्योद्यापनं[1] कार्यं दैवतानां च पूजनम् ।
दिनान्ते दारुणे घोरे मुहूर्त्ते भूतदैवते ॥ १७ ॥
आचम्य च यथान्यायं दैवतानि निवेशयेत् ।
रक्ताः प्रतिसरास्तत्र रक्तगन्धाश्च पूजिताः ॥ १८ ॥
रक्ताः सुमनसश्चैव यच्च रक्तं फलं भवेत् ।
यवैः सिद्धार्थकैर्लाजैर्लक्षितैर्लाजतण्डुलैः ॥ १९ ॥
नागपुष्पस्य चूर्णेन[2] वितुषाभिः प्रियङ्गुभिः ।
एतैर्द्रव्यैर्[3]युतं कार्यं दैवतानां निवेशनम् ॥ २० ॥
आलिखेन् मण्डलं पूर्वं यथास्थानं यथाविधि ।
समन्ततस्तु कर्त्तव्या हस्ताः षोडश मण्डलैः ॥ २१ ॥
द्वाराणि चात्र कुर्वीत विधिना च चतुर्दिशम् ।
मध्ये चैवात्र कर्त्तव्ये द्वे रेखे तिर्यगूर्ध्वगे ॥ २२ ॥
तयोः कक्ष्यानियोगेन[4] दैवतानि निवेशयेत् ।
पद्मोपविष्टं ब्रह्माणं रङ्गमध्ये निवेशयेत् ॥ २३ ॥
आदौ निवेश्यो भगवान् सार्द्धं भूतगणैः शिवः ।
नारायणो महेन्द्रश्च स्कन्दार्कावश्विनौ शशी ॥ २४ ॥
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः ।
पूर्वदक्षिणतो[5] वह्निर्निवेश्यः स्वाहया सह ॥ २५ ॥
विश्वेदेवाश्च गन्धर्वा रुद्राश्च[6] ऋषयस्तथा ।
दक्षिणेन निवेश्यस्तु यमो मित्रस्तु सानुगः ॥ २६ ॥
पितॄन् पिशाचानुरगान् गुह्यकांश्च निवेशयेत् ।
नैर्ऋत्यां नैर्ऋतांश्चैव सर्वभूतान्निवेशयेत् ॥ २७ ॥
पश्चिमायां समुद्रांश्च वरुणं च निवेशयेत् ।

---

१ ०स्याद्योतनं-क । २ मूलेन-ख । ३ दिव्यै-क । ४ उक्तविभागेन—ख । ५ चन्द्रमा भानुरेव च—क । ६ सर्पगणास्तथा—ख

वायव्यां वै दिशि तथा सप्तवायुं निवेशयेत् ॥ २८ ॥
निवेशयेच्च तत्रैव गरुडं पक्षिभिः सह ।
उत्तरस्यां कुबेरं च सर्वैरनुचरैः सह ॥ २९ ॥
नाट्यस्य मातॄश्च तथा यक्षानथ च गुह्यकान् ।
[1]तथैवोत्तरपूर्वायां नन्दिनं' च गणेश्वरान् ॥ ३० ॥
ब्रह्मर्षिभूतसङ्घांश्च............................ ।
स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च ॥ ३१ ॥
ग्रामण्यं चोत्तरे स्तम्भे पूजार्थं विनिवेशयेत् ।
अनेनैव विधानेन यथास्थानं यथाविधि ॥ ३२ ॥
[2]वर्णरूपान्विताः सर्वा देवताः संनिवेशयेत् ।
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः ॥ ३३ ॥
प्रकुर्वीत ततस्तासां पूजनं तु यथार्हतः ।
दैवतेभ्यस्तु दातव्यं सितं माल्यानुलेपनम् ॥ ३४ ॥
वह्निगन्धर्वसूर्येभ्यो रक्तमाल्यानुलेपम् ।
गन्धं माल्यं च धूपं[3] च यथावदनुपूर्वशः ॥ ३५ ॥
दत्वा ततः प्रकुर्वीत बलिपूजां यथाविधि ।
द्रुहिणं मधुपर्केण पायसेन सरस्वतीम् ॥ ३६ ॥
शिवविष्णुमहेन्द्राद्याः संपूज्या मोदकैरथ ।
घृतोदनेन वह्निश्च सोमार्कौ तु गुडोदनैः ॥ ३७ ॥
विश्वेदेवाः सगन्धर्वा मुनयो मधुपायसैः ।
यममित्रौ समभ्यर्च्यौ मोदकैः सूपमिश्रितैः ॥ ३८ ॥
पितॄन् पिशाचानुरगान् सर्पिःक्षीरेण तर्पयेत् ।
[5]पक्वामकेन मांसेन सुराशीधुफलासवैः ॥ ३९ ॥
अर्चयेद् भूतसङ्घांश्च चणकैः पललाप्लुतैः ।
अनेनैव विधानेन संपूज्या मत्तवारणी ॥ ४० ॥

---

१ अयं श्लोकः खपुस्तके न दृश्यते । २ सप्रसादानि सर्वाणि दैवतानि निवेशयेत्-ख ३ सूपं-क ४ अपूपैर्मोदकैस्तथा-ख । ५ एष सार्द्धश्लोकः खपुस्तके नोपलभ्यते ।

पक्वामकेन[1] मांसेन संपूज्या रक्षसां गणाः ।
सुरामांसप्रदानेन विधिना प्रतिपूजयेत् ॥ ४१ ॥
शेषान् देवगणान् प्राज्ञः सापूपोत्कारिकोदनैः ।
मत्स्यैश्च पिष्टभक्ष्यैश्च[2] सागरान् सरितस्तथा ॥ ४२ ॥
अभ्यर्च्य वरुणश्चापि दातव्यो घृतपायसः ।
नानामूलफलैश्चैव मुनीन् संप्रतिपूजयेत् ॥ ४३ ॥
वायूंश्च पक्षिणश्चैव विविधैः भक्ष्यभोजनैः ।
नाट्यस्य च तथा मातॄर्धनदं च सहानुगैः ॥ ४४ ॥
अपूपैः लोपिकाभिस्तैर्भक्ष्यभोज्यैः प्रयत्नतः ।
एवमेषां बलिः कार्यो नानाभोजनसंश्रयः ॥ ४५ ॥
पुनर्मन्त्रविधानेन बलिकर्म प्रवक्ष्यते ।
देवदेव महाभाग पद्मयोने पितामह ॥ ४६ ॥
मन्त्रपूतमिमं सर्वं[4] बलिं देव गृहाण नः ।
देवदेव महादेव गणेश त्रिपुरान्तक ॥ ४७ ॥
[3]महादेव महायोगिन् देवदेव सुरोत्तम ।
संप्रगृह्य बलिं देव रक्ष विघ्नान् सदोत्थितान् ॥ ४८ ॥
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ।
नारायणामितगते पद्मनाभ सुरोत्तम ॥ ४९ ॥
प्रगृह्यतां बलिर्देव मन्त्रसंस्कारसंस्कृतः ।
पुरन्दरामरपते वज्रपाणे शतक्रतो ॥ ५० ॥
प्रगृह्यतां बलिर्देव बलिमन्त्रपुरस्कृतः ।
देवसेनापतिस्कन्द भगवन् शङ्करप्रिय ॥ ५१ ॥
प्रीतेन मनसा देव षण्मुख प्रतिगृह्यताम् ।
देवि देवि महाभागे सरस्वति हरिप्रिये ॥ ५२ ॥
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः ।
लक्ष्मीः सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः ॥ ५३ ॥

---

१ ०न्नेन तु—ख। २ मृ०—ख। ३ एष श्लोकः कपुस्तके नोपलभ्यते। ४ श्लोकत्रयमेतत् खपुस्तके न दृश्यते।

मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् ।
सर्वभूतानुभावज्ञ[1] लोकजीवन मारुत ॥ ५४ ॥
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ।
नानानिमित्तसंभूताः[2] पौलस्त्याः सर्व एव तु ॥ ५५ ॥
राक्षसेन्द्रा महासत्त्वाः प्रतिगृह्णन्त्विमं बलिम् ।
देववक्त्र सुरश्रेष्ठ धूमकेतो हुताशन ॥ ५६ ॥
भक्त्या समुद्यतो देव बलिः सम्प्रतिगृह्यताम् ।
सर्वग्रहाणां प्रवर तेजोराशे दिवाकर ॥ ५७ ॥
भक्त्या मयोद्यतो देव बलिः सम्प्रतिगृह्यताम् ।
सर्वग्रहपते सोम द्विजराज जगत्प्रिय ॥ ५८ ॥
प्रगृह्यतामेष बलिर्मन्त्रपूतपुरस्कृतः ।
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः ॥ ५९ ॥
प्रतिगृह्णन्त्विमं भक्त्या बलिं सम्यङ्मयोदितम् ।
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्त्विमं बलिम् ॥ ६० ॥
भूतेभ्यश्च नमो नित्यं तेषामेष बलिः प्रियः ।
कामपाल नमो नित्यं यस्यायं ते बलिः कृतः ॥ ६१ ॥
नारदस्तुम्बुरुश्चैव विश्वावसुपुरोगमाः ।
प्रतिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुत्तमम् ॥ ६२ ॥
यमो मित्रश्च भगवान् ईश्वरौ लोकपूजितौ ।
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम् ॥ ६३ ॥
रसातलचरेभ्यस्तु पन्नगेभ्यो नमो नमः ।
दिशन्तु सिद्धिं नाग्यस्य पूजिताः पवनाशनाः[3] ॥ ६४ ॥
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः ।
पूजितः प्रीतिमानस्तु ससमुद्रनदीनदः ॥ ६५ ॥
वैनतेय महासत्त्व सर्वपक्षिपते प्रभो ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥ ६६ ॥

---

१ नीतिज्ञ-क २ इदं श्लोकार्द्धं खपुस्तके नोपलभ्यते । ३ पापनाशनाः—ख ।

धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः ।
सगुह्यकैश्च यक्षैश्च प्रतिगृह्णातु मे बलिम् ॥ ६७ ॥
नमोस्तु नाट्यमातृभ्यो ब्राह्म्यादिभ्यो नमो नमः ।
सुमुखीभिः प्रसन्नाभिर्बलिः संप्रतिगृह्यताम् ॥ ६८ ॥
रुद्रप्रहरणं चैव प्रतिगृह्णातु मे बलिम् ।
विष्णुः प्रहरणं चैव विष्णुभक्त्या मयोद्यतम् ॥ ६९ ॥
तथा कृतान्तः कालश्च सर्वप्राणिवशेश्वरौ[1] ।
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् ॥ ७० ॥
याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः ।
मन्त्रपूतमिमं सम्यक् प्रतिगृह्णन्तु मे बलिम् ॥ ७१ ॥
अन्ये ये देवगन्धर्वा दिशो दश समाश्रिताः ।
दिव्यान्तरिक्षा भौमाश्च तेभ्यश्चायं बलिः कृतः ॥ ७२ ॥
कुम्भं सलिलपूर्णं च पर्णमालापुरस्कृतम्[2] ।
स्थापयेद् रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ॥ ७३ ॥
आतोद्यानि तु सर्वाणि कृत्वा वस्त्रोत्तराणि तु ।
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्भोज्यैश्च पूजयेत् ॥ ७४ ॥
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् ।
जर्जरः प्रतिसंपूज्यः स्यात् ततो विघ्नजर्जरः ॥ ७५ ॥
श्वेतं शिरसि वस्त्रं स्यात् नीलं रौद्रे च पर्वणि ।
विष्णुपर्वणि स्यात पीतं रक्तं स्कन्दस्य पर्वणि ॥ ७६ ॥
मूलैपर्वणि[3] चित्रं तु देयं वस्त्रं हितार्थिनाम् ।
सदृशं च प्रदातव्यं माल्यधूपानुलेपनम् ॥ ७७ ॥
आतोद्यानि च सर्वाणि वासोभिरवगुण्ठयेत् ।
गन्धमाल्यैश्च धूपैश्च भक्ष्यभोज्यैश्च भोजयेत् ॥ ७८ ॥
सर्वमेव विधिं कृत्वा धूपमाल्यानुलेपनैः ।
विघ्नजर्जरणार्थं तु जर्जरं चाभिमन्त्रयेत् ॥ ७९ ॥
विघ्नानां शमनार्थं हि देवैर्ब्रह्मपुरोगमैः ।

---

१ सर्वप्राणधनेश्वरः-ख । २ व०-ख । ३ मूष०-ख ।

निर्भितस्त्वं महावीर्यो वज्रसारो महातनुः ॥ ८० ॥
शिरस्ते रक्षतु ब्रह्मा सर्वदेवगणैः सह ।
द्वितीयं च हरः पर्व तृतीयं च जनार्दनः ॥ ८१ ॥
चतुर्थं च कुमारश्च पञ्चमं पन्नगोत्तमः ।
नित्यं सर्वे हि पान्तु त्वां सुरास्त्वं च शिवो भव ॥ ८२ ॥
नक्षत्रेऽभिजिति त्वं च प्रसूतो रिपुसूदनः ।
जयं चाभ्युदयं चैव पार्थिवाय प्रयच्छ नः ॥ ८३ ॥
जर्जरं पूजयित्वैत्रं बलिं सर्वं निवेद्य च ।
अग्नौ होमं ततः कुर्यात् मन्त्राहुतिपुरस्कृतम् ॥ ८४ ॥
हुत्वा स एव दीप्ताभिरुल्काभिः परिमार्जनम् ।
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ॥ ८५ ॥
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीस्तथा ।
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान् वदेत् ॥ ८६ ॥
महाकुले प्रसूताश्च गुणौघैश्चाप्यलङ्कृताः ।
यद्वो जन्मगुणोपेतं तद्वो भवतु नित्यशः ॥ ८७ ॥
एवमुक्त्वा ततो वाक्यं नृपतेर्भूतये बुधः ।
नाट्ययोगप्रसिध्यर्थमाशिषः संप्रयोजयेत् ॥ ८८ ॥
सरस्वती धृतिर्मेधा ह्रीःश्रीर्लक्ष्मीर्मतिः स्मृतिः ।
पान्तु वो मातरः सर्वाः सिद्धिदाश्च भवन्तु वः ॥ ८९ ॥
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् ।
भिद्यात् कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः ॥ ९० ॥
अभिन्ने तु भवेत् कुम्भे स्वामिनः शत्रुतो भयम् ।
भिन्ने चैव तु विज्ञेयः स्वामिनः शत्रुसङ्क्षयः ॥ ९१ ॥
भिन्ने कुम्भे ततश्चैव नाट्याचार्योऽप्यपेतभीः ।
प्रगृह्य दीपिकां दीप्तां सर्वं रङ्गं प्रदीपयेत् ॥ ९२ ॥
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैश्च प्रधावितैः ।

---

१ ०सत्रे–ख । २ पातु–क । ३ ०रो०–क । ४ सूर्यनो–ख ।
५ ०तौ–क । ६ श्लोकोऽयं खपुस्तके नोपलभ्यते ।

रङ्गमध्ये तु तां दीप्तां सशब्दां संप्रयोजयेत् ॥ ९३ ॥
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवैस्तथा ।
सर्वातोद्यैः प्रणदितैः रङ्गे युद्धानि कारयेत् ॥ ९४ ॥
तत्र भिन्नं च छिन्नं च दारितं च सशोणितम् ।
क्षतप्रदीप्तमायत्तं[1] निमित्तं सिद्धलक्षणम् ॥ ९५ ॥
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् ।
पुरस्य बालवृद्धस्य तथा जनपदस्य च ॥ ९६ ॥
दुरिष्टस्तु तथा रङ्गो दैवतैर्दुरधिष्ठितः ।
नाट्यविध्वंसनं कुर्यात् नृपस्य च तथा शुभम् ॥ ९७ ॥
यस्त्वेवं विधिमुत्सृज्य यथेष्टं सम्प्रयोजयेत् ।
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति ॥ ९८ ॥
यज्ञेन सम्मितं ह्येतत् रङ्गदैवतपूजनम् ।
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रयोजयेत् ॥ ९९ ॥
पूजिताः पूजयन्त्येते मानिता मानयान्ति च ।
तस्मात् सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ॥ १०० ॥
न[3] तथाऽऽशु दहत्यग्निः प्रभञ्जनसमीरितः ।
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ॥ १०१ ॥
शास्त्रज्ञेन विनीतेन शुचिना दीक्षितेन च ।
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् ॥ १०२ ॥
स्थानभ्रष्टं तु यो दद्यात बलिमुद्विग्नमानसः ।
मन्त्रहीनो यथा होता प्रायश्चिती भवेत् तु सः ॥ १०३ ॥
एवमेव विधिर्दृष्टो रङ्गदैवतपूजने ।
नवे नाट्यगृहे कार्यं प्रेक्षायां तु प्रयोक्तृभिः ॥ १०४ ॥

इति भारतीये नाट्यशास्त्रे रङ्गदेवतापूजनं
नाम तृतीयोऽध्यायः ॥

---

१ क्षतं-ख । २ ०स्तं-ख । ३ श्लोकद्वयमिदं कपुस्तके न दृश्यते ।

# अथ चतुर्थाध्यायप्रारम्भः।

एवं तु पूजनं कृत्वा मया प्रोक्तः पितामहः।
आज्ञापय प्रभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥ १ ॥
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम्।
एतदुत्साहजननं सुरप्रीतिकरं महत् ॥ २ ॥
योऽयं समवकारस्तु[1] धर्मकामार्थसाधकः।
मया प्रग्रथितो विद्वन् स प्रयोगः प्रयुज्यताम् ॥ ३ ॥
तस्मिन्[2] समवकारे तु प्रयुक्ते देवदानवाः।
हृष्टाः समभवन् सर्वे कर्मभावानुदर्शनात् ॥ ४ ॥
कस्यचित्त्वथ कालस्य मामाहाम्बुजसम्भवः।
नाट्यं सन्दर्शयामोऽत्र त्रिनेत्राय महात्मने ॥ ५ ॥
ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम्।
अभ्यर्च्य च शिवं पश्चादुवाचेदं पितामहः ॥ ६ ॥
मया समवकारस्तु योऽयं सृष्टः सुरोत्तम।
श्रवणे दर्शने चास्य प्रसादं कर्त्तुमर्हसि ॥ ७ ॥
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत्।
ततो मामाह भगवान् सज्जो भव महामते ॥ ८ ॥
ततो हिमवतः पृष्ठे नानानगसमावृते।
बहुभूतगणाकीर्णे[3] रम्यकन्दरनिर्झरे ॥ ९ ॥
पूर्वरङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः।
तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥ १० ॥
ततो भूतगणा हृष्टाः कर्मभावानुकीर्तनात्।
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ॥ ११ ॥
अहो नाट्यमिदं सम्यक् त्वया सृष्टं[4] महामते।
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्द्धनम् ॥ १२ ॥

---

१ समस्तकार्यस्य-ख। २ श्लोकोऽयं खपुस्तके नोपलभ्यते
३ चूतद्रुमा०-ख। ४ दृष्टं-ख

मयापीदं स्मृतं नृत्तं[1] सन्ध्याकालेषु नृत्यता ।
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् ॥ १३ ॥
पूर्वरङ्गविधावस्मिन् त्वया सम्यक् प्रयुज्यताम् ।
वर्धमानकयोगेन[2] गीतेष्वासादितेषु च ॥ १४ ॥
महागीतेषु चैवार्थान्[3] सम्यगेवाभिनेष्यसि ।
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः ॥ १५ ॥
एभिर्विमिश्रितश्चायं चित्रो नाम भविष्यति ।
श्रुत्वा महेश्वरवचः प्रत्युक्तं च स्वयंभुवा ॥ १६ ॥
प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम ।
ततस्तण्डुं समाहूय प्रोक्तवान् सुरसत्तमः ॥ १७ ॥
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै ।
ततो वै तण्डुना प्रोक्तांस्त्वङ्गहारान् महात्मना ॥ १८ ॥
नानाकरणसंयुक्तान् व्याख्यास्यामि सरेचकान् ।
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः ॥ १९ ॥
सूचीविद्धस्तथा च स्यात् सूपविद्धस्तथैव च ।
आक्षिप्तकोऽथ विज्ञेयस्तथा चोद्घटितः स्मृतः ॥ २० ॥
विष्कम्भश्चैव संप्रोक्तस्तथा चैवापराजितः ।
विष्कम्भापसृतश्चैव मत्ताक्रीडस्तथैव च ॥ २१ ॥
स्वस्तिको रेचितश्चैव पार्श्वस्वास्तिक एव च ।
वृश्चिकश्चैव संप्रोक्तो चमरश्च तथापरः ॥ २२ ॥
मत्तस्खलितकश्चैव मदाद्विलसितस्तथा ।
गतिमण्डलोऽथ विज्ञेयः परिच्छिन्नस्तथैव च ॥ २३ ॥
परिवृत्तरेचितोऽथ स्यात्तथा वैशाखरेचितः ।
परावृत्तोऽथ विज्ञेयस्तथा चैवाप्यलातकः ॥ २४ ॥
पार्श्वच्छेदोऽथ संप्रोक्तो विद्युद्भ्रान्तस्तथैव च ।

---

१ । नित्यं-ख । २ श्लोकार्द्धमेतत् खपुस्तके न दृश्यते ।
३ ०र्ता: (?)-ख । ४ ०चार्यस्य हस्तनः—क । ५ ०द्यदितः (?)—ख ।
६ ०ङ्गसृत०-ख । ७ श्लोकद्वयमिदं खपुस्तके नोपलभ्यते ।
८ एव च-ख । ९ चैव ह्यलाठकः-ख । १० ०दा०-ख ।

ऊरुद्वृत्तस्तथा[1] चैव स्यादालीढस्तथैव च ॥ २५ ॥
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः स्मृतः ।
आक्षिप्तरेचितश्चैव संभ्रान्तश्च तथापरः ॥ २६ ॥
अंसर्पितोऽथ[2] विज्ञेयस्तथा चार्द्धनिकुट्टकः ।
द्वात्रिंशदेते संप्रोक्तास्त्वङ्गहारास्तु नामतः ॥ २७ ॥
एषां चैव प्रवक्ष्यामि प्रयोगं करणाश्रितम् ।
हस्तपादप्रचारस्तु यथा योज्यः प्रयोक्तृभिः ॥ २८ ॥
अङ्गहारेषु वक्ष्यामि तथाऽहं द्विजसत्तमाः ।
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्भवेत् ॥ २९ ॥
तान्यहं संप्रवक्ष्यामि नामतः कर्मतस्तथा ।
हस्तपादसमायोगो नृत्तस्य करणं भवेत् ॥ ३० ॥
द्वे नृत्तकरणे चैव भवतो नृत्तमातृकाः ।
द्वाभ्यां त्रिचतुराभिर्वाप्यङ्गहारस्तु[3] मातृभिः ॥ ३१ ॥
त्रिभिः कलापको ज्ञेयः चतुर्भिर्मण्डकस्तथा ।
पञ्चैव करणानि स्युः सङ्घातकं[4] इति स्मृतः ॥ ३२ ॥
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ।
करणैरिह संयुक्ता अङ्गहाराः प्रकीर्तिताः ॥ ३३ ॥
एतेषामिह वक्ष्यामि हस्तपादविकल्पनम् ।
तलपुष्पपुटं[5] चैव वर्त्तितं चलितोरु च ॥ ३४ ॥
अपविद्धं समनखं लीनं स्वस्तिकरेचितम् ।
मण्डलं स्वस्तिकं चैव निकुट्टकमथापि च ॥ ३५ ॥
तथैवार्धनिकुट्टं च कटिच्छिन्नं तथैव च ।
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च ॥ ३६ ॥
उन्मत्तं स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च ।
दिक्स्वस्तिकमलातं च तथा चैव कटीसमम् ॥ ३७ ॥
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं तथा ।

---

१ उद्वृत्तक०-ख । २ अपसर्पस्तु-ख । ३ ष०-ख । ४ इति सिद्धिजा-क । ५ विष्कम्भं तलपुष्पं च-क ।

अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् ॥ ३८ ॥
भुजङ्गत्रासितं प्रोक्तं ऊर्ध्वजानु तथैव च ।
निकुञ्चितं च मत्ताल्लि त्वर्धमत्तल्लि चैव हि ॥ ३९ ॥
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम् ।
घूर्णितं चैव ललितं वलितं च तथापरम् ॥ ४० ॥
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम् ।
नूपुरं चैव संप्रोक्तं तथा वैशाखरेचितम् ॥ ४१ ॥
भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च ।
दण्डरेचितकं चैव तथा वृश्चिककुट्टितम् ॥ ४२ ॥
[1]कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च ।
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् ॥ ४३ ॥
वृश्चिकं [2]व्यंसितं चैव तथा [3]पादनिकुट्टनम् ।
ललाटतिलकं [4]क्रान्तं कुञ्चितं [5]चक्रमण्डलम् ॥ ४४ ॥
उरोमण्डलमाक्षिप्तं तथा तलविलासितम् ।
अर्गलं चापि विक्षिप्तमावृत्तं दोलपादुकम् ॥ ४५ ॥
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् ।
विद्युद्भ्रान्तमतिक्रान्तं विवर्तितकमेव च ॥ ४६ ॥
गजक्रीडितकं चैव तलसंस्फोटितं तथा ।
गरुडप्लुतकं चैव गण्डसूचि तथा परम् ॥ ४७ ॥
परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च ।
गृध्रावलीनकं चैव सन्नतं सूच्यथापि च ॥ ४८ ॥
अर्धसूचीति करणं सूचिविद्धं तथैव च ।
अपक्रान्तं च संप्रोक्तं मयूरललितं तथा ॥ ४९ ॥
सर्पितं दण्डपादं च हरिणप्लुतमेव च ।
प्रेङ्खोलितं नितम्बं च स्खलितं करिहस्तकम् ॥ ५० ॥
प्रसर्पितं समुद्दिष्टं सिंहविक्रीडितं तथा ।

---

१ कुटिलन्तं-क । २ व्या०-क । ३ पार्श्व-ख । ४ कान्तं-क । ५ व०-ख ।

सिंहाकर्षितमुद्वृत्तं तथाऽपसृतमेव च ॥ ५१ ॥
तलसंघट्टितं चैव जनितं चावहित्थकम् ।
निवेशं मौलिकाक्रीडमूरुद्वृत्तं तथैव च ॥ ५२ ॥
मदस्खलितकं चैव विष्णुक्रान्तं तथैव च ।
संभ्रान्तमथ विष्कम्भमुद्घट्टितमथापि च ॥ ५३ ॥
वृषभक्रीडितं चैव लोलितं च तथापरम् ।
नागापसर्पितं चैव शकटास्यं तथैव च ॥ ५४ ॥
गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् ।
नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे ॥ ५५ ॥
गतिप्रचारे वक्ष्यामि युद्धचारीविकल्पनम् ।
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः ॥ ५६ ॥
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ।
चरणस्यानुगश्चापि दक्षिणस्तु भवेत् करः ॥ ५७ ॥
हस्तपादप्रचारं तु कटिपार्श्वोरुसंयुतम् ।
उरःपृष्ठोदरोपेतं नृत्तमार्गे निबोधत ॥ ५८ ॥
यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च ।
सा मातृकेति विज्ञेया तद्योगात् करणं भवेत् ॥ ५९ ॥
करौ कर्णसमौ यत्र कूर्पराङ्गशिरस्तथा ।
समुन्नतमुखं चैव सौष्ठवं नाम तद्भवेत् ॥ ६० ॥
वामे पुष्पपुटं पार्श्वे पादोऽग्रतलसञ्चरः ।
तथा च सन्नतं पार्श्वं तलपुष्पपुटं भवेत् ॥ ६१ ॥
कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ।
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ॥ ६२ ॥

---

१ सिंहकम्पित–ख। २ वहित्रिकम्–क। ३ ०क्रा०–ख। ४ सामा०–ख। ५ ०ख्यं–ख। ६ र०—ख। ७ ०रा०–क। ८ एष सार्द्धः श्लोकः कपुस्तके नास्ति। ९ एष श्लोकः कपुस्तके न दृश्यते। १० एष श्लोकः ख स्तके न दृश्यते। ११ ०तो०(ते)–ख।

शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ ।
ऊरू च वलितौ यत्र वलितोरु तदुच्यते ॥ ६३ ॥
आवृत्य शुकतुण्डाख्यं ऊरूपृष्ठे निपातयेत् ।
वक्षस्थो वामहस्तश्चाप्यपविद्धं तु तद्भवेत् ॥ ६४ ॥
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ।
देहः[1] स्वाभाविको यत्र भवेत्समनखं तु तत् ॥ ६५ ॥
पताकाञ्जलिवक्षःस्थं प्रसारितशिरोधरम् ।
निकुञ्चितांसकूटं[2] च तल्लीनं करणं स्मृतम् ॥ ६६ ॥
स्वस्तिकौ रेचितौ विद्धौ विश्लिष्टौ कटिसंस्थितौ ।
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ॥ ६७ ॥
स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्द्धतलौ समौ ।
तथा च मण्डलं स्थानं मण्डलं स्वस्तिकं तु तत ॥ ६८ ॥
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ।
पादौ निकुट्टितौ चैव ज्ञेयं तत्तु निकुट्टकम् ॥ ६९ ॥
अञ्चितौ बाहुशिरसी[3] हस्तस्त्वभिमुखाङ्गुलिः ।
निकुञ्चितश्च पादः स्यात् ज्ञेयमर्धनिकुट्टकम् ॥ ७० ॥
पर्यायशः कटिः[4] च्छिन्ना बाहू शिरसि पल्लवौ ।
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ॥ ७१ ॥
अपविद्धकरः सूच्या पादश्चैव निकुट्टकः ।
सन्नतं यत्र पार्श्वं च तद्भवेदर्धरेचितम् ॥ ७२ ॥
स्वस्तिकौ चरणौ यत्र करौ वक्षसि रेचितौ ।
निकुञ्चितं तथा वक्षो वक्षःस्वस्तिकमेव च ॥ ७३ ॥
अञ्चितेन तु पादेन रेचितौ तु करौ यदा ।
उन्मत्तं करणं तत्तु विज्ञेयं नृत्तकोविदैः ॥ ७४ ॥
उभाभ्यां हस्तपादाभ्यां भवतः स्वस्तिकौ यदा ।
तत्स्वस्तिकमिति[5] प्रोक्तं करणं करणार्थिभिः ॥ ७५ ॥

---

१ देहस्वाभाविकौ—क । २ नभश्चि०—क । ३ शिखरौ—ख ।
४ कटीछिन्नौ बाहोः शिरसि पल्लवे-ख । ५ अयं श्लोकः खपुस्तके नास्ति ।

विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा ।
अपक्रान्तार्धसूचि[1]भ्यां तत् पृष्ठस्वस्तिकं भवेत् ॥ ७६ ॥
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टः कृतो भवेत् ।
स्वस्तिको[2] हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते ॥ ७७ ॥
अलातं चरणं कृत्वा [3]व्यंसयेद् दक्षिणं करम् ।
ऊर्ध्वजानुक्रमं चैव अलातकरणं भवेत् ॥ ७८ ॥
स्वस्तिकापसृतः पादः करौ नाभीकटीस्थितौ ।
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् ॥ ७९ ॥
हस्तो हृदि भवेद्वामः सव्यश्चाक्षिप्तरेचितः ।
[4]रेचितश्चापविद्धश्च तत् स्यादाक्षिप्तरेचितम् ॥ ८० ॥
विक्षिप्तं हस्तपादं तु तस्यैवाक्षेपणं पुनः ।
यत्र तत् करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः ॥ ८१ ॥
स्वस्तिकौ चरणौ कृत्वा करिहस्तं च दक्षिणम् ।
वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशेत् ॥ ८२ ॥
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ।
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् ॥ ८३ ॥
कुञ्चितं पादमुत्क्षि[5]प्य व्यस्तमूरु विवर्तयेत् ।
कटिजानु विवृत्तं च भुजङ्गत्रासितं भवेत् ॥ ८४ ॥
कुञ्चितं पादमुत्क्षिप्य जा[6]नुमूर्ध्वं प्रसारयेत् ।
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ॥ ८५ ॥
करणं वृश्चिकं कृत्वा करं पार्श्वे निकुञ्चयेत् ।
नासाग्रे दक्षिणं चैव ज्ञेयं तद्धि निकुञ्चितम् ॥ ८६ ॥
वामदक्षिणपादाभ्यां घू[7]र्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्युदाहृतम् ॥ ८७ ॥
स्खलितापसृ[8]तौ पादौ वामहस्तश्च रेचितः ।

---

१ ची च—क। २ ०कौ०—क। ३ व्या०—ख। ४ श्लोकार्धमिदं कपुस्तके नोपलभ्यते। ५ ०दिश्य-क। ६ जानुं हस्तं समं न्यसेत् क। ७ घू०-ख। ८ ०सर्पि-क।

सव्यहस्तः कटिस्थः स्यादर्द्धमत्तल्लिमादिशेत् ॥ ८८ ॥
रेचितो[5] दक्षिणो हस्तः पादः सव्यो निकुट्टितः ।
दोला चैव भवेद्वामस्तद्रेचकनिकुट्टितम् ॥ ८९ ॥
कार्यौ नाभितटेहस्तौ प्राङ्मुखौ कटका[2]मुखौ ।
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धकौ ॥ ९० ॥
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ।
तथा त्रिकं विवृत्तं च वलितं नाम तद्भवेत् ॥ ९१ ॥
वर्तितो घूर्णितः सव्यो हस्तो वामश्च दोलितः ।
स्वस्तिकापसृतः पादः करणं घूर्णितं तु तत् ॥ ९२ ॥
करिहस्तो भवेद्वामो दक्षिणश्च विवर्त्तितः ।
बहुशः कुट्टितः पादो ज्ञेयं तत् ललितं बुधैः ॥ ९३ ॥
[3]ऊर्ध्वं जानु विधायाथ तस्योपरि लतां न्यसेत् ।
दण्डपक्षं तु तत् प्रोक्तं करणं नृत्तवेदिभिः ॥ ९४ ॥
भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ।
वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम् ॥ ९५ ॥
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ ।
नूपुरं च तथा पादं करणे नूपुरे न्यसेत् ॥ ९६ ॥
रेचितौ हस्तपादौ च कटिग्रीवौ च रेचितौ ।
वैशाखस्थानकेनैतत् भवेद्वैशाखरेचितम् ॥ ९७ ॥
आक्षिप्तः स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा ।
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत् ॥ ९८ ॥
अञ्चितः स्यात् करो वामः सव्यश्च[4]तुर एव च ।
दक्षिणः कुट्टितः पादः चतुरं तत् प्रकीर्त्तितम् ॥ ९९ ॥
भुजङ्गत्रासितः पादो रेचितो दक्षिणः करः ।
लताख्यश्च करो वामो भुजङ्गाञ्चितकं भवेत् ॥ १०० ॥
विक्षिप्तं हस्तपादं तु समन्ताद् यत्र दण्डवत् ।

---

१ कुञ्चितो—क । २ खटिका—ख । ३ श्लोकचतुष्टयमेतत् खपुस्तके नोपलभ्यते । ४ दोलितो नामकः-ख ५ आप्यलपल्लवः-क ।

रेच्यते तद्धि करणं ज्ञेयं दण्डकरेचितम् ॥ १०१ ॥
वृश्चिकं करणं कृत्वा द्वावप्यथ निकुट्टितौ ।
विधातव्यौ करौ तद्धि ज्ञेयं वृश्चिककुट्टितम् ॥ १०२ ॥
सूचीं कृत्वापविद्धं च दक्षिणं चरणं न्यसेत् ।
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते ॥ १०३ ॥
अञ्चितः पृष्ठतः पादः कुञ्चितोर्ध्वतलाङ्गुलिः ।
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् ॥ १०४ ॥
अलपद्मः कटीदेशे छिन्ना पर्यायशः कटी ।
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत् ॥ १०५ ॥
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करावुभौ ।
रेचितापसृतौ चैव कार्यं वृश्चिकरेचितम् ॥ १०६ ॥
बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा ।
दूरसन्नतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम् ॥ १०७ ॥
आलीढस्थानके यत्र करौ वक्षसि रेचितौ ।
ऊर्ध्वाधोविप्रकीर्णौ च व्यंसितं तद्विदुर्बुधाः ॥ १०८ ॥
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादो निकुट्टितः ।
यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टनम् ॥ १०९ ॥
वृश्चिकं करणं कृत्वा पादस्याङ्गुष्ठकेन तु ।
ललाटे तिलकं कुर्याल्ललाटतिलकं च तत् ॥ ११० ॥
पृष्ठतः कुञ्चितं कुर्यादतिक्रान्तं समन्ततः ।
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः ॥ १११ ॥
आद्यः पादोऽञ्चितः कार्यः सव्यहस्तश्च कुञ्चितः ।
उत्तानो वामपार्श्वश्च तत्कुञ्चितमुदाहृतम् ॥ ११२ ॥
प्रलम्बिताभ्यां बाहुभ्यां यद् गात्रेणानतेन च ।
अभ्यन्तरापविद्धा स्यात् तज्ज्ञेयं चक्रमण्डलम् ॥ ११३ ॥
स्वस्तिकापसृतौ पादौ पादावर्धक्रमौ यदा ।

---

१ पादयोरनुगौ हस्तौ–क । २ ०तौ विप्रकीर्णौ च—ख । ३ आलीढं स्थानकं–ख । ४ नतः–ख । ५ आद्य०–क ।

उरोमण्डलिको हस्त उरोमण्डलकं तु तत् ॥ ११४ ॥
आक्षिप्तहस्तपादं च क्रियते यत्र वेगतः ।
आक्षिप्तं करणं नाम तद्विज्ञेयं द्विजर्षभाः ॥ ११५ ॥
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेणोर्ध्वं प्रसारितः ।
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ॥ ११६ ॥
पृष्ठतः प्रसृतः पादो द्वौ तलावूर्ध्वमेव च ।
तस्यैवानुगतो हस्तः पुरतस्त्वर्गलं तु तत् ॥ ११७ ॥
विक्षिप्तं हस्तपादं तु पृष्ठतः पार्श्वतोऽथवा ।
एकमार्गगतं[1] यत्र तद्विक्षिप्तमुदाहृतम् ॥ ११८ ॥
प्रसार्य कुञ्चितं पादं पुनरावर्तयेत् द्रुतम् ।
प्रयोगवशगौ हस्तौ तदावृत्तमुदाहृतम् ॥ ११९ ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वात् पार्श्वं तु दोलयेत् ।
प्रयोगवशगौ हस्तौ दोलपादं प्रकीर्तितम् ॥ १२० ॥
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् ।
रेचितौ च तथा हस्तौ विवृत्ते करणे द्विजाः ॥ १२१ ॥
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् ।
करौ तु रेचितौ कार्यौ विनिवृत्ते द्विजोत्तमाः ॥ १२२ ॥
पार्श्वजानुकमं[2] कृत्वा पुरस्तादथ[3] पातयेत् ।
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तमुदाहृतम् ॥ १२३ ॥
पृष्ठतः कुञ्चितौ पादौ वक्षश्चैव समुन्नतम् ।
तिलके च करः स्थाप्यस्तन्निसुम्भितमुच्यते ॥ १२४ ॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
हस्तौ[4] च मण्डलाविद्धौ विद्युद्भ्रान्तं तदुच्यते ॥ १२५ ॥
अतिक्रान्तक्रमं कृत्वा पुरस्तात् सम्प्रसारयेत् ।
प्रयोगवशगौ हस्तौ अतिक्रान्ते प्रकीर्तितौ ॥ १२६ ॥
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् ।

---

१ गतं--ख । २ क्रान्तं त्रिकं—क । ३ ०त् संप्रसारयेत्—क ।
४ सर्वतो मण्डलाबद्धं--ख ।

पुनश्च रेचयेद्धस्तं विवर्तिकमेव तत् ॥ १२७ ॥
कर्णेऽञ्चितः करो वामो लताहस्तश्च दक्षिणः ।
दोलापादस्तदा चैव गजक्रीडितके भवेत् ॥ १२८ ॥
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् ।
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते स्मृतौ ॥ १२९ ॥
पृष्ठप्रसारितः पादः लतारेचितकौ करौ ।
समुन्नतमुरश्चैव गरुडप्लुतके भवेत् ॥ १३० ॥
सूचीपादोन्नतं पार्श्वं एको वक्षःस्थितः करः ।
द्वितीयश्चाञ्चितो गण्डो गण्डसूचि तदुच्यते ॥ १३१ ॥
ऊर्ध्वावचेष्टितौ हस्तौ सूचीपादो विवर्तितः ।
परिवृत्तत्रिकश्चैव परिवृत्तं तदुच्यते ॥ १३२ ॥
एकः समुत्थितः पाद ऊरूपार्श्वस्थितः परः ।
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते ॥ १३३ ॥
पृष्ठप्रसारितः पादः किञ्चिदञ्चितजानुकः ।
यत्र प्रसारितौ बाहू तत्स्यात् गृध्रावलीनकम् ॥ १३४ ॥
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकस्थितौ ।
सन्नतौ च तथा हस्तौ सन्नतं तदुदाहृतम् ॥ १३५ ॥
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ।
प्रयोगवशगौ हस्तौ तत्सूचि परिकीर्तितम् ॥ १३६ ॥
वामः[2] पादः शिरोदेशे सूचीपादश्च दक्षिणः ।
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः ॥ १३७ ॥
पादसूच्या यदा पादौ द्वितीयस्तु प्रविध्यते ।
कटिवक्षः[3]स्थितौ हस्तौ सूचीविद्धं तदुच्यते ॥ १३८ ॥
कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसेत् ।
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते ॥ १३९ ॥
वृश्चिकं करणं कृत्वा रेचितौ[4] च तथा करौ ।

---

१ श्लोकोऽयं खपुस्तके न दृश्यते । २ अलं पद्मशिरोहस्त-क ।
३ देश-ख । ४ रेचितं च पदद्वयम्-क ।

४

तथा त्रिकं विवृत्तं च मयूरललितं भवेत् ॥ १४० ॥
अञ्चितापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च करौ यत्र तत्सर्पितमुदाहृतम् ॥ १४१ ॥
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् ।
क्षिप्रे[2]विद्धं करं चैव दण्डपादं तदुच्यते ॥ १४२ ॥
अतिक्रान्तं क्रमं कृत्वा समुत्प्लुत्य निवर्तयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता तद्विद्याद्धरिणप्लुतम् ॥ १४३ ॥
[3]दोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
परिवृत्तं त्रिकं चैतत् प्रेङ्खोलितकमुच्यते ॥ १४४ ॥
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली ।
बद्धाचारी तथा चैव नितम्बे[4] करणे भवेत ॥ १४५ ॥
दोलपादक्रमं कृत्वा हस्तौ तदनुगावुभौ ।
रेचितौ घूर्णितौवापि स्खलितं करणं भवेत् ॥ १४६ ॥
वामो वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके ॥ १४७ ॥
एकस्तु रेचितो हस्तो लताख्यश्च तथापरः ।
संसर्पिततलौ पादौ प्रसर्पितकमेव तत् ॥ १४८ ॥
अलातकं पुरस्कृत्वा द्वितीयश्च द्रुतक्रमम् ।
हस्तौ पादानुगौ चापि सिंहविक्रीडिते स्मृतौ ॥ १४९ ॥
पृष्ठः प्रसर्पितः पादः कुञ्चितावर्तितौ करौ ।
पुनस्तथैव कर्तव्यौ सिंहाकर्षितके द्विजाः ॥ १५० ॥
आक्षिप्तहस्तमाक्षिप्तपादमाक्षिप्तदेहकम् ।
उद्वृत्तगात्रमित्येतदुद्वृत्तं करणं स्मृतम् ॥ १५१ ॥
[5]आक्षिप्तश्चरणः कार्यौ हस्तौ तस्यैव चानुगौ ।
आनतं च तथा गात्रं तथोपसृतकं स्मृतम् ॥ १५२ ॥
दोलापादक्रमं कृत्वा तलसंघटितौ करौ ।

---

१ अनन्तरापसृतौ पादौ—ख। २ ०प्त—ख। ३ इदं श्लोकद्वयं क पुस्तके नास्ति। ४ नितान्त—ख। ५ अग्रत०—क।

रेचयेच्च करं वामं तलसंघट्टिते तथा ॥ १५३ ॥
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः।
लताग्रसंस्थितः पादो जनिते करणे भवेत् ॥ १५४ ॥
जनितं करणं कृत्वा हस्तौ चाभिमुखाङ्गुली।
शनैर्निपातितौ चैव ज्ञेयं तदवहित्थकम्[1] ॥ १५५ ॥
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च।
मण्डलं स्थानकं चैव निवेशकरणं तु तत् ॥ १५६ ॥
तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं तु यत्।
सन्नतं वलितं गात्रमेलकाक्रीडितं[2] तु तत् ॥ १५७ ॥
करमावृत्तकरणमूरुपृष्ठेञ्चिते न्यसेत्।
जङ्घाञ्चिता तथोद्वृत्ता तदूरूवृत्तमुच्यते ॥ १५८ ॥
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम्।
पादौ च वलिताविद्धौ मदस्खलितके द्विजाः ॥ १५९ ॥
पुरः प्रसारितः[3] पादः कुञ्चितो गमनोन्मुखः।
करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते ॥ १६० ॥
करमावर्त्तितं कृत्वा उरूपृष्ठे निकुञ्चयेत।
ऊरुश्चैव तदा विद्धः सम्भ्रान्तकरणं तु तत् ॥ १६१ ॥
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः।
वक्षस्थश्च करो वामो विष्कम्भे करणे भवेत ॥ १६२ ॥
पादावुद्घट्टितौ कार्यौ तलसङ्घट्टितौ करौ।
नितम्बपार्श्वे कर्त्तव्यौ बुधैरुद्घट्टिते सदा ॥ १६३ ॥
प्रयुज्यालातकं पादं हस्तौ द्वावपि रेचितौ।
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते स्मृतौ ॥ १६४ ॥
रेचितावञ्चितौ हस्तौ लोलितं वर्त्तितं शिरः।
उभयोः पार्श्वयोर्यत्र ज्ञेयं लोलितकं बुधैः ॥ १६५ ॥
स्खलितासपितौ पादौ तथा हस्तौ च रेचितौ।
परिवाहितं शिरश्चैव कुर्यान्नागावसर्पिते ॥ १६६ ॥

---

१ तत्तु बहिस्त्रिकम्—ख। २ ०त्रं मनि०—ख। ३ ०सर्पि०—ख।

निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत् ॥ १६७ ॥
ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधोमुखौ ।
हस्तौ शिरः सन्नतं च गङ्गावतरणं च तत् ॥ १६८ ॥
अष्टोत्तरशतं ह्येतत् करणानां मयोदितम् ।
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् ॥ १६९ ॥
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् ।
व्यंसितापसृतं सव्यमूर्ध्वं हस्तं प्रसारयेत् ॥ १७० ॥
प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं ततः कुर्यात् आक्षिप्तं स्वस्तिकं ततः ॥ १७१ ॥
नितम्बं करिहस्तश्च कटिच्छिन्नं तथैव च ।
स्थिरहस्तो भवेदेष त्वङ्गहारो हरप्रियः[1] ॥ १७२ ॥
तलपुष्पापविद्धे च वर्तितं सम्प्रसारयेत् ।
एषः पर्यस्तको नाम त्वङ्गहारो हरोद्भवः ॥ १७३ ॥
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च ।
आवर्तितं[2] ततः कुर्यात् तथैव च निकुट्टकम् ॥ १७४ ॥
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलकं तथा ।
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् ॥ १७५ ॥
अपविद्धं तु करणं सूचीविद्धं पुनर्भवेत् ।
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् ॥ १७६ ॥
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च ।
अपविद्धाङ्गहारस्तु विज्ञेयस्तत्प्रयोक्तृभिः ॥ १७७ ॥
करणं नूपुरं कृत्वा विक्षिप्तालातके पुनः ।
पुनराक्षिप्तकं कुर्यात् उरोमण्डलकं तथा ॥ १७८ ॥
नितम्बः करिहस्तश्च कटिच्छिन्नं तथैव च ।
आक्षिप्तकस्तु विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः ॥ १७९ ॥
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः ।

---

१ हनु०—क । २ ०रात्रिकं—ख ।

पुनस्तेनैव योगेन वामपार्श्वे भवेदथ ॥ १८० ॥
उरोमण्डलकौ हस्तौ नितम्बः करिहस्तकः।
कर्त्तव्यः स कटिच्छेदो नृत्तं तूद्घटिते बुधैः ॥ १८१ ॥
पर्यायोद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ।
कुञ्चितावाञ्चितौ च ऊरूद्वृत्तं तथैव च ॥ १८२ ॥
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम्।
भुजङ्गत्रासकं चैव करं चोद्वेष्टितं पुनः ॥ १८३ ॥
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु।
करिहस्तं कटिच्छिन्नं विष्कम्भः परिकीर्तितः ॥ १८४ ॥
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि।
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् ॥ १८५ ॥
निकुट्टकद्वयं कार्यमाक्षिप्तं मण्डलोरसा।
करिहस्तः कटिच्छेदः कर्त्तव्यस्त्वपराजिते ॥ १८६ ॥
कुट्टितं करणं कृत्वा भुजङ्गत्रासितं तथा।
रेचितेन तु हस्तेन पताकाहस्तमादिशेत् ॥ १८७ ॥
आक्षिप्तकं प्रयुञ्जीत उरोमण्डलकं तथा।
लताख्यं सकटिच्छेदं विष्कम्भापसृते भवेत् ॥ १८८ ॥
त्रिकं तु वलितं कृत्वा नूपुरं करणं तथा।
भुजङ्गत्रासितं सव्यं [2]चरणं चैव रेचितम् ॥ १८९ ॥
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च।
बा[3]ह्यभ्रमरकं कुर्यादुरोमण्डलमेव च ॥ १९० ॥
नितम्बः करिहस्तं च कटिच्छेदं तथैव च।
मत्ताक्रीडो भवेदेष अङ्गहारो भवेत् प्रियः ॥ १९१ ॥
रेचितं हस्तपादं च कृत्वा वृश्चिकमेव च।
पुनस्तेनैव योगेन कृत्वा वृश्चिकमेव तु ॥ १९२ ॥

---

१ श्लोकद्वयमिदं कपुस्तके नोपलभ्यते।
२ तथा वैशेष (ख) रेचितम्—ख।
३ एष श्लोकः खपुस्तके न दृश्यते।

निकुट्टकं तथा चैव सव्यासव्यकृतैः क्रमैः ।
लताख्यः सकटिच्छेदो भवेत स्वस्तिकरेचिते ॥ १९३ ॥
पार्श्वे तु स्वस्तिकं बुध्वा कार्यं त्वथ निकुट्टकम् ।
द्वितीयस्तु पार्श्वस्य विधिः स्यादेष एव हि ॥ १९४ ॥
ततश्च करमावृत्य ऊरूपृष्ठे निपातयेत ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव च ॥ १९५ ॥
नितम्बः करिहस्तश्च कटिच्छेदं तथैव च ।
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीतितः ॥ १९६ ॥
वृश्चिकं करणं कृत्वा लताख्यं हस्तमेव च ।
तमेव च करं भूयो नासाग्रे संन्निवेशयेत् ॥ १९७ ॥
तमेवोद्वेष्टितं कृत्वा नितम्बमथ वर्त्तयेत् ।
करिहस्तं कटिच्छेदं वृश्चिके सम्प्रयोजयेत् ॥ १९८ ॥
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च ।
कटिच्छिन्नं तु कर्त्तव्यं सूचीपादं तथैव च ॥ १९९ ॥
नितम्ब करिहस्तश्च उरोमण्डलकं तथा ।
कटिच्छेदं ततश्चैव भ्रमरः स तु संज्ञितः ॥ २०० ॥
मतल्लिकरणं कृत्वा करमावृत्य दक्षिणम् ।
कपोलस्य प्रदेशे तु कर्त्तव्यं तु निकुञ्चितम् ॥ २०१ ॥
अपविद्धं तथा चैव तलसंस्फोटितं तथा ।
करिहस्तः कटिच्छेदो मत्तस्खलितकं भवेत् ॥ २०२ ॥
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः पदैः ।
अञ्चितैर्वलितैर्हस्तैः तलसंघटितैस्तथा ॥ २०३ ॥
निकुट्टितं च कर्तव्यमूरूद्वृत्तं तथैव च ।
करिहस्तं कटिच्छिन्नं मदाद्विलसिते भवेत् ॥ २०४ ॥
मण्डलस्थानकं कृत्वा तथा हस्तौ च रेचितौ ।
उद्घट्टितेन पादेन मतल्लीकरणं भवेत् ॥ २०५ ॥
आक्षिप्तकरणं चैव उरोमण्डलकं तथा ।

---

१ संनिकुञ्चयेत्—ख । २ ०कापसृते भवेत्—ख ।

कटिच्छेदं तथा चैव भवेत्तु गतिमण्डले ॥ २०६ ॥
समपादं प्रयुज्याथ परिच्छिन्नस्त्वनन्तरम् ।
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा ॥ २०७ ॥
वामं सूच्या स्वतिक्रान्तं भुजङ्गत्रासितं तथा ।
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं पदमेव च ॥ २०८ ॥
पराङ्मुखीविधिर्भूयादेवमेव भवेदिह ।
करिहस्तः कटिच्छेदः परिवृत्तकरेचिते ॥ २०९ ॥
रेचितौ सह गात्रेण ह्यपविद्धौ करौ तथा ।
पुनस्तेनैव देशेन गात्रमुन्नम्य रेचयेत ॥ २१० ॥
[1]कार्थं नूपुरपादं च भुजङ्गत्रासितं तथा ।
रोचितं मण्डलं चैव बाहुशीर्षं निकुञ्चयेत ॥ २११ ॥
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।
करिहस्तं कटिच्छेदं कुर्याद्वैशाखरेचिते ॥ २१२ ॥
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् ।
[2]तथैवालातकं कुर्यात् त्रिकं तु परिवर्तयेत् ॥ २१३ ॥
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् ।
कटिच्छिन्नं तथा चैव परावृत्तं प्रयोजयेत् ॥ २१४ ॥
स्वस्तिकं करणं कृत्वा व्यंसितौ च करौ ततः ।
अलातकं प्रयुञ्जीत ऊर्ध्वजानु निकुञ्चितम् ॥ २१५ ॥
अर्धसूचीव विक्षिप्तमुद्घृताक्षिप्तके तथा ।
करिहस्तं कटिच्छेदो त्वङ्गहारे त्वलातके ॥ २१६ ॥
निकुञ्च्य वक्षसि करौ ऊर्ध्वजानु प्रयोजयेत् ।
आक्षिप्तं स्वस्तिकं कृत्वा त्रिकं तु परिवर्त्तयेत् ॥ २१७ ॥
उरोमण्डलकौ हस्तौ नितम्बः करिहस्तकः ।
कटिच्छेदस्तथा चैव पार्श्वच्छेदे विधीयते ॥ २१८ ॥
सूचीं वामपदं दद्यात् विद्युद्भ्रान्तं च दक्षिणम् ।

---

१ अयं सार्धश्लोकः खपुस्तके न दृश्यते । २ अयं सार्धश्लोकः कपुस्तके नोपलभ्यते ।

दक्षिणेन पुनः सूची विद्युद्भ्रान्तश्च वामतः ॥ २१९ ॥
परिच्छिन्नं तथा चैवं त्रिकं तु परिवर्तयेत् ।
लताख्यं सकटिच्छेदं विद्युद्भ्रान्तश्च सस्मृतः ॥ २२० ॥
कृत्वा नूपुरपादं तु सव्यवामौ प्रलम्बितौ ।
करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं संप्रयोजयेत् ॥ २२१ ॥
ताभ्यां सूची तथा चैव त्रिकं तु परिवर्त्तयेत् ।
लताख्यं सकटिच्छेदं कुर्यादुद्धृतके सदा ॥ २२२ ॥
आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् ।
नूपुरश्चरणो वामः तथालातश्च दक्षिणः ॥ २२३ ॥
तेनैवाक्षिप्तकं कुर्यात् उरोमण्डलकौ करौ ।
करिहस्तं कटिच्छेदं त्वालीढं संप्रयोजयेत् ॥ २२४ ॥
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत् ।
पुनस्तेनैव योगेन गात्रमुन्नम्य रेचयेत् ॥ २२५ ॥
[1]कार्यं नूपुरपादं च भुजङ्गत्रासितं तथा ।
रेचितं करणं कुर्यादुरोमण्डलमेव च ॥ २२६ ॥
कटिच्छेदस्तु कर्तव्यो ह्यङ्गहारे तु रेचिते ।
नूपुरं करणं कृत्वा त्रिकं तु परिवर्तयेत् ॥ २२७ ॥
व्यंसितेन तु हस्तेन त्रिकं चैव निवर्त्तयेत् ।
वामं चालातकं कृत्वा सूचीं तत्रैव योजयेत् ॥ २२८ ॥
करिहस्तं कटिच्छेदं कुर्यादाच्छुरितं तथा ।
रेचितौ स्वस्तिकौ पादौ रेचितौ स्वस्तिकौ करौ ॥ २२९ ॥
कृत्वा विश्लेषमेवं तु तेनैव विधिना पुनः ।
पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् ॥ २३० ॥
उद्वृत्ताक्षिप्तकं चैव उरोमण्डलमेव च ।
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ॥ २३१ ॥
आक्षिप्तरेचकष्वेषः करणानां विधिः स्मृतः ।
विक्षिप्तं करणं कृत्वा हस्तपादमुखानुगम् ॥ २३२ ॥

---

१ श्लोकार्धमिदं खपुस्तके नास्ति।

वामसूचीकरं कृत्वा विक्षिपेद् वामकं करम् ।
वक्षःस्थं च भवेत्सव्यो वलितं त्रिकमेव च ॥ २३३ ॥
नूपुराक्षिप्तके चैव अर्धस्वस्तिकमेव च ।
नितम्बं करिहस्तं च स्यादुरोमण्डलं तथा ॥ २३४ ॥
कटिच्छेदश्च कर्तव्यः संभ्रान्ते नृत्तयोक्तृभिः ।
अपक्रान्तक्रमं कृत्वा व्यंसितं हस्तमेव च ॥ २३५ ॥
कुर्यादुद्वेष्टितं चैव अर्धसूचीं तथैव च ।
विक्षिप्तं सकटिच्छेदमुद्वृत्ताक्षिप्तके तथा ॥ २३६ ॥
करिहस्तं कटिच्छिन्नं कर्तव्यमुपसर्पिते ।
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् ॥ २३७ ॥
पादस्य चानुगौ हस्तौ त्रिकं तु परिवर्तयेत् ।
निकुट्य करपादं चाप्युरोमण्डलकं पुनः ॥ २३८ ॥
करिहस्तः कटिच्छेदः कार्यस्त्वर्धनिकुट्टके ।
द्वात्रिंशदेते संप्रोक्तास्त्वङ्गहारा द्विजोत्तमाः ॥ २३९ ॥
चतुरो रेचकांश्चैव गदतो मे निबोधत ।
पादरेचक एकः स्यात् द्वितीयः कटिरेचकः ॥ २४० ॥
कररेचस्तृतीयस्तु चतुर्थः कण्ठरेचकः ।
रेचितारुयः पृथग्भावे वलने चाभिधीयते ॥ २४१ ॥
उद्वाहनात् पृथग्भावात् वलनाचापि रेचकः ।
पार्श्वात् पार्श्वे तु गमनं स्खलितैः चलितैः पदैः ॥ २४२ ॥
विविधश्चैव पादस्य पादरेचक उच्यते ।
त्रिकस्योद्वर्तनं चैव कटीचलनमेव च ॥ २४३ ॥
तथापसर्पणं चैव कटीरेचक उच्यते ।
उद्वर्तनं परिक्षेपो विक्षेपपरिवर्तनम् ॥ २४४ ॥
विसर्पणं च हस्तस्य हस्तरेचक उच्यते ।
उद्वाहनं सन्नमनं तथा पार्श्वस्य सन्नतिः ॥ २४५[1] ॥
भ्रमणं चापि विज्ञेयो ग्रीवाया रेचको बुधैः ।

---

१ एतत् सार्धश्लोकषट्कं खपुस्तके नोपलभ्यते ।

रेचकैरंगहारैश्च नृत्यन्तं वीक्ष्य शंकरम् ॥ २४६ ॥
सुकुमारप्रयोगेण नृत्यति स्म च पार्वती ।
मृदङ्गभेरीपटहैः भाण्डडिंडिमगोमुखैः ॥ २४७ ॥
पणवैर्दर्दुराद्यैश्च नानातोद्यैः प्रवादितैः ।
दक्षयज्ञे विनिहते सन्ध्याकाले महेश्वरः ॥ २४८ ॥
नानाङ्गहारैः प्रानृत्यल्लयतालवशानुगैः ।
डिंडिमभ्रान्ततो दृष्ट्वा नन्दीभद्रमुखा गणाः ॥ २४९ ॥
चक्रुर्नामानि पिण्डीनां बन्धांश्चैव सलक्षणान् ।
ऐश्वरी वृषपिण्डी च नन्दिनश्चापि पादपी ॥ २५० ॥
चण्डिकाया भवेत् पिण्डी तथा वै सिंहवाहिनी ।
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयंभुवः ॥ २५१ ॥
शक्रस्यैरावती पिण्डी झषपिण्डी तु मान्मथी ।
शिखिपिण्डी कुमारस्य रूपपिण्डी भवेच्छ्रियः ॥ २५२ ॥
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य तु ।
वारुणी च नदीपिण्डी याक्षी स्याद्धनदस्य च ॥ २५३ ॥
हलपिण्डो बलस्याथ सर्पपिण्डी तु भोगिनाम् ।
गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी ॥ २५४ ॥
त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्तकद्विषः ।
एवमन्यास्वपि तथा देवतासु यथाक्रमम् ॥ २५५ ॥
वज्रभूताः प्रयोक्तव्याः पिण्डीबन्धाः सुचिन्हिताः ।
रेचिताश्चाङ्गरागाश्च पिण्डीबद्धास्तथैव च ॥ २५६ ॥
सृष्ट्वा भगवता दत्तस्ताण्डिने मुनये तथा ।
ताण्डिनापि ततः सम्यग्गानभाण्डसमन्वितः ॥ २५७ ॥
नृत्यप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः ।

ऋषय ऊचुः ।

यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः कृतः ॥ २५८ ॥
तस्मान्नृत्ते कृते ह्येतत् तत्स्वभावपेक्षते ।
न गीतकार्थसम्बन्धो न वाच्यार्थस्य भावकम् ॥ २५९ ॥

कस्मान्नृत्तं कृतं ह्येतत् गीतेष्वासारितेषु च ।

भरत उवाच ।

अत्रोच्यते न खल्वर्थं नृत्तं कञ्चिदपेक्षते ॥ २६० ॥
किन्तु शोभां जनयतीत्यतो नृत्तमिदं स्मृतम् ।
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ॥ २६१ ॥
मङ्गल्यमिति कृत्वा च नृत्तमेतत् प्रकीर्तितम् ।
विवाहप्रसवावाहप्रमोदाभ्युदयादिषु ॥ २६२ ॥
विनोदकरणं चैव नृत्तमेतत् प्रकीर्तितम् ।
अतश्चैव प्रतिक्षेपाः भूतसङ्घैः प्रकीर्तिताः ॥ २६३ ॥
ये गीतकादौ युज्यन्ते सम्यङ् नृत्तविभावकाः ।
देवेन वापि संप्रोक्तस्ताण्ड्यस्ताण्डवपूर्वकः ॥ २६४ ॥
गीतप्रयोगमाश्रित्य नृत्यमेतत् प्रनृत्यताम् ।
प्रायेण ताण्डवविधिर्देवस्तुत्याश्रयो भवेत् ॥ २६५ ॥
सुकुमारप्रयोगस्तु शृङ्गाररससंभवः ।
तस्य ताण्ड्यप्रयुक्तस्य ताण्डवस्य विधिक्रियाम् ॥ २६६ ॥
वर्धमानकमासाद्य संप्रवक्ष्यामि लक्षणम् ।
कलानां वृद्धिमासाद्य त्वक्षराणां च वर्धनात् ॥ २६७ ॥
लक्ष्यस्य बन्धनाच्चापि वर्धमानकमुच्यते ।
कृत्वा कुतपविन्यासं यथावद्विजसत्तमाः ॥ २६८ ॥
आसारितः प्रयोगस्तु ततः कार्यः प्रयोक्तृभिः ।
तत्र चोपोहनं कृत्वा तन्त्रीभाण्डसमन्वितम् ॥ २६९ ॥
कार्यः प्रवेशो नर्तक्या भाण्डवाद्यसमन्वितः ।
विशुद्धकरणायां तु जात्यां वाद्यं प्रयोजयेत् ॥ २७० ॥
गीत्या वाद्यानुसर्पिण्या ततश्चारीं प्रयोजयेत् ।
वैशाखस्तालकेनेह सर्वरेचकचारिणी ॥ २७१ ॥
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् ।
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च ॥ २७२ ॥
प्रणम्य देवताभ्यस्तु ततोऽभिनयमाचरेत् ।

यत्राभिनेयगीतं स्यात् तत्र वाद्यं न योजयेत् ।। २७३ ।।
अङ्गहारप्रयोगे तु भाण्डवाद्यं प्रयोजयेत् ।
समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम् ।। २७४ ।।
नृत्ताङ्गग्राहिवाद्यज्ञैर्योज्यं वाद्यं तु ताण्डवे ।
प्रयुज्य गीतमेवं तु निष्क्रामेन्नर्तकी ततः ।। २७५ ।।
अनेनैव विधानेन प्रविशन्त्यपराः पुनः ।
अन्याश्चानुक्रमेणाथ पिण्डीं बध्नन्ति ताः स्त्रियः ।। २७६ ।।
तावत् पर्यस्ततः कार्यो यावत् पिण्डी प्रयुज्यते ।
पिण्डीं बध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः ।। २७७ ।।
पिण्डीषट्केषु वाद्यं हि कर्तव्यमिह वादकैः ।
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् ।। २७८ ।।
अथोपवहनं भूयः कार्यं पूर्ववदेव हि ।
ततश्चासारितं भूयो गायनं तु प्रयोजयेत् ।। २७९ ।।
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी ।
गीतकार्थप्रयोगश्च द्वितीयासारितस्य तु ।। २८० ।।
तदेव तु पुनर्वस्तु नृत्तेनापि प्रयोजयेत् ।
आसारितसमाप्तौ च निष्क्रामेन्नर्तकी ततः ।। २८१ ।।
पूर्ववत् प्रविशेच्चान्या प्रयोगः स्यात् स एव तु ।
एवं पदे पदे कार्यो विधिरासारितस्य तु ।। २८२ ।।
भाण्डवाद्यकृतश्चैव तथा गानकृतोऽपि च ।
एकां तु प्रथमां कुर्यात् द्वे द्वितीयं तु वस्तुकम् ।। २८३ ।।
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् ।
पिण्डीनां विधयश्चैव चत्वारः संप्रकीर्तिताः ।। २८४ ।।
पिण्डीशृङ्खलिता चैव लताबन्धोऽथ भेद्यकः ।
पिण्डीबन्धस्तु पिण्डत्वात् गुल्मशृङ्खालिका भवेत् ।। २८५ ।।
तालोपनद्धाश्च लताः स नृत्तो भेदकः स्मृतः ।
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयान्तरे ।। २८६ ।।

१ श्लोकोऽयं कपुस्तके नोपलभ्यते ।

मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः ।
पिण्डीनां द्विविधो योनिर्यज्ञं भद्रासनं तथा ॥ २८७ ॥
शिक्षाः कार्यास्तथा चैव प्रयोक्तव्याः प्रयोक्तृभिः।
एवं प्रयोगः कर्त्तव्यो वर्धमाने प्रयोक्तृभिः ॥ २८८ ॥
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं विधिम् ।
यानि वस्तूनि बद्धानि यानि चाङ्गकृतानि च ॥ २८९ ॥
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः ।
यत्रावतरणं कार्यं नर्त्तक्या सार्वभाण्डिकम् ॥ २९० ॥
छेदप्रतिक्षेपकृतं भाण्डोपोहनसंस्कृतम् ।[1]
प्रथमं त्वभिनेयं तु गीतके सर्ववस्तु तत् ॥ २९१ ॥[2]
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् ।
यो विधिः पूर्वमुक्तस्तु वृत्ताभिनयवादिते ॥ २९२ ॥
आसारितविधौ स स्यात् गीतानां वस्तु तेष्वपि ।
एष वस्तुनिबन्धानां गीतकानां विधिः स्मृतः ॥ २९३ ॥
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् ।
य एव वस्तुकविधिर्नृत्ताभिनयवादिते ॥ २९४ ॥
स[3] सर्व एव कर्त्तव्यः छन्दकेषु प्रयोक्तृभिः ।
वाद्यं गुर्वक्षरकृतं तथाऽल्पाक्षरमेव च ॥ २९५ ॥
मुखे सापोहने कुर्याद्वर्णानां विप्रकर्षकः ।
यदा[4] गीतवशादङ्गं भूयो भूयो निवर्तते ॥ २९६ ॥
तत्राद्यमभिनेयं स्याच्छेषं नृत्तेन योजयेत ।
यदा गीतवशादङ्गं भूयो भूयो निवर्तयेत् ॥ २९७ ॥
त्रिपाणिलयसयुक्तं तत्र वाद्यं प्रयोजयेत् ।
यथा लयस्तथा वाद्यं कर्त्तव्यं त्वङ्गसंश्रयम् ॥ २९८ ॥
तत्त्वं[5] चानुगतं चापि ओघं च करणान्वितम् ।

---

१. तन्त्रीगणसमन्वितम्–ख ।  २. कर्मवस्तुकम्–ख ।
३. ताम (तमे) वाङ्गनिबद्धेषु च्छन्दकेष्वपि योजयत्–ख ।
४. श्लोकार्द्धमिदं खपुस्तके न दृश्यते ।
५. एतत् सार्धश्लोकत्रयं खपुस्तके नोपलभ्यते ।

स्थिरे तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ॥ २९९ ॥
भूयश्चौघः प्रयोक्तव्यः त्वेष वाद्यगतो विधिः ।
छन्दोगीतकमासाद्य त्वङ्गानि परिवर्तयेत् ॥ ३०० ॥
एष कार्यो विधिर्नृत्यनृत्ताभिनयवादिते ।
यानि वस्तूनि बद्धानि तेषामन्ते ग्रहो भवेत् ॥ ३०१ ॥
अङ्गानां तु परावृत्तापदावत्र ग्रहो मतः ।
एवमेष विधिः कार्यो गीतेष्वासारितेषु च ॥ ३०२ ॥
देवस्तुत्याश्रयं ह्येतत् सुकुमारं निबोधत ।
स्त्रीपुंसयोस्तु संलापो यस्तु कामसमुद्भवः ॥ ३०३ ॥
तद् ज्ञेयं स्वकृताराम्भि शृङ्गाररससम्भवम् ।
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः ॥ ३०४ ॥
सर्वगीतकसम्बन्धं तच्च मे शृणुत द्विजाः ।
अङ्गवस्तुनिवृत्तौ च तथा वर्णनिवृत्तिषु ॥ ३०५ ॥
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत ।
यत्र संदृश्यते किञ्चिद् दंपत्योर्मदनाश्रयम् ॥ ३०६ ॥
तत्र नृत्तं प्रयोक्तव्यं [1]प्रहर्षार्थगुणोद्भवम् ।
यत्र सान्निहिते कान्ते ऋतुकालादिदर्शनम् ॥ ३०७ ॥
गीतकार्थाभिसम्बन्धं नृत्तं तत्रापि चेष्यते ।
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ॥ ३०८ ॥
यस्मिन्नङ्गे तु युवतिर्नृत्तं तत्र प्रयोजयेत् ।
[2]संप्रवृत्तेऽथ संलापे तथा सन्निहिते प्रिये ॥ ३०९ ॥
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ।
[3]दूत्याश्रयं यदा तु स्यात् ऋतुकालादिदर्शनम ॥ ३१० ॥
औत्सुक्यचिन्तासम्बन्धं नृत्तं तत्र प्रयोजयेत् ।
यस्मिन्नङ्गे [4]प्रसादं तु गृह्णीयान्नायिका क्रमात् ॥ ३११ ॥
ततः प्रभृति नृत्तं तु शेषेष्वङ्गेषु योजयेत ।

---

१. पुरुषार्थ-ख । २. सखीप्रवृत्त-ख ।
३. श्लोकोऽयं खपुस्तके नास्ति । ४. प्रयोगं-क ।

देवस्तुत्याश्रयगतं यदङ्गं तु भवेदिह ॥ ३१२ ॥
माहेश्वरैरङ्गहारैरुद्धतैस्तत् प्रयोजयेत् ।
यत्र शृङ्गारसम्बन्धं गानं स्त्रीपुरुषाश्रयम् ॥ ३१३ ॥
देवैः[1] कृतैरङ्गहारैर्ललितैः तत् प्रयोजयेत् ।
चतुष्पदा नकुटके खञ्जके परिधानके[2] ॥ ३१४ ॥
विधानं सम्प्रवक्ष्यामि भाण्डनृत्तविधिं प्रति ।
खञ्जनं कुटसंयुक्ता भवेद्या तु चतुष्पदा ॥ ३१५ ॥
पादान्ते सन्निपाते तु तस्या भाण्डग्रहो भवेत् ।
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा ॥ ३१६ ॥
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ।
कृत्वैकं परिवर्तं तु गानस्याभिनये पुनः ॥ ३१७ ॥
पुनः पादनिवृत्तौ तु भाण्डवाद्यं नियोजयेत ।
अङ्गवस्तुनिवृत्तेन वर्णान्तरनिवृत्तिषु ॥ ३१८ ॥
ततोऽवस्थापने चैव भाण्डवाद्यं प्रयोजयेत् ।
येऽपि चान्तरमार्गाःस्युस्तैरन्या[3] वा करणैः कृताः ॥ ३१९ ॥
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे ।
महेश्वरस्य चरितं य इदं संप्रयोजयेत् ॥ ३२० ॥
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ।
एवमेष विधि सृष्टस्ताण्डवस्य प्रयोगतः ॥ ३२१ ॥
भूयः किं कथ्यतां विप्रा नाट्ययोगविधिं प्रति ।

इति भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम
चतुर्थोऽध्यायः ।

## अथ पञ्चमाध्यायप्रारम्भः ।

भरतस्य वचः श्रुत्वा नाट्यसन्तानकारणम् ।
पुनरेवाब्रुवन् वाक्यमृषयो हृष्टमानसाः ॥ १ ॥
यथा नाट्यस्य वै जन्म जर्जरस्य च सम्भवः ।
विघ्नानां शमनं चैव देवतानां च पूजनम् ॥ २ ॥

---

१ ०वी–ख । २ ०जातके–ख । ३ तन्त्रीवाक्षारणैः–ख ।

त्वत्तः श्रुतं गृहीतं च गृहीत्वा चावधारितम् ।
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः ॥ ३ ॥
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम् ।
यथा बुध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि ॥ ४ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति ॥ ५ ॥
पूर्वरङ्गं महाभागा गदतो मे निबोधत ।
पादभागाः कलाश्चैव परिवर्त्तास्तथैव च ॥ ६ ॥
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयोज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयोऽत्र द्विजोत्तमाः ॥ ७ ॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा ॥ ८ ॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥ ९ ॥
संघोटना[1] ततः कार्या मार्गोत्सारितमेव च ।
ज्येष्ठमध्यकनिष्ठा च तथैवासारितक्रिया ॥ १० ॥
एतानि च बहिर्गीतान्यन्तर्यवनिकागतैः ।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि तु ॥ ११ ॥
ततश्च सर्वकुतपैर्युक्तान्यन्यानि कारयेत् ।
विघाट्य वै यवनिकां नृत्यपाठ्यकृतानि च ॥ १२ ॥
गीतानां मुद्रकादीनामेकं योज्यं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥ १३ ॥
ततश्चोत्थापनं कार्यं परिवर्तकमेव च ।
नान्दी शुष्कापकृष्टा च रङ्गद्वारं तथैव च ॥ १४ ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥ १५ ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ तु च ।

---

१ संस्वो ( स्व ) दना-ख ।

एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ १६ ॥
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः।
तथावतरणं प्रोक्तं गायकानां निवेशनम् ॥ १७ ॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः।
आतोद्यरञ्जनानर्थं तु भवेदाश्रावणा विधिः ॥ १८ ॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते।
तन्त्र्येजस्तरणार्थं तु भवेच्च परिघट्टना ॥ १९ ॥
तथा पाणिविभागार्थं भवेत् संघोटनाविधिः।
तन्त्रीभाण्डसमायोगान् मार्गोत्सारितमिष्यते ॥ २० ॥
कालपातविभागार्थं भवेदासारितक्रिया।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥ २१ ॥
अतः परं प्रवक्ष्यामि चोत्थापनविधिक्रियाम्।
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ॥ २२ ॥
पूर्वमेव तु रङ्गेऽस्मिन् तस्मादुत्थापनं स्मृतम्।
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ॥ २३ ॥
वन्दनानि प्रकुर्वन्ति तस्मात्तु परिवर्त्तनम्।
आशीर्वचनसंयुक्ता नित्यं यस्मात प्रवर्त्तते ॥ २४ ॥
देवद्विजनृपादीनां तस्मान् नान्दीति संज्ञिता।
यत्र शुष्काक्षरैरेव ह्यपकृष्टा ध्रुवा यतः ॥ २५ ॥
तस्माच्छुष्कावकृष्टेव जर्जरश्लोकदर्शिता।
यस्मादभिनयस्तत्र प्रथमं ह्यवतार्यते ॥ २६ ॥
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्।
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ॥ २७ ॥
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता।
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः ॥ २८ ॥
यत्र कुर्वन्ति सञ्जल्पं तत्रापि त्रिगतं स्मृतम्।
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ॥ २९ ॥

---

१. तन्त्रौज ( ? ) क०–ख। २ कालाभाङ्ग–क।
३. उपक्षेपणकार्यस्य–ख। ४ व्युपक्रिया–ख।

सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना।
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम्॥ ३०॥
बहिर्गीतविधौ सम्यगुत्पत्तिं करणं तथा।
चित्तदक्षिणवृत्तौ[1] तु सप्तरूपे प्रवर्तिते॥ ३१॥
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते।
नारदाद्यैश्च गन्धर्वैः सभायां देवदानवाः॥ ३२॥
निर्गीतं श्राविता सम्यक् लयतालसमन्वितम्।
तच्छ्रुत्वा तु समं गानं देवस्तुत्यभिनन्दितम्॥ ३३॥
अभवन् क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः।
संप्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः॥ ३४॥
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम्।
सप्तरूपेण सन्तुष्टा देवाः कर्मानुकीर्तनात्॥ ३५॥
एवं गृह्णीम निर्गीतं तुष्यामोऽत्रैव वै वयम्।
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः॥ ३६॥
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम्।
एते तुष्यन्ति निर्गीते दानवाः सह राक्षसैः॥ ३७॥
प्रणश्यतु प्रयोगोऽयं कथं वै मन्यते भवान्।
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत्॥ ३८॥
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु।
किन्तूपोहनसंयुक्तं धातुवाक्यविभूषितम्॥ ३९॥
भविष्यतीदं निर्गीतं सप्तरूपविधानतः।
निर्गीतेनावबद्धास्तु दैत्यदानवराक्षसाः॥ ४०॥
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः।
एतन्निर्गीतमेवं तु दैत्यानां स्पर्धया द्विजाः॥ ४१॥
देवानां बहुमानेन बहु गीतमिदं स्मृतम्।
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम्॥ ४२॥
वर्णालङ्कारसंयुक्तं प्रयोक्तव्यं बुधैरथ।

---

१. चित्रदाक्षिणव्यक्ते-ख।

निर्गीतं गीयते यस्मादपदं वर्णयोजनात् ॥ ४३ ॥
असूयया च देवानां बहिर्गीतमिदं स्मृतम् ।
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् ॥ ४४ ॥
उत्थापनादिकं यच्च तस्य कारणमुच्यते ।
तुष्यन्त्यप्सरसस्तत्र कृतेऽवतरणे द्विजाः ॥ ४५ ॥[1]
तुष्यन्त्यपि च गन्धर्वा आरम्भे सम्प्रयोजिते ।
आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति सर्वशः ॥ ४६ ॥
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ।
परिघट्टनायां तुष्टाः स्युः युक्तायां रक्षसां गणाः ॥ ४७ ॥
संघोटनक्रियायां च तुष्यन्त्यपि च गुह्यकाः ।
मार्गासारितमासाद्य तुष्टा यक्षा भवन्ति हि ॥ ४८ ॥
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ।
वर्द्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः ॥ ४९ ॥
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ।
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्त्तने ॥ ५० ॥
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः ।
युक्तायामपकृष्टायां प्रीता नागा भवन्ति हि ॥ ५१ ॥
तथा[2] शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ।
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ॥ ५२ ॥
जर्जरस्य प्रयोगे तु तुष्टाः विघ्नविनायकाः ।
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ॥ ५३ ॥
रङ्गप्रयोगमाचार्य (चर्य) तुष्टो भूतगणै (णो) भवेत् ।
प्र[3]त्याहारादि चार्यन्तमेतद्दैवतपूजनम् ॥ ५४ ॥
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ।
देवस्तुष्यति यो येन यस्य यन्मनसः प्रियम् ॥ ५५ ॥
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ।

---

१. श्लोकोऽयं खपुस्तके नोपलभ्यते ।
२. सार्धश्लोकद्वयमिदं कपुस्तके नास्ति । ३. आश्रावणादि- ख ।

सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ॥ ५६ ॥
धर्म्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्त्तनम् ।
दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् ॥ ५७ ॥
निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु ।
या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम् ॥ ५८ ॥
लोका लोकस्य जगतः तदस्मिन् नाटकाश्रये ।
निर्गीतानां सगीतानां वर्धमानस्य चैव हि ॥ ५९ ॥
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ।
प्रयुज्य गीतकविधिं वर्धमानं तथैव च ॥ ६० ॥
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ।
आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा ॥ ६१ ॥
गुर्वक्षराणि जानीयात् पादे ह्येकादशाक्षरे ।
चतुष्पदा भवेत् सा तु चतुरस्रे तथैव च ॥ ६२ ॥
चतुर्भिः स्सन्निपातैश्च त्रिलया त्रियतिस्तथा ।
परिवर्त्तास्तु चत्वारः पाणयस्त्रय एव च ॥ ६३ ॥
जात्यां चैव हि विश्लोकास्तांश्च तालेन योजयेत् ।
शम्या तु द्विकला कार्या तालो द्विकल एव च ॥ ६४ ॥
पुनश्चैककला शम्या सन्निपातः कलात्रयम् ।
एवमष्टकलः कार्यः सन्निपातो विचक्षणैः ॥ ६५ ॥
चत्वारः संनिपातास्तु परिवर्त्तस्य उच्यते ।
पूर्वस्थितिलयः कार्यः परिवर्तो विचक्षणैः ॥ ६६ ॥
तृतीये सन्निपाते तु तस्य भाण्डग्रहो भवेत् ।
एकस्मिन् परिवर्त्ते तु गते प्राप्ते द्वितीयके ॥ ६७ ॥
कार्यं मध्यलयं तज्ज्ञैः सूत्रधारप्रवेशनम् ।
पुष्पाञ्जली समादाय रक्षामङ्गलसंस्कृताः ॥ ६८ ॥
शुद्धवर्णाः सुमनसस्तथा चाद्भुतदृष्टयः ।

---

१. सार्धश्लोकद्वयमेतत् खपुस्तके नोपलभ्यते ।
२. श्लोकद्वयमिदं कपुस्तके न दृश्यते । ३. श्रये-क ।

स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ॥ ६९ ॥
दीक्षिताः शुचयश्चैव प्रविशेयुः समं[1] त्रयः।
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्वकौ ॥ ७० ॥
मध्ये तु सूत्रधृक् ताभ्यां वृतः पञ्चपदीं व्रजेत्।
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया ॥ ७१ ॥
पादानां चापि विक्षेपं व्याख्यास्यामि यथाक्रमम्।
[2]त्रिकालान्तरविष्कम्भमुत्क्षिपेच्चरणं शनैः ॥ ७२ ॥
पार्श्वोत्थानोत्थितश्चैव तन्मध्ये पातयेत् पुनः।
एवं पञ्चपदीं गत्वा सूत्रधारः सहेतरैः ॥ ७३ ॥
सूचीं वामपदं दद्यात् विक्षेपं दक्षिणेन तु।
पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मेऽथ मण्डले ॥ ७४ ॥
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः।
ततः सललितैर्हस्तैरभिवन्द्य पितामहम् ॥ ७५ ॥
अभिवादनानि कार्याणि त्रीणि हस्तेन भूतले।
कालप्रकर्षहेतोश्च पादानां प्रविभागतः ॥ ७६ ॥
सूत्रधारप्रवेशाद्यो वन्दनाभिनयानु[3]गः।
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रयः ॥ ७७ ॥
अतः परं तृतीयस्तु मण्डपस्य प्रदक्षिणम्।
भवेदाचमनं चैव जर्जरग्रहणं तथा ॥ ७८ ॥
उत्थाय मण्डलात् तूर्णं दक्षिणं पादमुद्धरेत्।
तेनैव वेधं कुर्वीत विक्षेपं वामकेन च ॥ ७९ ॥
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत्।
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य तु ॥ ८० ॥
इत्यनेन विधानेन सम्यक् कृत्वा प्रदक्षिणम्।
भृङ्गारधारमाहूय शौचं चापि समाचरेत ॥ ८१ ॥
यथान्यायं तु कर्त्तव्या तेन ह्याचमनक्रिया।
आत्मप्रोक्षणमेवाद्भिः कर्त्तव्यं तु यथाक्रमम् ॥ ८२ ॥

---

१ समाश्रयाः-क। २ एष श्लोकः खपुस्तके नास्ति। ३. ऽन्यतः।

प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ।
सन्निपातसमग्राह्यो जर्जरो विघ्नजर्जरः ॥ ८३ ॥
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ।
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये ॥ ८४ ॥
गृहीत्वा जर्जरं चाष्टौ कला जाप्यं प्रयोजयेत् ।
वामवेधस्ततः कार्यो विक्षेपो दक्षिणेन तु ॥ ८५ ॥
ततः पञ्चपदीं चैव गच्छेत् तु कुतपोन्मुखः ।
जर्जरग्रहणाद्योऽयं कुतपाभिमुखान्तगः ॥ ८६ ॥
चतुर्थः परिवर्त्तस्तु विज्ञेयो वै द्रुते लये ।
करपातनिपातास्तु भवन्त्यत्र तु षोडश ॥ ८७ ॥
त्र्यस्रे तु द्वादशपदा भवन्ति करपादजाः ।
वन्दनान्यथ[1] कार्याणि त्रीणि हस्तेन भूतले ॥ ८८ ॥
आत्मप्रोक्षणमद्भिश्च त्र्यस्रेनैव विधीयते ।
एवमुत्थापनं कार्यं ततश्च परिवर्तनम् ॥ ८९ ॥
चतुरस्रे लये मध्ये सन्निपातस्तथाष्टभिः ।
यस्यां लघूनि सर्वाणि केवलं निधनं गुरु ॥ ९० ॥
भवेदतिजगत्यां तु सा ध्रुवा परिवर्त्तिनी ।
वामकेन[2] तु मार्गेण वाद्येनानुगतेन च ॥ ९१ ॥
ललितैः पादविन्यासैः वन्द्या देवा यथादिशम् ।
द्विकलं[3] पादपतनं पादचर्यां विधीयते ॥ ९२ ॥
एकैकस्यां दिशि तथा सन्निपातद्वयं भवेत् ।
वामपादेन वेधस्तु कर्त्तव्यो नृत्तयोक्तृभि ॥ ९३ ॥
द्वितालान्तरविष्टम्भो विक्षेपो दक्षिणस्य तु ।
ततः पञ्चपदीं गच्छेदतिक्रान्तैः पदैरथ ॥ ९४ ॥
ततोऽभिवादनं कुर्याद्देवतानां यथादिशम् ।

---

१ एव श्लोकः खपुस्तके न दृश्यते । २ वार्तिकेन तु मार्गेण वाक्येन... तु सग्रहाः--ख । ३ एते सार्द्धत्रयः श्लोकाः खपुस्तके न दृश्यन्ते ।

वन्देत प्रथमं पूर्वां दिशं शक्राधिदेवताम् ॥ ९५ ॥
द्वितीयां दक्षिणामाशां वन्देत यमदेवताम् ।
वन्देत पश्चिमामाशां ततो वरुणदेवताम् ॥ ९६ ॥
चतुर्थीमुत्तरामाशां वन्देत धनदाश्रयाम् ।
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् ॥ ९७ ॥
दक्षिणेन तु कर्तव्यं विक्षेपपरिवर्तनम् ।
प्राङ्मुखस्तु ततः कुर्यात् पुरुषस्त्रीनपुंसकैः ॥ ९८ ॥
त्रिपाद्या सूत्रधृक् रुद्रब्रह्मोपेन्द्राभिवन्दनम् ।
दक्षिणं तु पदं नॄणां वामं स्त्रीणां प्रकीर्तितम् ॥ ९९ ॥
दक्षिणं तु पदं ज्ञेयं नाभ्युत्क्षिप्तं नपुंसकम् ।
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् ॥ १०० ॥
नपुंसकपदेनापि तथैवाम्बुजसम्भवम् ।
परिवर्तनमेवं स्यात् तस्यान्ते प्रविशेत् ततः ॥ १०१ ॥
चतुष्प्रकारपुष्पाणि प्रगृह्य विधिपूर्वकम् ।
यथावत् तेन कर्त्तव्यं पूजनं जर्जरस्य तु ॥ १०२ ॥
[1]भाण्डस्यैव च सर्वस्य सूत्रधारस्य चैव हि ।
तस्य भाण्डगतः कार्यः तज्ज्ञैर्गीतिपरिक्रमः ॥ १०३ ॥
न तत्र गानं कर्त्तव्यं तत्र [2]स्तोभक्रिया भवेत् ।
चतुष्प्रकारपूजां तु निष्क्रामेत् सम्प्रयुज्य हि ॥ १०४ ॥
ततो गेयावकृष्टा तु चतुरस्रा स्थिरा ध्रुवा ।
गुरुप्राया तु सा कार्या तथा चैवा[3]वपाणिका ॥ १०५ ॥
स्थायिवर्णाश्रयोपेतां कलाष्टकविनिर्मिताम् ।
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ॥ १०६ ॥
ततः पदैर्द्वादशभिः अष्टाभिर्वाप्यलंकृताम् ।
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः [4]शुभं तथा ॥ १०७ ॥

---

१ कुतपस्य—ख । २ स्नान—ख ।
३ ०र्ध—ख । ४ च वै नमः-क ।

जितं सोमेन वै राज्ञा आरोग्यं भोग एव च ।
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ॥ १०८ ॥
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ।
राज्यं प्रवर्धतां चैव रङ्ग[2]श्चायं समृध्यताम् ॥ १०९ ॥
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभावितः ।
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ॥ ११० ॥
इज्यया चानया नित्यं प्रीयन्तां देवता इति ।
नान्दीपदान्तरेष्वेषु ह्येवमस्त्विति नित्यशः ॥ १११ ॥
वन्देतां सम्यगुक्ता[3]भिर्गीर्भिस्तौ पारिपार्श्वकौ ।
एवं नान्दी विधातव्या यथोक्ता लक्षणैर्मया ॥ ११२ ॥
ततः शुष्कापकृष्टा स्याज्जर्जरश्लोकदर्शिता ।
नवगुर्वक्षराण्यादौ षट् लघूनि गुरुत्रयम् ॥ ११३ ॥
[4]कलाश्चाष्टौ प्रमाणेन पादैर्ह्यष्टादशाक्षरैः ।
यथा—[5]झेण्डे झण्डे दिल्लग् दिग्ले ॥ ११४ ॥
जम्बुक वलितक तेत्तेन्नाम् ।
कृत्वा शुष्कावकृष्टां तु यथावद् द्विजसत्तमाः ॥ ११५ ॥
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ।
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ॥ ११६ ॥
राज्ञो भक्तिश्च यत्र स्यादथवा ब्रह्मणः स्तवः ।
नन्दित्वा जर्जरश्लोकं रङ्गद्वारे च यः स्मृतः ॥ ११७ ॥
पठेदन्यं पुनः श्लोकं जर्जरस्य [6]प्रकाशनम् ।
जर्जरं मा[7]नयित्वा तु ततश्चारीं प्रयोजयेत् ॥ ११८ ॥
पारिपार्श्वकयोश्च स्यात् पश्चिमेनापसर्पणम् ।
[8]अड्डिता चानुकर्तव्या ध्रुवा मध्यलयान्विता ॥ ११९ ॥
चतुर्भिः सन्निपातैस्तु चतुरस्रं प्रमाणतः ।

---

१ शिवं गोब्राह्मणाय च—ख । २ ०स्याशा समृद्ध्यतु—ख । ३ ०सौ०—क । ४ शुष्कावकृष्टा तु भवेत् कला ह्यष्टौ प्रमाणतः—ख । ५ दिह्ले दिह्ले दिह्ले दिह्ले जम्बूकवलितक ते ते च (?) ख । ६ विनाशन—ख । ७ नमयित्वा—ख । ८ अड्डिता (?)—ख ।

आद्यमन्त्यं[1] चतुर्थं च पञ्चमं च तथा गुरु ॥ १२० ॥
यस्यां तु[2] जायते पादे सा भवेदड्डिता ध्रुवा ।
अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः ॥ १२१ ॥
सहोमया क्रीडितवान् नानाभावविचेष्टितैः ।
कृत्वावहित्थं[3] स्थानं तु वामं चाधोमुखं भुजम् ॥ १२२ ॥
नाभिप्रदेशे विन्यस्य जर्जरं च तुलाधृतम् ।
वामपल्लवहस्तेन पादैस्तालान्तरस्थितैः ॥ १२३ ॥
गच्छेत् पञ्चपदीं चैव सविलासाङ्गचेष्टितैः ।
वामवेधस्तु कर्त्तव्यो विक्षेपो दक्षिणेन तु ॥ १२४ ॥
ततः शृङ्गारसंयुक्तं पठेच्छ्लोकं[4] विचक्षणः ।
चारीश्लोकं विदित्वा तु कृत्वा च परिवर्तनम् ॥ १२५ ॥
तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम्[5] ।
पारिपार्श्वकयोर्हस्ते न्यस्य जर्जरमुत्तमम् ॥ १२६ ॥
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि ।
चतुरस्रा ध्रुवा यत्र तथा द्रुतलयाश्रया ॥ १२७ ॥
चतुर्भिः सन्निपातैश्च कलास्त्वष्टौ प्रमाणतः ।
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु ॥ १२८ ॥
लघुशेषं ध्रुवायोगे[6] त्रैष्टुभं चरणे यथा ।
पादतलाहतपातितशैलं क्षोभितभूतसमग्रसमुद्रम् ।
ताण्डवनृत्तमिदं प्रलयान्ते पातु हरस्य सदा सुखदायि ॥ १२९ ॥
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः ॥ १३० ॥
सूचीं दत्वा पुनः कुर्याद् विक्षेपपरिवर्तनम् ।
अतिक्रान्तैः सललितैः पदैः द्रुतलयाश्रितैः ॥ १३१ ॥
त्रितालान्तरमुत्क्षिप्तैः गच्छेत् पञ्चपदीं ततः ।
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ॥ १३२ ॥

१ ०ध्यं—ख । २ ह्रस्वानि शेषाणि—ख ।
३ एष सार्धश्लोकः कपुस्तके नोपलभ्यते ।
४ ०दार्यां—ख । ५ पश्चिमे०—ख । ६ पादे चतुर्विंशतिके भवेत्—ख

तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् ।
पुनः पदानि त्रीण्येव गच्छेत् प्राङ्मुख एव च ॥ १३३ ॥
ततश्च वामवेधः स्यात् विक्षेपो दक्षिणस्य च ।
ततो रौद्ररसश्लोकं पदसंहरणं पठेत् ॥ १३४ ॥
तस्यान्ते तु त्रिपद्याऽथ व्याहरेत् पारिपार्श्वकः ।
तयोरागमनं कार्यं गानं नकुटके बुधैः ॥ १३५ ॥
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ।
तथा च भारतीभेदे त्रिगतं सम्प्रयोजयेत् ॥ १३६ ॥
विदूषकस्त्वेकपदां सूत्रधारस्मितावहाम् ।
असम्बद्धकथाप्रायां कुर्यात कथनिकां तथा ॥ १३७ ॥
वितण्डां गण्डसंयुक्तां नामिकां च प्रयोजयेत् ।
कस्तिष्ठति जितं केनेत्यादि काव्यप्ररूपिणीम् ॥ [१]३८ ॥
प्ररोचनाथ कर्त्तव्या सिद्धेनोपनिमन्त्रणा ।
॥ १३९ ॥
रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् ।
सर्वमेवं विधिं कृत्वा सूचीवेधकृतैरथ ॥ १४० ॥
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः ।
एवमेव प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ॥ १४१ ॥
चतुरस्रो द्विजश्रेष्ठास्त्र्यस्रश्चापि निबोधत
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि ।
तालप्रमाणसंक्षिप्तं केवलं तु विशेषकृत् ॥ १४२ ॥
[२]शम्याकृद् द्विकलः कार्यस्ताल एककलस्तथा ।
पुनश्चैककला शम्या सन्निपातः कलाद्वयम् ॥ १४३ ॥
अनेन हि प्रमाणेन कलातालयान्वितः ।
कर्त्तव्यः पूर्वरङ्गस्तु त्र्यस्रोऽभ्युत्थापनादिकः ॥ १४४ ॥
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु ।
यस्यास्तु जायते पादे सा त्र्यस्रोत्थापनी ध्रुवा ॥ १४५ ॥

---

१ एते सार्धत्रयः श्लोकाः कपुस्तके नोपलभ्यन्ते ।
२ शम्या तु द्विकला कार्या—ख ।

वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च ।
संक्षिप्तान्येव कार्याणि त्र्यस्रे नृत्तप्रवेदिभिः ॥ १४६ ॥
वाद्यगीतप्रमाणेन कुर्यात् कृतिविचेष्टितम् ।
विस्तीर्णमथ संक्षिप्तं प्रमाणं च विनिर्मितम् ॥ १४७ ॥
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः ।
चतुरस्रे परिक्रान्ते पादाः स्यु षोडशैव हि ॥ १४८ ॥
त्र्यस्रे तु द्वादशपदा भवन्ति करपादजाः ।
एतत् प्रमाणं निर्दिष्टमुभयोः पूर्वरङ्गयोः ॥ १४९ ॥
केवलं परिवर्ते तु गगने त्रिपदी भवेत् ।
दिग्वन्दने पञ्चपदी चतुरस्रे विधीयते ॥ १५० ॥
आचार्यबुद्ध्या कर्त्तव्यस्त्र्यस्रतालप्रमाणतः ।
तस्मान्न लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः ॥ १५१ ॥
वृत्ते ह्युत्थापने विप्राः कृते च परिवर्तने ।
चतुष्प्रकारदत्ताभिः सुमनोभिरलङ्कृते ॥ १५२ ॥
उदात्तगानैर्गन्धर्वैः परिगीतैः प्रमाणतः ।
[१]देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः ॥ १५३ ॥
शुद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः ।
अङ्गहारैश्च देव्यश्च व्यासापन्यासंसंयुताः ॥ १५४ ॥
नान्दीपदानां मध्ये तु एकैकास्मिन् पृथक् पृथक् ।
प्रयोक्तव्यो विधिः सम्यक् चित्रो लक्षणसंयुतः ॥ १५५ ॥
एवं कृत्वा यथान्यायं शुद्धं चित्रे प्रयत्नतः ।
ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः ॥ १५६ ॥
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् ।
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतः परम् ॥ १५७ ॥
एवं शुद्धो भवेच्चित्रं पूर्वरङ्गविधानतः ।
एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः ॥ १५८ ॥

---

१ सार्धश्लोकोऽयं कपुस्तके नास्ति ।
२ श्लोकद्वयमेतत् कपुस्तके न दृश्यते ।

त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ।
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः ॥ १५९ ॥
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ।
कार्यो नातिप्रसङ्गोऽत्र गीतनृत्यविधिं प्रति ॥ १६० ॥
गीते वाद्ये च नृत्ते च प्रवृत्तेऽतिप्रसङ्गतः ।
खेदो भवेत् प्रयोक्तॄणां प्रेक्षकाणां तथैव च ॥ १६१ ॥
खिन्नानां रसभावेषु स्पष्टता नोपजायते ।
ततः शेषप्रयोगस्तु न रागजनको भवेत् ॥ १६२ ॥
त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा ।
प्रयुज्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः ॥ १६३ ॥
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः ।
स्थापकः प्रविशेत् तत्र सूत्रधारगुणाकृतिः ॥ १६४ ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
प्रविश्य रङ्गं तैरेव सूत्रधारपदं व्रजेत् ॥ १६५ ॥
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा ।
चतुरस्राथवा त्र्यस्रा तत्र मध्यलयाश्रिता ॥ १६६ ॥
कुर्यादन्तरचारीं च देवब्राह्मणशंसिनीम् ।
सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः ॥ १६७ ॥
प्रसाद्य रङ्गं विधिवत् कवेर्नामानुकीर्तयेत ।
प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम् ॥ १६८ ॥
दिव्ये दिव्याश्रयैर्भूत्वा मानुषे मानुषाश्रयैः ।
दिव्यमानुषसंयोगो दिव्यो वा मानुषोऽपि वा ॥ १६९ ॥
मुखं बीजानुसदृशं नानामार्गसमाश्रयम् ।
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ॥ १७० ॥
प्रस्ताव्यैवं तु निष्क्रामेत् काव्यप्रस्तावको द्विजः ।
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ॥ १७१ ॥
य इमं पूर्वरङ्गं तु विधिनैव प्रपूजयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् स्वर्गलोकं च गच्छति ॥ १७२ ॥

यश्चेमं विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ।
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्छति ॥ १७३ ॥
न तथाग्निः प्रदहति प्रभञ्जनसमीरितः ।
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ॥ १७४ ॥
इत्येवावन्तिपाञ्चालदाक्षिणात्योड्रमागधैः[1] ।
कर्त्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः ॥ १७५ ॥
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः ।
[2]पुनश्चित्रे तथा मिश्रे शुद्धे चैव ब्रवीम्यहम् ॥ १७६ ॥
यथा योज्या ध्रुवाः पञ्च तथा वक्ष्यामि तत्त्वतः ।
उत्थापनी तथा कार्या परिवर्तास्तथा भवेत् ॥ १७७ ॥
अपकृष्टा सिता चैव विक्षिप्ता चैव पञ्चमी ।
एवं पञ्च ध्रुवा ज्ञेया उपोहनसमन्विताः ॥ १७८ ॥
कर्त्तव्यास्तु प्रयत्नेन पूर्वरङ्गप्रयोक्तृभिः ।
अतः परं प्रवक्ष्यामि उपोहनविधिक्रियाम् ॥ १७९ ॥
उत्थापनस्याष्टकलं परिवर्तस्य षट्कलम् ।
अपकृष्टं पुनः कार्यं कलाभिः पञ्चभिर्युतम् ॥ १८० ॥
ध्रुवायामड्डिकायां च चतुष्कलमथापि वा ।
क्षिप्तायां चैव विज्ञेयं कलात्रयसमन्वितम् ॥ १८१ ॥
एवं ह्युपोहनानां तु प्रमाणं समुदाहृतम् ।
गुरुलाघवसंयुक्तं कलातालसमन्वितम् ॥ १८२ ॥
पूर्वरङ्गे सदा ज्ञेयं चित्रमार्गे ह्युपोहनम् ।
चित्रे चैत्राः कला ज्ञेया मिश्रे वार्तिकमाश्रिताः ॥ १८३ ॥
शुद्धे दक्षिणमार्गेण प्रयोक्तव्या प्रयोक्तृभिः ।
चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी ॥ १८४ ॥
संभावितं तथा चैव पृथुला च प्रकीर्तिता ।
मागधी अथ कर्त्तव्या अथवा त्वर्धमागधी ॥ १८५ ॥

---

१ ०त्यान्ध्र—ख । २ अतः परमध्यायसमाप्ति यावत् ग्रन्थः खपुस्तके न लभ्यते ।

पूर्वरङ्गे भवेच्चित्रे चित्रमार्गे च मागधी ।
यथा मिश्रस्तु योक्तव्यः पूर्वरङ्गो भवेदिह ॥ १८६ ॥
मिश्रे संभाविता कार्या तदा वार्तिकमाश्रिता ।
शुद्धे च पृथुला कार्या दक्षिणं मार्गमाश्रिता ॥ १८७ ॥
अतः परं प्रवक्ष्यामि गुरुलाघवतः क्रियाम् ।
उपोहनक्रियायां तु यथा योज्यं प्रयोक्तृभिः ॥ १८८ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झण्डं सदा बुधैः ।
मध्ये लघ्वक्षराणि स्युः षोडशैव तु नित्यशः ॥ १८९ ॥
एवं ह्युपोहनं कृत्वा तथा वस्तु समाचरेत् ।
उत्थापन्यां प्रयोगोऽस्ति कलाकालसमन्वितः ॥ १९० ॥
अक्षराणां कलायास्तु गुरुलाघवमेव च ।
पूर्वं तु कथितं यस्मात् तस्मान्नाभिहितं पुनः ॥ १९१ ॥
यथा—देवं विभुं त्रिभुवनाधिपतिं ।
कैलासपर्वतगुहाभिरतम् ॥
शैलेन्द्रराजतनयादयितं ।
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकम् ॥ १९२ ॥
एवमुक्त्वा परीकार्या पूर्वरङ्गे प्रयोक्तृभिः ।
अतोऽन्यत् परिवर्ताया लक्षणं संविधीयते ॥ १९३ ॥
अस्यास्तूपोहनं कार्यं षट्कलं परिसंख्यया ।
आदौ दिग्लेत्रिरुक्तिस्तु अन्ते झण्डं सदा भवेत् ॥ १९४ ॥
मध्ये लघ्वक्षराण्येव द्वादशैव प्रयोजयेत् ।
वस्तुनोऽत्र प्रवक्ष्यामि गुरुलघ्वक्षरक्रमम् ॥ १९५ ॥
द्वौ पादौ च चतुर्थं च अष्टमं दशमं तथा ।
चतुर्दशं पञ्चदशं पादे गुर्वक्षराणि तु ॥ १९६ ॥
सा ध्रुवा परिवर्ताख्या त्रिलया त्रियतिस्तथा ।
परिवर्तास्तु चत्वारः पाणयस्त्रय एव च ॥ १९७ ॥
चतुर्भिः सन्निपातैस्तु द्वात्रिंशत्कलिकान्विताः ।
पूर्वरङ्गे प्रयोक्तव्यः परिवर्त्तः प्रयोक्तृभिः ॥ १९८ ॥

यथा—चन्द्रार्धभूषणजटं परं वृषकेतनं ।
कैलासपर्वतनिवासं सुरवरिष्ठम् ॥
शैलराजतनयाप्रियं प्रमथनाथं ।
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकं परमयोगिनम् ॥ १९९ ॥
अपकृष्टामिदानीं तु कथ्यमानां निबोधत ।
अस्यास्तूपोहनं कार्यं कलाभिः पञ्चभिर्युतम् ॥ २०० ॥
दिग्ले दिग्ले पुनश्चायं झण्डमस्य प्रयोजयेत् ।
अष्टावेव तु कार्याणि मध्ये लघ्वक्षराणि तु ॥ २०१ ॥
तृतीयश्चैव षष्ठं तु नवमैकादशे तथा ।
पादे पञ्चदशं चैव षोडशं च भवेद् गुरु ॥ २०२ ॥
अष्टषष्ठगुणैः पादैरपकृष्टाविधिं बुधाः ।
चतुर्भिः सन्निपातैश्च पाणिभिस्त्रिभिरेव च ॥ २०३ ॥
यथा—वरदं सहगणं त्रिपुरान्तकरं वृषभकेतुं ।
गजचर्मपटं विषमेक्षणं त्रिभुवननाथम् ॥
भुजङ्गाभरणं जगतां महितं भुवनयोनिं ।
प्रणतोऽस्मि भवन्तमुमापतिमसितकण्ठम् ॥ २०४ ॥
तृतीयं चैव षष्ठं च गुरु पादत्रयोदशम् ।
चतुर्गणसमायुक्ता सा कार्या त्वड्डिता ध्रुवा ॥ २०५ ॥
तत्राप्युपोहनं कार्यं चतुष्कलसमन्वितम् ।
अड्डिताया प्रयोगज्ञैरन्ते झण्डविभूषितम् ॥ २०६ ॥
दिग्ले दिग्ले ततश्चैव कार्यं मानं सदा बुधैः ।
चत्वार्येव तु कार्याणि मध्यलघ्वक्षराणि तु ॥ २०७ ॥
यथा—वरदं वरदं प्रणम सततं
गजचर्मपटं मुनिजनसहितम् ॥
भुजगवलयितं
प्रणतोऽस्मि शिवं त्रिभुवनमहितम् ॥ २०८ ॥
प्रयोज्या ह्यड्डिता त्वेवं पूर्वरङ्गे यथार्थतः ।
अतः परं प्रवक्ष्यामि विक्षिप्तायास्तु लक्षणम् ॥ २०९ ॥

तृतियं चैव षष्ठं च नवमं दशमं तथा ।
गुर्वक्षराणि पादे तु यस्यां विक्षिप्तका तु सा ॥ २१० ॥
दिग्लैस्त्रिभिर्गुणैर्युक्ताः पादास्तस्य भवन्ति हि ।
त्रिकलं चापि निर्दिष्टं उपोहनमतः परम् ॥ २११ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झण्डं प्रयोक्तृभिः ।
लघ्वक्षरैर्विहीनं तु विक्षिप्तोपोहनं भवेत् ॥ २१२ ॥
यथा-त्रिपुरान्तकरं बहुलीलं ।
उमासहितं बहुरूपम् ॥
भुजगाभरणं त्रिपुरान्तकं ।
प्रणमामि सदा परमीशम् ॥ २१३ ॥
एवं सर्वा ध्रुवा कार्या युग्मौजकृतगीतिका ।
आचार्यबुद्ध्या कर्तव्या पूर्वरङ्गे यथाविधि ॥ २१४ ॥
एवं वः कथितः सम्यक् पूर्वरङ्गस्त्रिधा मया ।
किमन्यत् संप्रवक्ष्यामि यद्वाभीष्टं द्विजोत्तमाः ॥ २१५ ॥
इति भारतीये नाट्यशास्त्रे रङ्गविधानं नाम पञ्चमोऽध्यायः ।

---

# अथ षष्ठाध्यायप्रारम्भः

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः ।
मुनयो भरतं सर्वे पञ्च प्रश्नान् ब्रवीहि नः ॥ १ ॥
ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।
रसत्वं केन वा तेषां एतदाख्यातुमर्हसि ॥ २ ॥
भावाश्चैव हि ये प्रोक्ता किं वा ते भावयन्ति हि ।
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥ ४ ॥

---

१ श्लोकद्वयमिदं कपुस्तके नास्ति ।

अहं च कथयिष्यामि निखिलेन तपोघनाः।
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् ॥ ५ ॥
न शक्यमिह नाट्यस्य गन्तुमन्तं कथञ्चन।
कस्मात् बहुत्वाद् ज्ञानानां शिल्पानां चाप्यनन्ततः ॥ ६ ॥
एकस्यापि न वै शक्यमन्तं ज्ञानार्णवस्य तु।
गन्तुं पुनः किं सर्वेषां भावानामर्थतत्त्वतः ॥ ७ ॥
किन्त्वल्पसूत्रगूढार्थमनुमानप्रसाधकम्[1]।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसङ्ग्रहम् ॥ ८ ॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो[2] यः समासेन सङ्ग्रहं तं विदुर्बुधाः ॥ ९ ॥
रसा भावा ह्यभिनया धर्मिवृत्ति[3]प्रवृत्तयः।
सिद्धिः[4]स्वरास्तथातोद्यं गानं रङ्गं[5] च सङ्ग्रहः ॥ १० ॥
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः।
सूत्रतः सा तु विज्ञेया कारिकाऽर्थप्रदर्शि[6]योगिनी ॥ ११ ॥
नानानामाश्रयोत्पन्नं निघण्टुं निगमान्वितम्।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥ १२ ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकम्।
धात्वर्थवचनेनेह निरुक्तं तद्विदुर्बुधाः ॥ १३ ॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः।
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम् ॥ १४ ॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १५ ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना।
पुनश्च भावान् वक्ष्यामि स्थायिसञ्चारिसत्त्वजान् ॥ १६ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ १७ ॥

---

१ ग्रन्थार्थ–ख ग। २ ०द्धो–क। ३ ०र्मी वृ०–ख।
४ सिद्धिः–ख–ग। ५ रङ्गस्य–ख। ६ ०दर्शि०–ख ग।

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १८ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ १९ ॥
सुप्तं [1]प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिरथोन्मादस्तथा मरणमेव च ॥ २० ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ २१ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वर[2]सादोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ २२ ॥
आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
चत्वारोऽभिनया ह्येते वि[3]ज्ञेया नाट्यसंश्रयाः ॥ २३ ॥
लोकधर्मी नाट्यधर्मी धर्मी तु द्विविधः स्मृतः ।
भारती सात्त्वती चैव कैशिक्यारभटी तथा ॥ २४ ॥
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ।
अवन्ती दाक्षिणात्या च तथा चैवो[4]ड्रमागधी ॥ २५ ॥
पाञ्चाली मध्यमा चैव ज्ञेया नाट्यप्रवृत्तयः ।
दैविकी मानुषी चैव सिद्धिः स्याद्द्विविधैव च ॥ २६ ॥
शारीरा वैणवाश्चैव सप्त षड्जादयः स्वराः ।
ततं चैवावनद्धं च घनं सुषिरमेव च ॥ २७ ॥
चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम् ।
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ॥ २८ ॥
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च ।
प्रवेशाक्षेपनिष्कामप्रासा[5]रिकमथापरम् ॥ २९ ॥
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम् ।
चतुरस्रो विकृष्टश्च रङ्गस्त्र्यस्रश्च कीर्तितः ॥ ३० ॥

---

१ वि०-ख । २ भङ्गो-ख । ३ येषु नाट्यं प्रतिष्ठितम्-ख ।
४ वाऽऽन्ध्र(घ?)-ख, नाऽत्र-ग । ५ ०वशिक०-क, सादिक०-ख ।

एवमेषोऽल्पसूत्रार्थो व्यादिष्टो नाट्यसङ्ग्रहः ।
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥ ३१ ॥

तत्र रसानेव तावदादावभिधास्यामः । न हि रसादृते कश्चिदप्यर्थः प्रवर्तते । विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः । को वा दृष्टान्त इति चेत्—उच्यते यथानानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः, तथा नानाभावोपगमाद्रसनिष्पत्तिः । यथा गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधीभिश्च षड् रसा निर्वर्त्यन्ते, एवं नानाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति । ऋषय ऊचुः । रस इति कः पदार्थः ? अत्रोच्यते । आस्वाद्यत्वात् । कथमास्वाद्यो रसः ? अत्रोच्यते । यथाहि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाप्यधिगच्छन्ति तथा नाना भावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः । तस्मात् नाट्यरसाः इति व्याख्याताः ।

अत्रानुवंश्यौ श्लोकौ भवतः ।

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भुक्तं भुक्तविदो जनाः ॥ ३२ ॥
भावाभिनयसंयुक्तान् स्थायिभावास्ततो बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥ ३३ ॥

अत्राह । किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसानामिति ? अत्र केषाञ्चिन्मतं परस्परसम्बन्धादेषामभिनिर्वृत्तिरिति । तन्न । कस्मात् ? दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिरिति न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति ।

तत्र श्लोकाः ।
नानाभिनयसम्बन्धान् भावयन्ति रसानिमान् ।

---

१ निर्दि०-ख । २ ०ध्याख्यामः-ख ।
३ इदं वाक्यं खपुस्तके न दृश्यते । ४ षाडवाद्यो-ख ग ।
५ ०गा०-ख । ६ किमिति । चेत्—कग । ७ भ-ख ।
८ इत आरभ्य ऊर्ध्वाङ्कितवृत्तिशब्दं यावत् ग्रन्थः कपुस्तके नोपलभ्यते ।
९ ०द्व०-ख ।

यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३४ ॥
नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा ।
एवं भावा भावयन्ति रसानभिनयैः सह ॥ ३५ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥ ३६ ॥
व्यञ्जनौषधिसंयोगाद्यथा न स्वादुता भवेत् ।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥ ३७ ॥
यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं यथा ।
तथा मूलं रसाः सर्वे तेषु भावा व्यवस्थिताः ॥ ३८ ॥
तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः ।
तेषामुत्पत्तिहेतवश्चत्वारो रसाः।तद्यथा शृङ्गारो रौद्रो वीरो बीभत्स इति

अत्र ।

शृङ्गाराद्धि भवेद्धास्यो रौद्रात्तु करुणो रसः ।
वीराच्चैवोद्भुतोत्पत्तिर्बीभत्साच्च[2] भयानकः ॥ ३९ ॥
शृङ्गारानुकृतिर्या तु स हास्य इति संज्ञितः ।
रौद्रस्यापि तु च यत् कर्म स ज्ञेयो करुणो रसः ॥ ४० ॥
वीरस्यापि च यत् कर्म सोऽद्भुतः परिकीर्तितः ।
बीभत्सदर्शनं यच्च भवेत् स तु भयानकः[1] ॥ ४१ ॥

अथ वर्णाः ।

श्यामो भवेत्तु शृङ्गारः सितो हास्यः प्रकीर्तितः ।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥ ४२ ॥
गौरो वीरस्तु विज्ञेयः कृष्णश्चापि भयानकः ।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥ ४३ ॥

अथ दैवतानि ।

शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः ।
रौद्रो रुद्राधिदेवश्च करुणो यमदैवतः ॥ ४४ ॥

---

१ एष श्लोकः खपुस्तके नास्ति ।
२ एष सार्द्धश्लोकः कपुस्तके नोपलभ्यते ।

बीभत्सस्य महाकालः कालदेवो भयानकः।
वीरो महेन्द्रदेवः स्याददद्भुतो ब्रह्मदैवतः ॥ ४५ ॥

एवमेतेषामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि। इदानीं विभावानुभावव्यभिचारिसंयुक्तानां लक्षणदर्शनान्यभिव्याख्यास्यामः। स्थायिभावांश्च [1]रसत्वमुपनेष्यामः।

तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः। यथा यत्किञ्चिल्लोके शुचि मेध्यं दर्शनीयं वा तच्छृङ्गारे[2]णानुमीयते। यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते। यथा च गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि तथैवैषां रसानां भावानां च नाट्याश्रितानां चार्थनामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि भवन्ति। तदेवमेव गुर्वाचारसिद्धो हृद्योज्ज्वलवेषात्मकः शृङ्गारो रसः। स च स्त्रीपुंसहेतुक उत्तमयुवतिप्रकृतिः। तस्य द्वे अधिष्ठाने सम्भोगो विप्रलम्भश्च। तत्र सम्भोगस्तावत् ऋतुमाल्यानुलेपनालङ्कारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते। तस्य नयनचातुर्यभ्रूविक्षेपकटाक्षसञ्चारललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः। व्यभिचारिणस्त्रासालस्यौग्र्यजुगुप्सावर्जम्। विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रासुप्तस्वप्नविब्बोकव्याध्युन्मादापस्मारजाड्यमरणादिभिरनुभावैरभिनेतव्यः। अत्राह—यद्येवं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा भवन्ति ? अत्रोच्यते—पूर्वमेवाभिहितं सम्भोगविप्रलम्भकृतः शृङ्गार इति। वैशिकशास्त्रैश्च दशावस्थोऽभिहितः। ताश्चावस्थाः सामान्याभिनये वक्ष्यामः।

करुणस्तु शापक्लेशविनिपातनेष्टजनविप्रयोगविभवनाशवधबन्धनसमुत्थो निरपेक्षभाव औत्सुक्यचिन्तासमुत्थः। सापेक्षभावो विप्रलम्भकृतः। एवमन्यः करुणः अन्यश्च विप्रलम्भः। एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति।

---

१ रसानामनुक्रमिस्याम इति—ख। २ ०णोपमीयते—ख।

अपि च

सुखप्राये ष्टसम्पन्न ऋतुमाल्यादिसेवकः ।
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ॥ ४६ ॥

अपि चात्र सूत्रानुबद्धे आर्ये भवतः

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ ४७ ॥
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४८ ॥

अथ हास्यो नाम हासस्थायिभावात्मकः । स च विकृतवेषालङ्कार-धार्ष्ट्यलौल्यकलहासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैः समुत्पद्यते । तस्यौष्ठदंशननासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य आलस्यावहित्थातन्द्रानिद्रास्वप्नप्रबोधासूयादयः । द्विविधश्चायं आत्मस्थः परस्थश्च । यदा स्वयं हसति तदात्मस्थः । यदापरं हासयति तदा परस्थः ।

अत्रानुवंश्ये आर्ये भवतः ।

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः ॥ ४९ ॥
विकृताकारैर्वाक्यैरङ्गविकारैर्विकृतवेषैश्च ।
हासयति जनं यस्मात् तस्माद् ज्ञेयो रसो हास्यः ॥ ५० ॥
स्त्रीनीचप्रकृतावेषभूयिष्ठं दृश्यते रसः ।
षड् भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ॥ ५१ ॥
स्मितमथ हसितं विहसितमुपहसितञ्चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमप्रकृतौ ॥ ५२ ॥
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं तथातिहसितं च विज्ञेयम् ॥ ५३ ॥

---

१ कुहका०-ख । २ विकारैः०-ख ।

अत्र श्लोकाः

ईषद्विहसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ ५४ ॥
उत्फुल्लाननेत्रैस्तु गण्डैर्विहसितैरथ ।
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते ॥ ५५ ॥

अथ मध्यानाम्

आकुञ्चिताक्षिगण्डं यत् सस्वरं मधुरं तथा ।
कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥ ५६ ॥
उत्फुल्लनासिकं यच्च जिह्मदृष्टिनिरीक्षणम् ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥ ५७ ॥

अधमानाम्

अस्थानहसितं यत्र सास्रनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥ ५८ ॥
संरब्धसास्रनेत्रं च विक्रुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥ ५९ ॥
हासस्थानानि यानि स्युः कार्योत्पन्नानि नाटके ।
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् ॥ ६० ॥
एवमात्मसमुत्थं च तथा परसमुत्थितम् ।
द्विविधस्त्रिप्रकृतिकः षडभेदोऽथ रसः स्मृतः ॥ ६१ ॥

अथ करुणो नाम शोकस्थायिभावप्रभवः । स च शापक्लेशविनिपातेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोपघातव्यसनसंयोगादिभिर्विभावैः समुपजायते । अस्य चाश्रुपातनपरिदेवनमुखशोषणवैवर्ण्यस्रस्तगात्रतानिश्वासस्मृतिविलोपादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदग्लानिचिन्तौत्सुक्यावेगमोहश्रमभयविषाददैन्यव्याधिजडतोन्मादापस्मारत्रासालस्यमरणस्तम्भवेपथुवैवर्ण्याश्रुस्वरभेदादयः ।

---

१ अत्रेयमार्या खपुस्तके दृश्यते—
इत्येष स्वसमुत्थस्तथा पर समुत्थितश्च विज्ञेयः ।
द्विविधस्त्रिप्रकृतिगतस्त्रवस्थभावो रसो हास्यः । २ स्पर्शन-ख ।

अत्रार्ये भवतः ।

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रयाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ ६२ ॥

श्वसन(वि)रुदितैर्मोहोद्गमैश्च परिदेवितैर्विलपितैश्च ।
अभिनेयः करुणरसो देहायासाभिघातैश्च ॥ ६३ ॥

अथ रौद्रो नाम क्रोधस्थायिभावात्मकः । रक्षोदानवोद्धतमनुष्यप्रभवः सङ्ग्रामहेतुकः । स च क्रोधधर्षणाधिक्षेपावमानानृतवचनवाक्पारुष्यद्रोहमात्सर्यादिभिर्विभावैः समुपजायते । तस्य च ताडनपाटनपीडनच्छेदनभेदनप्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिराकर्षणाद्यानि कार्याणि । पुनश्च रक्तनयनस्वेदभ्रुकुटीकरदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैराभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य सम्मोहोत्साहवेगामर्षचपलतौग्र्यस्वेदवेपथुरोमाञ्चगद्गदादयः । अत्राह-यदभिहितं राक्षसादीनां रौद्रो रसः किमन्येषां नास्तीत्युच्यते । अस्त्यन्येषामपि रौद्रः । किन्त्वधिकारोऽत्र गृह्यते । ते हि स्वभावत एव रौद्रा बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्णपिङ्गलशिरोजा रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव । यच्च किञ्चित्समारम्भान्ते स्वभावचेष्टितं वागङ्गादिकं वा तत्सर्वं रौद्रमेवेति । तेषां चानुगामिनो ये पुरुषास्तेषामपि संप्रहारकृतो रौद्ररसोऽनुमन्तव्यः । अत्रानुवंश्ये आर्ये भवतः—

सत्त्वप्रहारघातनविकृतच्छेदनविदारणैश्चैव ।
संग्रामसंभ्रमोत्थैरेभिः संजायते रौद्रः ॥ ६४ ॥
नानाप्रहरणसंकुलशिरःकबन्धभुजकर्त्तनैश्चैव ।
एभिश्चार्थविशेषैस्तस्याभिनयः प्रयोक्तव्यः ॥ ६५ ॥

---

१ ०वा०—ख ।
२ सस्वन हृदितै०—क । ३ ०हाग०—ख । ४ चालन—क ।
५ शृङ्गारश्च तैः प्रसभं सेव्यते इत्यत्रैतावदधिकं ख पुस्तके दृश्यते ।
६ युद्ध—ख । ७ पा०—ख । ८ ०माद्यै०—ख । ९ मोक्षैः—ख ।

इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः[1] ।
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ॥ ६६ ॥

अथ वीरो नाम उत्तमप्रकृतिरुत्साहात्मकः । स च असंमोहाध्यवसायनयविनयबहुलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्यशौर्यधैर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । सञ्चारिभावाश्चास्य धृतिमतिगर्ववेगौग्र्यामर्षस्मृतिरोमाञ्चादयः ।

अत्रानुवंश्ये आर्ये भवतः ।

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् ।
विविधादर्थविशेषाद्वीररसो नाम सम्भवति ॥ ६७ ॥
स्मृतिधैर्यवीर्यशौर्योत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥ ६८ ॥

अथ भयानको नाम भयस्थायिभावात्मकः । स च विकृतरवसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्यागारारण्यप्रवेशमरणस्वजनवधबन्धनदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणनयनचलनपुलकमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिभावाश्चास्य स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचापलत्रासापस्मारमरणादयः ।

अत्रानुवंश्या आर्या भवन्ति । traditional

विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात् कृतकश्च भयानको ज्ञेयः ॥ ६९ ॥
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः ।
सन्न[2]मुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥ ७० ॥
एतत् स्वभावजं स्यात् सत्त्वसमुत्थं तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैश्च कार्यम्[3] ॥ ७१ ॥
करचरणवेपथुस्तम्भगात्रहृदयप्रकम्पेन ।
शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥ ७२ ॥

---

१ सान्त्व(?)-ख । २ मुहु(?)त्रे०—ख । ३ भयम्—क ।

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः । स चाहृद्याप्रियावेक्षानिष्टश्रवणदर्शनपरिकीर्तनादिभिर्विभावैरुत्पद्यते । तस्य सर्वाङ्गहारमुखनेत्रविघूर्णनं हृल्लेखनिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिभावाश्चास्यापस्मारवेगमोहव्याधिमरणादयः ।

अत्रानुवंश्ये आर्ये भवतः ।

अनभिहित[1]दर्शनेन च रसगन्धस्पर्शशब्ददोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ ७३ ॥
मुखनेत्रविघूर्णननयननासाप्रच्छादनावनमितास्यैः ।
अव्यक्तपादपतनैः सम्यगभिनयः प्रयोक्तव्यः ॥ ७४ ॥

अथाद्भुतो नाम विस्मयस्थायिभावात्मकः । स च दिव्यदर्शनेप्सितमनोरथावाप्त्युत्तमवनदेवकुलाभिगमनासंभाव्यमानमाहेन्द्रजालसाधनादिभिर्विभावैरुत्पद्यते । तस्य नयनविस्तारानिमिषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्षसाधुवादप्रदानबन्धहा[2]हाकारकरच[3]रणाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिभावाश्चास्य अश्रुस्तम्भस्वेदगद्गदरोमाञ्चावेगसंभ्रमजडताप्रलयादयः ।

अत्रानुवंश्ये आर्ये भवतः ।

यत्त्वतिशयार्थयुक्तं वाक्यं शी[4]लं च कर्म रूपं च ।
ए[5]भिस्त्वर्थविशेषै रसोऽद्भुतो नाम विज्ञेयः ॥ ७५ ॥
स्पर्शग्रहोत्कहसनैर्हाहाकारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ ७६ ॥
शृङ्गारं त्रिविधं विद्यात् वाङ्नेपथ्यक्रियात्मकम् ।
अङ्गनेपथ्यवाक्यैश्च हास्यरौद्रौ त्रिधा स्मृतौ ॥ ७७ ॥

---

१ मत–ख । २ झाङ्कार (?)–ख । ३ चेला०–ख । ४ शिल्पं–ख ।
५ तत् सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम्–ख ।
६ भ्रू–क ।

धर्मोपघातजश्चैव तथा स्वपचयोद्भवः ।
तथा शोक[1]कृतश्चैव करुणस्त्रिविधः स्मृतः ॥ ७८ ॥
दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसवीरमपि [2]प्राहुस्तज्ज्ञास्त्रिविधसम्मतम् ॥ ७९ ॥
व्याजाच्चैवापराधाच्च वित्रासितकमेव च ।
पुनर्भयानकं चापि विद्यात् त्रिविधमेव च ॥ ८० ॥
बीभत्सः क्षोभजः शुद्ध उद्वेगी स्यात्[3]तृतीयकः ।
[4]विष्ठाकृमिभिरुद्वेगी क्षोभजो रुधिरादिजः ॥ ८१ ॥
दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः ।
दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ॥ ८२ ॥
एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ॥ ८३ ॥
इति भारतीये नाट्यशास्त्रे रसविकल्पो नाम षष्ठोऽध्यायः ।

---

# अथ सप्तमाध्यायः ।

भावानिदानीं वक्ष्यामः ।

अत्राह—भावा इति कस्मात् ? किं भावयन्तीति भावाः ? उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् [5]भावयन्तीति भावाः । भाव इति कारण-साधनं यथा भावितो वासितः कृत इत्यर्थान्तरम् । लोकेऽपि सिद्धं अहो ह्यन्योन्यगन्धेन रसेन वा सर्वमेव भावितम् । अपि च व्याप्त्यर्थं श्लोकाश्चात्र भवन्ति ।

विभावेना[6]हृतो योऽर्थस्त्वनुभावेन गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ १ ॥
वागङ्गमुखरागैश्च स[7]त्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥ २ ॥

---

१ योग—क । २ प्राह ब्रह्मा त्रिविधमेव हि—ख । ३ द्वितीयकः—ख ।
४ विष्ठाक्रमिति (?) रुद्वेगी क्षोभणो रुधिरादिजः ख ।
५ भवन्ती०—क । ६ ०नोद्धृ०—ख । ७ सान्त्वना०—ख ।

नानाभिनयसम्बन्धान् भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३ ॥

विभाव इति कस्मादुच्यते । विभावो विज्ञानार्थः । विभावः कारणं निमित्तं हेतुरिति पर्यायाः ।

विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभावः । यथा विभावितं विज्ञातमित्यर्थान्तरम् ।

अत्र श्लोकः ।

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ ४ ॥

अथानुभाव इति कस्मादुच्यते । यदयमनुभावयति नानार्थाभिनिष्पन्नो वागङ्गसत्त्वैः कृतोभिनय इति

अत्र श्लोकः ।

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते ।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥ ५ ॥

एतेषां विभावानुभावसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः । तत्र विभावानुभावौ लोकप्रसिद्धावेव । लोकस्वभावोपगतत्वाच्चैषां लक्षणं नोच्यते । अतिप्रसङ्गनिवृत्त्यर्थञ्च । भवति चात्र श्लोकः ।

लोकस्वभावसंसिद्धा लोकयात्रानुयायिनः ।
अनुभावविभावाश्च ज्ञेयास्त्वभिनयैर्बुधैः ॥ ६ ॥

तत्राष्टौ भावाः स्थायिनः, त्रयस्त्रिंशत् व्यभिचारिणः, अष्टौ सात्त्विका इति भेदाः । एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशत् भावाः प्रत्यवगन्तव्याः । एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते । भवति चात्र श्लोकः ।

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥ ७ ॥

अत्राह—यदान्योन्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशत्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः, कथमिदानीमेते

स्थायिनोऽष्टौ भावा रसत्वमाप्नुवन्तीत्युच्यते ? एवमेतदिति । कस्मात् ? यथाहि समानलक्षणास्तुल्यपाणिपादोदरसमानाः समानप्रत्यया अपि पुरुषाः कुलशीलविद्याकर्मशिल्पविचक्षणत्वयुक्ता राजत्वमाप्नुवन्ति तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति । तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्तीत्याश्रयत्वात् स्वामिभूताश्च स्थायिनो भावाः । तद्वत् स्थायिनि वपुषि गुणीभूता अन्ये भावाः । तान् गुणवत्तयाऽऽश्रयन्ते परिजनभूता व्यभिचारिणो भावाः । को दृष्टान्त इति ? यथा नरेन्द्रो बहुजनपरिवारोऽपि सन् स एव नाम लभते नान्यः सुमहानपि पुरुषः । बहुषु गच्छत्सु कश्चित् क्वचित् पृच्छति कोयमिति । स च तमाह राजेत्येव । तथा विभावानुभावव्यभिचारिपरिवृतः स्थायी भावो रसनाम लभते नरेन्द्रवत् ।

भवति चात्र श्लोकः ।

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥ ८ ॥

लक्षणं खलु पूर्वमभिहितमेतेषां रससंज्ञकानाम् । इदानीं तु भावसामान्यलक्षणमभिधास्यामः । तत्रादौ स्थायिभावान् व्याख्यास्यामः । तत्र रतिर्नाम आमोदात्मको भावः, ऋतुमाल्यानुलेपनाभरणप्रियजनपरभवनानुभवनाप्रातिकूल्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेत् स्मितवचनमधुरवचनभ्रूक्षेपकटाक्षादिभिरनुभावैः । भवति चात्र श्लोकः ।

इष्टार्थविषयप्राप्त्या रतिरित्युपजायते ।
सौम्यत्वादभिनेयाऽसौ वाङ्माधुर्याङ्गचेष्टितैः ॥ ९ ॥

अथ हासो नाम परचेष्टानुकरणासंबन्धप्रलापपौरोभाग्यसौख्यादिभिरनुभावैरुत्पद्यते । तमभिनयेत पूर्वोक्तैर्हसितादिभिः । भवति चात्र श्लोकः ।

परचेष्टानुकरणाद्धासः समुपजायते ।
स्मितहासातिहसितैरभिनेयः स पण्डितैः ॥ १० ॥

शोको नाम इष्टजनवियोगविभवनाशवधबन्धनदुःखानुभवनादि-

---

१ हासप्रतिपादकोऽयं सन्दर्भः ख पुस्तके न दृश्यते ।

भिर्विभावैरुत्पद्यते। तस्याश्रुपातविलपितपरिदेवितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपाताक्रन्दितविचेष्टितदीर्घनिश्वसितजडतोन्मादमोहमरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः। रुदितमत्र त्रिविधम्। आनन्दजमार्तिजमीर्ष्यासमुत्थं चेति।

तत्रार्याः

हर्षोत्फुल्लकपोलं सानुस्मरणं च वागनिभृतास्रम्।
रोमाञ्चाञ्चितगण्डं रोदनमानन्दजं भवति ॥ ११ ॥
पर्याप्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम्।
भूमिनिपातितचेष्टितविलपितमित्यार्तिजं भवति ॥ १२ ॥
प्रस्फुरितौष्ठकपोलं सशिरःकम्पं तथा सनिश्वासम्[1]।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति ॥ १३ ॥
का[2]रणमपेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः।
वीररसान्तरचारी कार्यः कृतको भवेच्छोकः ॥ १४ ॥
भवति श्लोकः।
स्त्रीनीचप्रकृतिः ह्येष शोको व्यसनसंभवः।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च ॥ १५ ॥

क्रोधो नाम आधर्षणाक्रुष्टकलहविवादप्रातिकूल्यादिभिर्विभावैरुत्पद्यते। तमभिनयेत् उत्फुल्लनासापुटोद्वृत्तनयनसन्दष्टौष्ठपुटगण्डस्फुरणादिभिरनुभावैः।

अत्रार्या भवन्ति।

भ्रुकुटिकुटिलोत्कटमुखसन्दष्टौष्ठः स्पृशन् करेण करम्।
स्पृष्टभुजाशिरवक्षाः शत्रोर्विनियन्त्रणं कुप्येत् ॥ १६ ॥
किञ्चिदवाङ्मुखदृष्टिः किञ्चित्स्वेदापमार्जनपरश्च।
अव्यक्तोल्बणचेष्टो गुरोर्विनियन्त्रणं रुष्येत् ॥ १७ ॥
अल्पतरप्रविचारो विकिरन्नश्रूण्यपाङ्गविक्षेपैः।
सभ्रुकुटीस्फुरदौष्ठः प्रणया[3]भिगतां प्रियां रुष्येत ॥ १८ ॥

---

१ सनिःस्वानम्—ख।
२ श्लोकोऽयं खपुस्तके नोपलभ्यते। ३ ०योपगताश्रयं-ख।

यः परिजने तु रोषस्तजननिर्भत्सनाक्षिविस्तारैः ।
विप्रेक्षणैश्च विविधैस्तस्याभिनयः प्रयोक्तव्यः ॥ १९ ॥
कारणमपेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः ।
उभयरसान्तरचारी कार्यः कृतको भवेद्रोषः ॥ २० ॥

उत्साहो नाम उत्तमप्रकृतिः । स चाविषादशक्तिधैर्यशौर्यत्यागादिभिर्विभावैरुत्पद्यते । तस्य धैर्यत्यागारम्भवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकः ।

असम्मोहादिभिर्व्यक्तो[2] व्यवसायनयात्मकः ।
उत्साहस्त्वभिनेयोऽसौ[3] वप्रमादाक्रियादिभिः ॥ २१ ॥

भयं नाम नीचप्रकृतिकं गुरुराजापराधशून्यागाराटवीपर्यटनपर्वतदर्शननिर्भत्सनदुर्दिननिशान्धकारोलूकनक्तञ्चारारावश्रवणादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणहृदयकम्पनस्तम्भमुखशोषणजिह्वापरिलेहस्वेदवेपथुपरित्राणान्वेषणधावनोत्क्रुष्टादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकाः[4]

गुरुराजापराधेन रौद्राणाञ्चापि दर्शनात् ।
श्रवणादपि घोराणां भयं मोहेन जायते ॥ २२ ॥
गात्रादिकम्पवित्रासैः वक्त्रशोषणसम्भ्रमैः ।
विष्फारितेक्षणैः कार्यमभिनेयः क्रियागुणैः ॥ २३ ॥
तत्र वित्रासनोद्भूतं भयमुत्पद्यते नृणाम् ।
स्रस्ताङ्गाक्षिनिमेषैश्च व्यभिनेयस्तु नर्तकैः ॥ २४ ॥

अत्रार्या

करचरणहृदयकम्पैः स्तम्भनजिह्वापलेहमुखशोषैः ।
स्रस्तसुविषण्णगात्रैस्तस्याभिनयः प्रयोक्तव्यः ॥ २५ ॥

---

१ ०राभिनयः क्रूरताराहितः-ख । २ ०र्दनिर्वृत्तो०-क ।
३ ०सौविप्रमोदोर्थितादिभिः-क ।
४ श्लोकत्रयमेतत् खपुस्तके नोपलभ्यते ।

जुगुप्सा नाम स्त्रीनीचप्रकृतिका । या चाहृद्यश्रवणदर्शनादिभिर्विभावैरुत्पद्यते । तस्याः सर्वाङ्गसङ्कोचननिष्ठीवनमुखविघूर्णनहृल्लेखादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भवत्यत्रापि श्लोकः

नासाप्रच्छादनेनापि गात्रसङ्कोचनेन च ।
उद्वेजनैश्च हृल्लेखैर्जुगुप्सामपि निर्दिशेत् ॥ २६ ॥

विस्मयो नाम मायेन्द्रजालमानुषकर्मातिशयविचित्रवपुस्तच्छिल्पातिशयाद्यैर्विभावैरुत्पद्यते । तस्य नयनविस्ताराानिमिषप्रेक्षणभ्रूविक्षेपणरोमहर्षस्वेदसाधुवादादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकः

कर्मातिशयनिर्वृत्तो विस्मयो हर्षसम्भवः ।
सिद्धिस्थाने त्वसौ साध्यो हर्षाश्रुप्रलयादिभिः ॥ २७ ॥

एवमेते स्थायिभावाः प्रत्यवगन्तव्याः ।

व्यभिचारिण इदानीं वक्ष्यामः अत्राह । व्यभिचारिण इति कस्मादुच्यन्ते ? वि अभि इत्येतावुपसर्गौ । चर गतौ धातुः । धात्वर्थवागङ्गसत्त्वोपेतान् विविधमभिमुखेन रसेषु चरन्तीति व्यभिचारिणः । चरन्ति नयन्तीत्यर्थः । कथं नयन्ति ? उच्यते—यथा सूर्य इदं नक्षत्रममुं वासरं नयतीति । न च तेन बाहुभ्यां स्कन्धेन वा नीयते । किं तु लोकप्रसिद्धमेतत् । यथायं सूर्यो नक्षत्रमिदं वा नयतीति एवमेते व्यभिचारिण इत्यवगन्तव्याः । प्रति व्यभिचारिणस्त इमे एवं गृहीतास्त्रयस्त्रिंशद्भावाः । तान् वर्णयिष्यामः ।

अत्र निर्वेदो नाम दारिद्र्योपगमाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैरुत्पद्यते । स्त्रीनीचप्रकृतीनां तमभिनयेत् रुदितविनिश्वसितोच्छ्वसितप्रतारणादिभिरनुभावैः ।

भवति चात्र श्लोकः ।

दारिद्र्येष्टनियोगैश्च निर्वेदो नाम जायते ।

---

१ उत्तमेनावरैः साध्यः प्रहर्षपुलकादिभिः–ख ।

संप्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् ॥ २८ ॥

अत्रानुवंश्ये आर्ये भवतः ।

इष्टजनविप्रयोगाद् दारिद्र्याद् व्याधितस्तथा दुःखात् ।
परवृद्धिं वा दृष्ट्वा निर्वेदो नाम संभवति ॥ २९ ॥
वाष्पपरिप्लुतनयनः पुनश्च[1] निःश्वासदीर्घमुखनेत्रः ।
योगीव ध्यानपरो भवति हि निर्वेदवान् पुरुषः ॥ ३० ॥

ग्लानिर्नाम वातविरिक्तव्याधितपोनियमोपवासमनस्तापातिपान मद्यसेवातिव्यायामाध्वगमनक्षुत्पिपासानिद्राच्छेदादिभिर्विभावैः समुत्पद्यते । तस्याः क्षामवाक्यनयनकपोलमन्दपदोपरामानुत्साहतनुगात्रवैवर्ण्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्ये भवतः

वातविरक्तव्याधिषु तपसा जरसा च जायते ग्लानिः ।
कार्श्येन साभिनेया मन्दक्रमणानुकम्पेन ॥ ३१ ॥
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसञ्चारैः ।
श्लथभावाच्चाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥ ३२ ॥

शङ्का नाम चौर्याद्यभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते सन्देहात्मिका स्त्रीनीचानाम् । सा च मुहुर्मुहुरवलोकनावकुण्ठितमुखशोषणजिह्वापरिलेहनमुखवैवर्ण्यवेपनशुष्कौष्ठकण्ठावसादादिभिरनुभावैरभिनीयते ।

अत्र श्लोकः

चौर्यादिजनिता शङ्का प्रायः कार्या भयानके ।
प्रियव्यलीकजनिता तथा शृङ्गारिणी मता ॥ ३३ ॥

तत्राकारसंवरणमपि केचिदिच्छन्ति । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् ।

अत्रार्ये भवतः ।

द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च ।
या तत्रात्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥ ३४ ॥

---

१ पुनः पुनः श्वास—ख । २ ०न्त—ख । ३ ०ज्ञन—ख ।

८

किंचित्प्रवेपिताङ्गो मुहुर्मुहुर्वीक्षते च पार्श्वानि ।
गुरुसज्जमानजिह्वः श्लावास्यः[1] शङ्कितः पुरुषः ॥ ३५ ॥

असूया नाम नानापराधद्वेषपरैश्वर्यसौभाग्यलीलाविद्यादिभिर्विभावैरुत्पद्यते। तस्याश्च परिषदि दोषप्रख्यापनं गुणोपघातनाचक्षुःप्रदाना-धोमुखभ्रुकुटिक्रियावज्ञानकुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्ये भवतः

परसौभाग्येश्वरतामेधालीलासमुच्छ्रयं दृष्ट्वा ।
उत्पद्यते ह्यसूया कृतापराधो भवेद्यश्च ॥ ३६ ॥
भ्रुकुटिकुटिलोत्कटमुखसेर्ष्याक्रोधपरिवृत्तवक्त्राद्यैः ।
गुणनाशनविद्वेषैरस्याभिनयः प्रयोक्तव्यः ॥ ३७ ॥

अथ[2] मदो नाम मद्योपयोगादुत्पद्यते। स च त्रिविधः पञ्चविधभावश्च।

अत्रार्या भवन्ति ।

त्रिविधस्तु मदः कार्यस्तरुणो मध्यस्तथावकृष्टश्च ।
करणं पञ्चविधं स्यात् तस्याभिनयः प्रयोक्तव्यः ॥ ३८ ॥
कश्चिन् मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित्।
परुषवचनाभिधायी कश्चित् कश्चित् तथा स्वपिति ॥ ३९ ॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥ ४० ॥
स्मितवचनमधुररागो धृष्टतनुः किञ्चिदाकुलितवाक्यः ।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ॥ ४१ ॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमः प्रकृतिः ॥ ४२ ॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः ॥ ४३ ॥
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् ॥ ४४ ॥

---

१ श्यामा०— ख।
२ इत आरभ्य प्रथमार्यापर्यन्तो ग्रन्थः कपुस्तके न लभ्यते ।

सन्त्रासाच्छोकाद्वा भयप्रकर्षाच्च कारणोपगतः ।
उद्यम्यापि[1] हि कार्यो मदप्रणाशस्तथा तज्ज्ञैः ॥ ४५ ॥
एभिर्भावविशेषैः मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युदयसुखैर्वाक्यैस्तथैव शोकः क्षयं याति ॥ ४६ ॥

श्रमो नाम अध्वगतिव्यायामसेवादिभिर्विभावैरुत्पद्यते । तस्य गात्रसंवाहननिःश्वसितमुखविघूर्णनजृम्भणाङ्गमर्दनमन्दपादोत्क्षेपणनयनविघूर्णनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या ।

अध्वगतिव्यायामैर्नरस्य[2] सञ्जायते श्रमो नाम ।
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४७ ॥

आलस्यं नाम स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम् । तदभिनयेत् सर्वकर्मप्रद्वेषशयनासनतन्द्रानिद्रासेवनादिभिरनुभावैः ।

अत्रार्या

आलस्यं त्वभिनेयं खेदव्याधिस्वभावजं वापि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥ ४८ ॥

दैन्यं नाम दौर्गत्यमनःसंतापादिभिर्विभावैरुत्पद्यते । तस्याधृतिशिरोरोगगात्रस्तम्भमनःस्तम्भमृजापरिवर्णनादिभिरनुभावैरभिनयः प्रयोक्तव्यः

अत्रार्या

चिन्तौत्सुक्यसमुत्थाद्[3] दुःखाद्वा दीनता भवेत् पुंसाम् ।
सर्वमृजापरिहारैर्विविधोऽभिनयो भवेत्तस्य ॥ ४९ ॥

चिन्ता नाम ऐश्वर्यभ्रष्टेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैरुत्पद्यते । तामभिनयेत् निश्वसितोच्छ्वसितसन्तापध्यानाधोमुखचिन्तनतनुकार्श्यादिभिरनुभावैः ।

अत्रार्ये भवतः ।

ऐश्वर्येष्टद्रव्यापहारजनिता बहुप्रकारा तु ।
हृदयौत्सुक्योपगता चिन्ता तु नृणां समुद्भवति ॥ ५० ॥

---

१ वक्रोस्यापि हि—ख । २ इयमार्या कपुस्तके नास्ति ।
३ चित्तौ०—ख । ४ समुत्था—क ।

सोच्छ्वासैर्निश्वसितैः सन्तापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनैरधृत्या च ॥ ५१ ॥

मोहो नाम दैवोपघातव्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभिर्विभावैरुत्पद्यते । तस्य निश्चेष्टिताङ्गभ्रमणपतनघूर्णनदर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकः ।

अस्थाने तस्करान् दृष्ट्वा त्रासनैर्वा पृथग्विधैः ।
तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥ ५२ ॥

अत्र आर्या

व्यसनाभिघातभयपूर्ववैरसंस्मरणजो भवति मोहः ।
सर्वेन्द्रियसम्मोहादस्याभिनयः प्रयोक्तव्यः ॥ ५३ ॥

स्मृतिर्नाम सुखदुःखकृतानां भावानामनुस्मरणं स्वास्थ्यजघन्यरात्रिनिद्राच्छेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिर्विभावैरुत्पद्यते । तामभिनयेत् शिरःकम्पनावलोकनभ्रूसमुन्नमनप्रहर्षादिभिरनुभावैः ।

अत्र श्लोकार्ये भवतः ।

सुखदुःखमतिक्रान्तं तथा मतिविभावितम् ।
विस्मृतं च यथावृत्तं स्मरेद् यः स्मृतिमानसौ ॥ ५४ ॥
स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवा स्मृतिनिपुणैः ।
शिरउद्वाहनकम्पैर्भ्रूविक्षेपैः साभिनेतव्या ॥ ५५ ॥

धृतिर्नाम शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकार्थलाभविविधक्रीडादिभिर्विभावैरुत्पद्यते । तामभिनयेत् प्राप्तानां विषयाणामुपभोगात् अप्राप्तातीतोपहतविनष्टानामनुशोचनादिभिरनुभावैः ।

अत्रार्ये

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या ॥ ५६ ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
अप्राप्ते नहि शोको यस्यां हि भवेद् धृतिः सा तु ॥ ५७ ॥

व्रीडा नाम अकार्यकरणात्मिका गुरुव्यतिक्रमणावज्ञानप्रतिज्ञाना

निर्वहणकृतप्रत्यादिष्टपश्चात्तापादिभिर्विभावैरुत्पद्यते । तां निगूढवदनाधोमुखचिन्तनोर्वीलेखनवस्त्राङ्गुलीयकसंस्पर्शनखनिकृन्तनादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः ।

किञ्चिदकार्यं कुर्वन् यो हि नरो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ॥ ५८ ॥
लज्जानिगूढवदनो भूमिं विलिखन् नखैश्च विनिकृन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥ ५९ ॥

चपलता नाम रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैरुत्पद्यते । तस्याश्च वाक्पारुष्यादिभर्त्सनसम्प्रहारवधबन्धताडनज्ञापनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या

अविमृश्य तु यः कार्यं पुरुषो बधबन्धनादिकं समारभते ।
अविनिश्चितकारित्वात् स तु खलु चपलो बुधैर्ज्ञेयः ॥६०॥

हर्षो नाम मनोरथलाभेप्सितार्थाप्तीष्टजनसमागममनःपरितोषदेवगुरुराजभर्तृप्रसादनभोजनाच्छादनधनलाभोपभोगादिभिर्विभावैरुत्पद्यते । तमभिनयेन्नयनवदनप्रसादप्रियभाषणालिङ्गनकण्टकितास्रस्वेदोद्गमनललितताडनादिभिरनुभावैः ।

अत्रार्ये भवतः

प्राप्ते वाप्राप्ये वा लब्धेऽर्थे प्रियसमागमे वापि ।
हृदयमनोरथलाभे हर्षः संजायते पुंसाम् ॥ ६१ ॥
[1]नयनवदनप्रसादप्रियभाषालिङ्गनैश्च रोमाञ्चैः ।
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य ॥ ६२ ॥

आवेगो नाम उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघातादिभिर्विभावैरुत्पद्यते । तत्रोत्पातकृतो नाम विद्युदुल्कानिर्घातप्रतपनचन्द्रसूर्योपरागकेतुदर्शनादिभिर्विभावैरुत्पद्यते । तमभिनयेत् सर्वाङ्गस्रस्तविषण्णवैमनस्यमुखवैवर्ण्यविस्मयादिभिः । वातकृतं पुन-

१ इयमार्या खपुस्तके नास्ति ।

रवगुण्ठनाक्षिमर्दनवस्त्रसंगूहनत्त्वरितगमनादिभिरनुभावैः । वर्षाकृतं नाम सर्वाङ्गसंपिण्डनप्रधावनच्छत्राश्रयणादिभिः । अग्निकृतं तु धूमाकुलनेत्रसङ्कुचनाङ्गसंवेगविधूननातिक्रान्तपादादिभिः । कुञ्जरोद्भ्रमणकृतमपि त्वरितापसर्पणचपलगमनभयस्तम्भवेपथुपश्चादवलोकनाविस्मयादिभिः । प्रियश्रवणकृतं तु अभ्युत्थनालिङ्गनवस्त्राभरणप्रोद्यताश्रुपुलकादिभिः । अप्रियश्रवणकृतं भूमिपतनपरिदेवितविषपरिवर्तिकपरिधावितविलापरुदितादिभिः । व्यसनाभिघातकृतं तु सहसापक्रमणशस्त्रवर्मधारणगजतुरगरथारोहणसम्प्रहरणादिभिरभिनयेत् ।

इत्येषोऽष्टविधो ज्ञेय आवेगः संभ्रमात्मकः ।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणात् ॥ ६३ ॥

अत्रार्ये भवतः

अप्रियनिवेदनादिश्रवणादवधारितवचनस्य ।
शस्त्रक्षेपत्रासादावेगो नाम सम्भवति ॥ ६४ ॥
अप्रियनिवेदनाद्यो विषादभावाश्रयोऽनुभावोऽस्य ।
सहसा निदर्शनं चेत् प्रहरणपरिघट्टनं कार्यम् ॥ ६५ ॥

जडता नाम सर्वकार्याप्रतिपत्तिः इष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैरुत्पद्यते । तामभिनयेत् कथनाभाषणतूष्णींभावाप्रतिभनिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः ।

अत्रार्या

इष्टं वानिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥ ६६ ॥

गर्वो नाम ऐश्वर्यकुलरूपयौवनविद्याबलधनलाभादिभिर्विभावैरुत्पद्यते । तस्यावज्ञाधर्षणानुत्तरदानसंभाषणांसावलोकनविभ्रमापहसनवाक्पारुष्यगुर्वतिक्रमाणाधिक्षेपादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या

विद्यायौवनरूपादैश्वर्यादथ धनागमाद्वापि ।
गर्वः खलु नीचानां दृष्ट्यङ्गविचारणैः कार्यः ॥ ६७ ॥

---

१०सहन— क ।

विषादो नाम कार्यारम्भानिस्तरणदैवव्यापात्तिसमुत्थः । तमभिनयेत् सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यनिःश्वसितादिभिरनुभावैरुत्तममध्यानाम् । अधमानां तु परिधावनालोकनमुखशोषणसृक्परिलेहननिद्राश्वसितध्यानादिभिरनुभावैः ।

अत्रार्या श्लोकश्च

कार्यानिस्तरणकृतशौर्यादिग्रहणराजदोषाद्यैः ।
दैवादिष्टो योऽर्थस्तदसंप्राप्तौ विषादः स्यात् ।। ६८ ।।
विचित्रोपायचिन्ताभ्यां कार्यमुत्तममध्ययोः ।
निद्रानिःश्वसितध्यानैरधमानां तु दर्शयेत् ।। ६९ ।।

औत्सुक्यं नाम इष्टजनवियोगानुस्मरणोद्यानदर्शनादिभिर्विभावैरुत्पद्यते। तस्य दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्राशयनाभिलाषादिभिरभिनयः प्रयोक्तव्यः ।

अत्रार्या ।

इष्टजनादिवियोगादौत्सुक्यं जायते ह्यनुस्मृत्या ।
चिन्तानिद्रातन्द्रागात्रगुरुत्वैरभिनयो ह्यस्य ।। ७० ।।

निद्रा नाम दौर्बल्यश्रममदालस्यचिन्तात्याहारस्वभावादिभिर्विभावैरुत्पद्यते । तामभिनयेत् वदनगौरवगात्रपरिलोडननेत्रविघूर्णनजृम्भणगात्रविमर्दनोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसम्मोहनादिभिरनुभावैः ।

अत्रार्ये भवतः ।

आलस्याद् दौर्बल्यात् क्रमाच्छ्रमाच्चिन्तनात् स्वभावाच्च ।
रात्रौ जागरणादपि निद्रा पुरुषस्य संभवति ।। ७१ ।।
तस्या मुखगौरवगात्रैर्नयननिमीलनविघूर्णनजडत्वैः ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयः प्रयोक्तव्यः ।। ७२ ।।

अपस्मारो नाम देवनागयक्षराक्षसपिशाचादीनां ग्रहणादनुस्मरणात् उच्छिष्टशून्यागारसेवनाशुचिकान्तारातिपातधातुवैषम्यादिभिर्विभावैरुत्पद्यते । तस्य दुरितकम्पितनिःश्वसितधावनपतनस्वेदवदनफेनहिक्काजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्ये भवतः ।

भूतपिशाचस्मरणग्रहणानुच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचेश्च भवेद् ह्यपस्मारः ॥ ७३ ॥
सहसा भूमौ पतनं प्रकम्पनं वदनफेनमोक्षश्च ।
निःसंज्ञाभ्युत्थानं रूपाण्येतान्यपस्मारे ॥ ७४ ॥

सुप्तं नाम निद्रासमुत्थम्। तदुच्छ्वसितनिःश्वसितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसम्मोहात्स्वप्नादिभिरनुभावैरभिनयेत् ।

अत्रार्या

सोच्छ्वासैर्निःश्वासैर्मन्दाक्षिनिमीलनेन निश्चेष्टः ।
सर्वेन्द्रियसंमोहात् सुप्तं स्वप्नैः प्रयुञ्जीत ॥ ७५ ॥

विबोधो नाम निद्राच्छेदाहारविपरिणामदुःस्वप्नतीव्रशब्दरूपादिभिर्विभावैरुत्पद्यते । तं जृम्भणाक्षिमर्दनशयनमोक्षाङ्गवदनभुजावक्षेपणाङ्गुलित्रोटनादिभिरनुभावैरभिनयेत् ।

अत्रार्या

आहारविपरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणवलनाक्षिपरिमर्दैः ॥ ७६ ॥

अमर्षो नाम विद्यैश्वर्यधनबलाधिकैरधिक्षिप्तस्यावमानितस्य वा समुपपद्यते । तस्य शिरःकम्पनस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकौ

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ।
नृणामुत्साहसंपन्नो ह्यमर्षो नाम जायते ॥ ७७ ॥
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तनैः ।
शिरः प्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत नाट्यवित् ॥ ७८ ॥

अवहित्थं नाम आकारप्रच्छादनात्मकम् । तच्च लज्जाभयापजयगौरव जैह्म्यादिभिर्विभावैरुत्पद्यते । तस्यान्यथाकथनावलोकितकथाभङ्गकृतैरनुभावैरभिनयः प्रयोक्तव्यः ।

---

१ कान्तारातियात्–ख २ ०का०—क ।

अत्र श्लोकः ।

धार्ष्ट्यजैह्म्यादिसंभूतमवहित्थं भयानकम् ।
तच्चागणनया कार्यं तानि चोत्तरभाषणात् ॥

अथोग्रता नाम चौर्याभिग्रहणनृपापराधासत्प्रलापादिभिर्विभावैरुत्पद्यते । तां च वधबन्धनताडननिर्भत्सनादिभिरनुभावैरभिनयेत् ।

अत्रार्या

चौर्यग्रहणनिरोधान्नृपापराधात्ततोग्रता भवति ।
वधबन्धताडनादिभिरनुभावैरभिनयस्तस्याः ॥ ८० ॥

मतिर्नाम नानाशास्त्रार्थचिन्तनोहापोहादिभिर्विभावैरुत्पद्यते । तामभिनयेच्छिष्योपदेशार्थविकल्पनसंशयच्छेदनादिभिरनुभावैः ।

अत्र श्लोकः

नानाशास्त्रविनिष्पन्ना मतिः संजायते नृणाम् ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ॥ ८१ ॥

व्याधिर्नाम वातपित्तकफसंनिपातप्रभवः । तस्य ज्वरादयो विशेषाः । ज्वरस्तु खलु द्विविधः सशीतः सदाहश्च । सशीतस्तावत् प्रवेपितसर्वाङ्गोत्कम्पनकुञ्चितहनुचलननासाविघूर्णनमुखशोषणरोमाञ्चास्रानेकपरिदेवनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । सदाहः पुनः विक्षिप्तवस्त्रकरचरणभूम्यभिलाषानुलेपनशीताभिलाषपरिदेवितोत्क्रुष्टादिभिः । ये चान्येऽपि व्याधयः तेऽपि खलु मुखविघूर्णनगात्रस्तम्भनिःश्वसनस्तनितोत्क्रुष्टवेपनपरिदेवनादिभिरनुभावैरभिनेयाः ।

अत्र श्लोकः

सामान्यतस्तु व्याधीनां कर्त्तव्योऽभिनयो बुधैः ।
स्रस्ताङ्गगात्रविक्षेपै रुजा मुखविघूर्णनैः ॥ ८२ ॥

उन्मादो नाम इष्टजनवियोगविभवनाशव्यसनाभिघातवातपित्तश्लेष्मप्रकोपादिभिर्विभावैरुत्पद्यते । तमनिमित्तहसितरुदितोत्क्रुष्टासम्बन्धप्रलापशयनोपाविष्टोत्थितप्रधावितनृत्तगीतपाठितभस्मपांश्ववधूलनतृणनिर्माल्यकुचेलचीरघटशरावाभारणाधारणोपभोगैरन्यैश्चानवहितचेष्टाकरणादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् ।
विविधात् पित्तविकारादुन्मादो नाम संभवति ॥ ८३ ॥
अनिमित्तहासितरुदितोपविष्टगतिप्रधावितोत्क्रुष्टैः ।
अन्यैश्च विकारकृतैरुन्मादं संप्रयुञ्जीत ॥ ८४ ॥

मरणं नाम व्याधिजमभिघातजं च । तत्र यदान्त्रयकृच्छूलदोषवैषम्यगण्डपिण्डकाज्वरविषूचिकादिभिर्विभावैरुत्पद्यते तद्व्याधिप्रभवम् । अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथयानपवनविनाशप्रभवम् । एतयोरिदानीमभिनयविशेषं वक्ष्यामि । तत्र व्याधिजं विषण्णगात्रमप्यायताङ्गविचेष्टितं निमीलितनयनं हिक्काश्वासोत्पतनमनपेक्षितपारिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् ।

अत्र श्लोकः

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ॥ ८५ ॥

अभिघातजे तु नानाप्रकाराभिनयविशेषाः । यथा शस्त्रक्षते तावत् सहसाभूमिपतनादिभिरनुभावैराभिनयः प्रयोक्तव्यः । अहिदष्टे तु विषपीते वा विषवेगे यथा कार्श्यवेपथुदाहहिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः ।

अत्रानुवंश्यौ श्लोकौ भवतः

कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुं तथा ।
दाहं तृतीये हिक्कां तु चतुर्थे संप्रयोजयेत् ॥ ८६ ॥
फेनं तु पञ्चमे कुर्यात् षष्ठे तु स्कन्धभञ्जनम् ।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा ॥ ८७ ॥
श्वापदगजतुरगोद्भवपशुयानपतनजं चापि ।
शस्त्रक्षतवत् कुर्यादनपेक्षितगात्रसञ्चारम् ॥ ८८ ॥
इत्येवं मरणं ज्ञेयं नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यं बुधैः सम्यक् यथा वागङ्गचेष्टितैः ॥ ८९ ॥

त्रासो नाम विद्युदुल्काशनिपातनिर्घाताम्बुदरवसत्त्वदर्शनपशुरवा-

दिभिर्विभावैरुत्पद्यते । संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापा-दिभिरनुभावैरभिनयेत् ।

अत्र श्लोकः

महाभैरवनादाद्यैस्त्रासः समुपजायते ।
स्रस्ताङ्गार्द्धनिमेषाद्यैस्तस्य त्वभिनयो भवेत् ॥ ९० ॥

वितर्को नाम सन्देहविमर्शप्रत्ययादिभिर्विभावैरुत्पद्यते । तमभि-नयेत् विविधविचारितसंज्ञासंप्रहारणमन्त्रसंगूहनादिभिरनुभावैः ।

अत्र श्लोकः ।

विचारणादिसंभूतः संदेहजननात्मकः ।
वितर्कस्त्वभिनेयः स्याच्छिरोभ्रूपक्षकम्पनैः ॥ ९१ ॥

एवमेते त्रयस्त्रिंशत् व्यभिचारिणो विभावादेशकालावस्थानुगतम-ध्यमाधमोत्तमैःस्त्रीनपुंसकैः पुरुषप्रयोगावशाद्युत्पाद्या इति ।

त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः ।
सात्त्विकांस्तु पुनर्भावान् व्याख्यास्याम्यनुपूर्वशः ॥ ९२ ॥

अत्राह किमन्ये भावाः सत्त्वेन विनाभिधीयन्ते यत एते सात्त्वि-का इत्युच्यन्ते ? अत्रोच्यते इह सत्त्वं नाम मनःप्रभवम् । तच्च समा-हितमनस्त्वात् उत्पद्यते । मनःसमाधानाच्च सत्त्वनिर्वृत्तिर्भवति । तस्य च योऽसौ स्वभावः स्तम्भस्वेदरोमाञ्चास्रवैवर्ण्यादिको न दृश्यते मनसा कर्तुमिति लोकस्वभावानुकरणत्वाच्च नान्यस्य सत्त्वमीप्सितम् । अत्राह को दृष्टान्त इति चेत्, अत्रोच्यते इह हि नाट्यधर्मःप्रवृत्तः सुखदुःखकृतो भा-वः तथासत्त्वविशुद्धाधिष्ठितः कार्यो यथास्वरूपो भवति । तत्र दुःखं नाम रोदनात्मकम् । तत्कथमदुःखितेन, सुखं प्रहर्षात्मकं असुखितेनाभिनेतुं शक्यते इति सत्त्वसमीप्सितमिति कृत्वा सात्त्विको नाम इति भावः । एत-देवास्य सत्त्वं यद्दुःखितेन सुखितेन वा अश्रुरोमाञ्चौ दर्शयितव्याविति व्याख्यातम् । इमे

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलयः इत्यष्टौ सात्त्विकाः स्मृताः ॥ ९३ ॥

तत्र

क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
व्यायामक्लमघर्मात् स्वेदः संपीडनाच्चैव ॥ ९४ ॥
हर्षभयरोगविस्मयविषादमदरोषसंभ्भवः स्तम्भः ।
शीतभयहर्षरोषस्पर्शजरासम्भवः कम्पः ॥ ९५ ॥
आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणभयाच्च ।
शोकानिमिषप्रेक्षणशीताद्रोगात् भवेदस्रम् ॥ ९६ ॥
शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
स्पर्शभयशीतहर्षात् क्रोधाद्रोगाच्च रोमाञ्चः ॥ ९७ ॥
स्वरसादो भयहर्षक्रोधज्वररोगमदजनितः ।
श्रममूर्च्छामदनिद्राभिघातमोहादिभिः प्रलयः ॥ ९८ ॥
एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः ।
कर्म चैषां प्रवक्ष्यामि ह्यनुभावानुभावकम् ॥ ९९ ॥
व्यञ्जनग्रहणाच्चापि स्वेदापनयनेन च ।
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः ॥ १०० ॥
निश्चेष्टो निष्प्रकम्पश्च स्मितशून्यजडाकृतिः ।
निःसंज्ञस्तब्धगात्रश्च स्तम्भं त्वभिनयेद् बुधः ॥ १०१ ॥
वेपनात् स्फुरणात् कम्पात् वेपथुं सम्प्रयोजयेत् ।
स्वरभेदं तथा चैव भिन्नगद्गदनिस्वनैः ॥ १०२ ॥
मुहुः कण्टकितत्वेन तथोल्लुकसनेन (?) च ।
रोमाञ्चस्त्वभिनेयोऽसौ गात्रसंस्पर्शनेन च ॥ १०३ ॥
नेत्रसंमार्जनैर्वाष्पैरश्रु त्वभिनयेद् बुधः ।
मुखवर्णपरावृत्या नाडीपीडनयोगतः ॥ १०४ ॥
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम् ।
मेदिनीपतनाच्चापि प्रलयाभिनयो भवेत् ॥ १०५ ॥
एकोनपञ्चाशदिमे यथावद् भावा व्यवस्था गदिता मया वः ।
येषां च ये यत्र रसे नियोज्यास्तान् श्रोतुमर्हन्ति च विप्रमुख्याः ॥१०६॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा ।

सुप्तं निद्रावहित्थं च शृङ्गारे वेपथुस्तथा ॥ १०७ ॥
आलस्यौग्ग्यजुगुप्साभिर्भावैस्तु परिवर्जिताः ।
उद्भावयन्ति शृङ्गारं सर्वे भावाः स्वसंज्ञया ॥ १०८ ॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा ।
सुप्तनिद्रावहित्थञ्च हास्ये भावाः प्रकीर्तिताः ॥ १०९ ॥
निर्वेदश्चैव चिन्ता च दैन्यग्लान्यस्रमेव च ।
जडता मरणं चैव व्याधिश्च करुणे रसे ॥ ११० ॥
असम्मोहस्तथोत्साहः आवेगो हर्ष एव च ।
मतिश्चैव तथोग्रत्वं हर्ष उन्माद एव च ॥ १११ ॥
रोमाञ्चः प्रतिबोधश्च क्रोधासूये धृतिस्तथा ।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति हि ॥ ११२ ॥
गर्वोऽसूया तथोत्साह आवेगो मद एव च ।
क्रोधश्चपलता हर्षो रौद्रे तूग्रत्वमेव च ॥ ११३ ॥
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके ॥ ११४ ॥
अपस्मारस्तथोन्मादो विषादो मद एव च ।
मृत्युव्याधी भयं चैव भावा बीभत्ससंश्रिताः ॥ ११५ ॥
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा ।
आवेगो जडता हर्षो मूर्च्छा चैवाद्भुताश्रयाः ॥ ११६ ॥
ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिताः ।
रसेष्वेतेषु सर्वेषु विज्ञेया नाट्ययोक्तृभिः ॥ ११७ ॥
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः ।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ॥ ११८ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद् बहु ।
स मन्तव्यो रसः स्थायी शेषा सञ्चारिणो मताः ॥ ११९ ॥
विभावानुभावयुतो ह्यङ्गवस्तुसमाश्रयः ।
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् ॥ १२० ॥
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः ।

सञ्चार्याकारमात्रेण स्थायी यस्माद् व्यवस्थितः ॥ १२१ ॥
चित्राणि न विरज्यन्ते लोके चित्रं हि दुर्लभम् ।
विमर्दो रागमायाति प्रयुक्तमपि यत्नतः ॥ १२२ ॥
नानार्थभावनिष्पन्ना स्थायिसत्त्वविचारिणः ।
पुंसानुकीर्णाः कर्त्तव्याः काव्ये सत्त्वरसाश्रये ॥ १२३ ॥
एवं रसाश्च भावाश्च व्यवस्था नाटके स्मृताः ।
य एवमेतान् जानाति स गच्छेत्सिद्धिमुत्तमाम् ॥ १२४ ॥

इति भारतीये नाट्यशास्त्रे भावव्यञ्जको नाम सप्तमोऽध्यायः ।

## अथ अष्टमोऽध्यायः ।

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥ १ ॥
नाट्ये कतिविधः कार्यः तज्ज्ञैरभिनयक्रमः ।
कथं वाभिनयो ह्येष कतिभेदस्तु कीर्तितः ॥ २ ॥
सर्वमेतद्यथातत्त्वं भगवन् वक्तुमर्हसि ।
यो यथाभिनयो यस्मिन् योक्तव्यः सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान् प्रति ॥ ४ ॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ।
यस्मादभिनयो ह्येष विधिवत् समुदाहृतः ॥ ५ ॥

यदुक्तं चत्वारोऽभिनया इति तान् वर्णयिष्यामः । अत्राह अभिनय इति कस्मात्, अत्रोच्यते अभीत्युपसर्गः णीञ् प्रापणार्थको धातुः । अस्याभिनीत्येवं व्यवस्थितस्याच्प्रत्ययान्तस्याभिनय इत्येव रूपं सिद्धम् । एतच्च धात्वनुवचनेनावधार्यं भवति ।

अत्र श्लोकः

अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये ।
यस्मात्पदार्थान्नयति तस्मादभिनयः स्मृतः ॥ ६ ॥
विभावयन्ति यस्माच्च नानार्थान् हि प्रयोगतः ।

शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥ ७ ॥
चतुर्विधश्चैव भवेन्नाट्यस्याभिनयो द्विजाः ।
अनेकभेदबाहुल्यं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ॥ ८ ॥
आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पितः ॥ ९ ॥
सात्त्विकः पूर्वमुक्तस्तु भावैस्तु सहितो मया ।
अङ्गाभिनयमेवातो गदतो मे निबोधत ॥ १० ॥
त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ ११ ॥
शिरोहस्तकटीवक्षःपार्श्वपादसमन्वितः ।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसङ्ग्रहः ॥ १२ ॥
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि ।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥ १३ ॥
तस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ १४ ॥
आङ्गिकस्तु भवेच्छाखा अङ्कुरः सूचना भवेत् ।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥ १५ ॥
मुखजेऽभिनये विप्रा नानाभावसमाश्रये ।
शिरसः प्रथमं कर्म गदतो मे निबोधत ॥ १६ ॥
आकम्पितं कम्पितं च धूतं विधुतमेव च ।
परिवाहितोद्वाहितकमवधूतं तथाञ्चितम् ॥ १७ ॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् ।
लोलितं चैव विज्ञेयं त्रयोदशविधं शिरः ॥ १८ ॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् ।
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥ १९ ॥
संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा ।
निर्देशे वाहने चैव भवेदाकम्पितं शिरः ॥ २० ॥
रोषे वितर्के विज्ञाने प्रतिज्ञातेऽथ तर्जने ।

व्याध्यमर्षणयोश्चैव शिरः कम्पितमिष्यते ॥ २१ ॥
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते ।
द्रुतमारेचनादेतद्विधुतं तु भवेच्छिरः ॥ २२ ॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥ २३ ॥
शीतग्रस्ते भयार्त्ते च त्रासिते ज्वरिते[1] तथा ।
पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः ॥ २४ ॥
पर्यायतः पार्श्वगतं शिरः स्यात् परिवाहितम् ।
[2]सकृदुद्वाहितं चोर्ध्वमुद्वाहितमिति स्मृतम्[3] ॥ २५ ॥
साधने विस्मये हर्षे स्थिते चामर्षिते तथा ।
विचारे विहृते[4] चैव लीलायां परिवाहितम् ॥ २६ ॥
[5]गर्वेच्छादर्शने चैव तथा चोर्ध्वनिरीक्षणे ।
[6]उद्वाहितं तु कर्त्तव्यमात्मसम्भावनादिषु ॥ २७ ॥
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
सन्देशावाहनालापसंज्ञादिषु तदिष्यते ॥ २८ ॥
किञ्चित् पार्श्वानतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मत्ते सचिन्ते दुःखिते भवेत ॥ २९ ॥
उत्क्षिप्तबाहुशिरसस्तथाञ्चिताशिरोधरः ।
निहाञ्चितं तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् ॥ ३० ॥
गर्वे विलासे ललिते बिव्वोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते स्तम्भमाने निहाञ्चितम् ॥ ३१ ॥
परावृत्तानुकरणात् परावृत्तं शिरः स्मृतम् ।
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ॥ ३२ ॥
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।

---

१ त्वरिते-क ।
२ आधूतमुच्यते तिर्यक् सकृदुद्वादितं ( ? ) च यत्-ख ।
३ स्मृ०-ख । ४ निहृते-ख । ५ ०र्वा:त्म-ख ।
६ अधूतं तु शिगे ज्ञेय०-ख । ७ शिखरं-ख ।

प्रांशुदिव्यास्त्रयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥ ३३ ॥
अधोमुखं स्थितं चापि शिरः प्राहुरधोगतम् ।
लज्जायां च प्रणामे च दुःखे चाधोगतं भवेत्॥ ३४ ॥
सर्वतो लोलनाच्चापि शिरः स्यात् परिलोलितम् ।
मूर्च्छाव्याधिमदावेगग्रहनिद्रादिषु स्मृतम् ॥ ३५ ॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३६ ॥
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥ ३७ ॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ ३८ ॥
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ३९ ॥
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा ।
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४० ॥
कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा ।
वितर्किताऽर्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४१ ॥
आकेकरा विकोशा च त्रस्ताथ मदिरा तथा ।
षट्त्रिंशद् दृष्टयो ह्येता नामतोऽभिहिता मया ॥ ४२ ॥
अस्य दृष्टिविधानस्य नानाभावरसाश्रयम् ।
लक्षणं सम्प्रवक्ष्यामि यथाकर्म प्रयोगतः ॥ ४३ ॥
हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ ४४ ॥
प्रोद्वृत्तनिष्टब्धपुटा प्रस्फुरद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥ ४५ ॥
क्रमादाकुञ्चितपुटा विभ्रान्ताकुलतारका ।

---

१ ०वेश–ख । २ दम्भा–ख । ३ साभिमाना–ख ।
४ ०तकोपामर्ष–ख । ५ सविभ्रान्तात्प०–ख ।

हास्या[1] दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति ॥ ४६ ॥
पतितोर्ध्वपुटा[2] साश्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४७ ॥
या त्वाकुञ्चितपक्ष्माग्रा सार्श्चर्योद्धृत्ततारका ।
सौम्या विकासितान्ता च साद्भुता दृष्टिरद्भुते ॥ ४८ ॥
क्रूरा रूक्षारुणोवृत्तानिष्टब्धपुटतारका ।
भ्रुकुटीकुटिला[3] दृष्टिः रौद्रे रौद्री रसा स्मृता ॥ ४९ ॥
दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ५० ॥
निकुञ्चितपुटापाङ्गा घूर्णोपप्लुततारका ।
संश्लिष्टस्मितपक्ष्मा च बीभत्सा दृष्टिरिष्यते ॥ ५१ ॥
रसजा[4] दृष्टयो ह्येता विज्ञेया लक्षणान्विता ।
अतः परं प्रवक्ष्यामि स्थायिभावसमाश्रयाः ॥ ५२ ॥
व्याकोशमध्या मधुरा स्मेरताराभिलाषिणी ।
सानन्दाश्रुकृता[5] दृष्टिः स्निग्धेयं रतिभावजा ॥ ५३ ॥
चला[6] हसितगर्भा च विश्वतारानिमेषिणी ।
किञ्चिदाकुञ्चिता दृष्टिः हृष्टा हासे प्रकीर्तिता ॥ ५४ ॥
ईषत्स्रस्तोत्तरपुटा[7] किञ्चित्संरब्धतारका[8] ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥ ५५ ॥
रूक्षा स्थिरोद्धृत्तपुटा निष्टब्धोद्धृत्ततारका ।
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते ॥ ५६ ॥

---

१ स्याद् दृष्टी (सा दृष्टि) स्तु- ख।
२ प्रती०-क। ३ श्लोकोऽयं खपुस्तके नोपलभ्यते।
४ अतः पूर्वं खपुस्तकेऽयं श्लोको दृश्यते—
नासाग्रसक्ता निमिषा तथाधोभागचारिणी।
आकेकरपुटा चैव शान्ता दृष्टिर्भवेदसौ ॥
५ ०न्दभ्रू-ख।
६ वला हसितसर्गं वै विशताराभिलाषिणी (?)-ख।
७ अर्ध-ख। ८ रुद्धतारा जलाविला-ख।

संस्थिते तारके यस्याः स्थिता विकसिता तथा।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ॥ ५७ ॥
विष्फारितोभयपुटा भयकम्पिततारका।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ५८ ॥
संकोचितपुटन्यासा[1] दृष्टिर्मीलिततारका।
[2]पक्ष्मोद्देशात् समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥ ५९ ॥
[3]विमलोद्धृततारा च हृष्टा[4]भयपुटान्विता[5]।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥ ६० ॥
स्थायिभावाश्रया[6] ह्येता लक्षिता दृष्टयो मया।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम् ॥ ६१ ॥
समतारा समपुटा निष्कम्पा शून्यदर्शना।
बाह्यार्थग्राहिणी क्षामा शून्या दृष्टिः प्रकीर्तिता ॥ ६२ ॥
[7]प्रस्यन्दमानपक्ष्मान्ता नात्यर्थमुकुलैः पुटैः।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका ॥ ६३ ॥
श्रमप्रम्लापितपुटा क्षामान्ताञ्चितलोचना।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥ ६४ ॥
किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया।
त्रपाधोमुखतारा च दृष्टिर्लज्जान्विता तु सा ॥ ६५ ॥
ग्लानभ्रूपुटपक्ष्मा या शिथिला मन्दचारिणी।
क्लमप्रवृष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥ ६६ ॥
किञ्चिच्चला स्थिरा किञ्चिदुत्तुङ्गा किञ्चिदायता।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥ ६७ ॥
विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी।
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥ ६८ ॥
स्फुरिताश्लिष्टपक्ष्मार्धा मुकुलोर्ध्वपुटाञ्चिता।

---

१ व्योमा (?)–ख। २ लक्ष्यो०–ख।
३ भृशमु०–ख। ४ न०–ख। ५ ०ञ्चिता–ख।
६ ०वस्मृता–ख। ७ श्लोकद्वयमेतत् खपुस्तके नोपलभ्यते।

सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥ ६९ ॥
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
सानिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७० ॥
मधुराकुञ्चितान्ता च सभ्रूक्षेपाऽथ सस्मिता ।
समन्मथविकारा[1] च दृष्टिः सा ललिता स्मृता ॥ ७१ ॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरिष्टा वितर्किता ॥ ७२ ॥
अर्धव्याकोशतारा च ह्लादार्धमुकुलैः पुटैः ।
स्मितार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका ॥ ७३ ॥
विभ्रान्ततारका[2] या तु विभ्रान्तपुटदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७४ ॥
पुटौ प्रस्फुरितौ यस्य निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ७५ ॥
आकुञ्चिपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥ ७६ ॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरुच्यते ॥ ७७ ॥
त्रासोद्वृत्तपुटा या तु त्रासोत्कम्पिततारका ।
सन्त्रासोत्फुलमध्या च त्रस्ता दृष्टिरुदाहृता ॥ ७८ ॥
व्याघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥ ७९ ॥
किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका ।

---

१ श्लोकद्वयमिदं कपुस्तके न दृश्यते। २ ०सा-ख।
३ अनवस्थिततारा च-ख। ४ श्लोकद्वयमेतत् खपुस्तके नास्ति।

तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ॥ ८० ॥
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥ ८१ ॥
इत्येवं लक्षिता षट्त्रिंशद् दृष्टयो मया ।
रसजा भावजाश्चासां विनियोगं निबोधत ॥ ८२ ॥
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
शृणुध्वं व्यभिचारिण्यः सञ्चारिषु यथाहिताः ॥ ८३ ॥
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८४ ॥
श्रान्ता श्रमार्त्तौ स्वेदे च लज्जायां लज्जिता तथा ।
अपस्मारे तथा व्याधौ ग्लाने ग्लाना विधीयते ॥ ८५ ॥
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते ॥ ८६ ॥
कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥ ८७ ॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृता तर्के च तर्किता ॥ ८८ ॥
आह्लादेष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा ॥ ८९ ॥
विप्लुता चापलोन्माददुःखार्तिमरणादिषु ।
आकेकरा दुरालोके विच्छेदप्रोक्षितेषु च ॥ ९० ॥
विबोधामर्षगर्वोग्र्यमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा च मदेष्विति ॥ ९१ ॥
षट्त्रिंशद् दृष्टयो ह्येता यथावत् प्रतिपादिताः ।
रसजानां तु दृष्टीनां भावजानां तथैव च ॥ ९२ ॥
तारापुटभ्रुवां कर्म गदतो मे निबोधत ।

१ अनत्रस्थिततारा च-ख ।
२ ललिता ललितार्थेषु-क ।    ३ निर्बाध-क ।

भ्रमणं वलनं पातश्चलनं सम्प्रवेशनम् ॥ ९३ ॥
निवर्तनं समुद्वृत्त निष्क्रामः प्राकृतं तथा ।
पर्यस्तं मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ॥ ९४ ॥
चलनं गमनं त्र्यस्रं[1] पातनं स्रस्तता तथा ।
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् ॥ ९५ ॥
विवर्तनं कटाक्षस्तु समुद्वृतं समुन्नतिः ।
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् ॥ ९६ ॥
तथैषां रसभावेषु विनियोगं निबोधत ।
भ्रमणं चलनोद्वृते निष्क्रामो वीररौद्रयोः ॥ ९७ ॥
निष्क्रामणं संवलनं कर्तव्यं तु भयानके ।
हास्यवीभत्सयोश्चापि प्रवेशनमिहेष्यते ॥ ९८ ॥
पातनं करुणे कार्यं निष्क्रामणमथाद्भुते ।
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् ॥ ९९ ॥
स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् ।
एवं सर्वेषु भावेषु ताराकर्म नियोजयेत् ॥ १०० ॥
तथा तत्रैव वक्ष्यामः प्रकारं दर्शनस्य तु ।
समं साच्यनुवृत्ते तु आलोकितविलोकिते ॥ १०१ ॥
प्रलोकितोल्लोकिते चावलोकितमेव च ।
समतारं च सौम्यं च यद् दृष्टं तत् समं स्मृतम् ॥ १०२ ॥
पक्ष्मान्तर्गततारं च त्र्यस्रं साचिकृतं तु तत् ।
रूपनिर्वापणायुक्तमनुवृत्तमिति स्फुटम् ॥ १०३ ॥
सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम् ॥ १०४ ॥
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ।
इत्येष दर्शनविधिः सर्वभावरसाश्रयः ॥ १०५ ॥
ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ।
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ॥ १०६ ॥

---

१ सन्ये ( त्र्यस्रा ? )–ख

विवर्तितं प्रस्फुरितं पिहितं संवितालितम्[१] ।
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ॥ १०७ ॥
समागतो निमेषः स्यादायामस्तु प्रसारितम् ।
आकुञ्चितं कुञ्चितं स्यात् समं स्वाभाविकं स्मृतम् ॥ १०८ ॥
विवर्तितं समुद्वृत्तं स्फुरितं स्यन्दितं तथा ।
स्थगितं विहितं प्रोक्तमाहतं तु वितालितम्[२] ॥ १०९ ॥
अथैषां रसभावेषु विनियोगं निबोधत ।
क्रोधे विवर्तितः कार्यः निमेषोन्मेषणैः सह ॥ ११० ॥
विस्मयार्थेषु हर्षे च वीर्ये चैव प्रसारितम् ।
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ॥ १११ ॥
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं भवेत् ।
सुप्तमूर्च्छितवातोष्णधूमवर्षाशनार्थिषु ॥ ११२ ॥
नेत्ररोगे च पिहितमभिघाते वितालितम्[३] ।
इत्येवं रसभावेषु तारकापुटयोर्विधिः ॥ ११३ ॥
कार्येऽनुगतमस्यैव भ्रुवोः कर्म निबोधत ।
उत्क्षेपं पातनं चैव भ्रुकुटी चतुरं भ्रुवोः ॥ ११४ ॥
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा ।
भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा ॥ ११५ ॥
एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम् ।
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता ॥ ११६ ॥
चतुरं किञ्चिदुच्छ्वासान्मधुरायतयोर्भ्रुवोः ।
एकस्या उभयोर्वापि मृदु भङ्गेन कुञ्चितम् ॥ ११७ ॥
एकस्या एव ललितादुत्क्षेपाद्रचिते भ्रुवः ।
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् ॥ ११८ ॥
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ।
कोपे वितर्के हेलायां लीलादौ सहजे तथा ॥ ११९ ॥
श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत् ।

---

१ सवितान्त्रयम (ख ?) ख । २ विलोलितम्–ख । ३ वितानिते–ख ।

उत्क्षेपे विस्मये हर्षे रोषे चैव द्वयोरपि ॥ १२० ॥
आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम् ।
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रूकुटीं बुधः ॥ १२१ ॥
शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत् ।
मोट्टायिते कुट्टमिते विलासे किलिकिञ्चिते ॥ १२२ ॥
विकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात् स्वाभाविकं बुधः ॥ १२३ ॥
इत्येवं तु भ्रुवः प्रोक्ता नासाकर्म निबोधत ।
नता मन्दा विकृष्टा च सोच्छवासा च विघूर्णिता ॥ १२४ ॥
स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता ।
नता मुहुश्लिष्टपुटा मन्दा तु निभृता स्मृता ॥ १२५ ॥
विकृष्टोत्फुल्लितपुटा सोच्छ्वासा कृष्टमारुता ।
विघूर्णिता संकुचिता समा स्वाभाविका स्मृता ॥ १२६ ॥
नासिकालक्षणं ह्येतत विनियोग निबोधत ।
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ॥ १२७ ॥
निर्वेदौत्सुक्यचिन्तासु मन्दा शोके तु कीर्तिता ।
विकृष्टा तीव्रगन्धोध्र्वश्वासरोषभयार्तिषु ॥ १२८ ॥
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ।
विघूर्णितोक्ता हास्येषु जुगुप्सायामसूयिते ॥ १२९ ॥
स्वाभाविका शेषभावेष्वित्येवं नासिका स्मृता ।
क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ॥ १३० ॥
षड्विधं गण्डमुदिष्टं तस्य लक्षणमुच्यते ।
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ॥ १३१ ॥
उन्नतं पूर्णमत्रोक्तं कम्पितं स्फुरितं भवेत् ।
स्यात कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते ॥ १३२ ॥

---

१ ०पे–क । २ ०ता दृष्टयः-ख । ३ ०कूर्णि०-ख ।
४ एष श्लोकः खपुस्तके न दृश्यते ।

गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ।
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमिष्यते ॥ १३३ ॥
पूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम्[1] ।
कुञ्चितं च सरोमाञ्चं स्पर्शे शीते भये ज्वरे ॥ १३४ ॥
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ।
विवर्तने[2] कम्पनं च विसर्गो विनिगूहनम् ॥ १३५ ॥
सन्दष्टकं समुद्गगं च षट् कर्माण्यधरस्य तु ।
विघूर्णनं[3] विवर्तस्तु वेपनं कम्पनं स्मृतम् ॥ १३६ ॥
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
सन्दष्टको द्विजैर्दष्टः समुद्गः[4] सहिता गतिः ॥ १३७ ॥
इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत ।
असूयावेदनालज्जावस्यादिषु[5][6] विवर्तनम् ॥ १३८ ॥
कम्पनं वेपनं[7] शीतज्वररोषजयादिषु ।
स्त्रीणां विलासे विव्वोके विसर्गो[8] रञ्जने तथा ॥ १३९ ॥
विनिगूहनमायासे सन्दष्टं क्रोधकर्मणि ।
समुद्गस्त्वनुकम्पायां[9] चुम्बने चाभिनन्दने ॥ १४० ॥
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं खण्डनं छिन्नं[10] चुक्षितं लेहनं समम् ॥ १४१ ॥
दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्षः संस्फोटः खण्डनं मुहुः ॥ १४२ ॥
छिन्नं तु गाढसंश्लेषश्चुक्षितं[11] दूरविच्युतिः ।
लेहनं जिव्हया लेहः[12] किञ्चिच्चेष्टः समं भवेत ॥ १४३ ॥
दन्तैर्दष्टेऽधरे दष्ट इत्येषां विनियोजनम् ।

---

१ कम्पे-ख । २ ०क०-ख । ३ ०कूणणं निवर्त०-स ।
४ समुद्धतं समुद्गकम्-ख । ५ ०वज्ञा-ख । ६ हं०-क ।
७ कोपशीतार्तिभयरोगजयादिषु-ख । ८ ०र्गः सुरते स्मृतः-ख ।
९ ०तिकम्पाङ्गधूनने-ख । १० दन्तचिकितं-ख ।
११ ०चिकितं दूरमुद्यतम्-ख । १२ ०लेषः ( शाः )-ख ।

भयशीतज्वर[1]व्याधिग्रस्तानां कुट्टनं भवेत् ॥ १४४ ॥
ज[2]प्याध्ययनसल्लापभक्षयोगे च खण्डनम् ।
छिन्नं व्याधौ भये शीते व्या[3]यामे रुषिते क्षिते ॥ १४५ ॥
जृम्भणे चुक्षितं कार्यं तथा लेह्ये च लेहनम् ।
समं स्वाभावभावेषु सन्दष्टः क्रोधकर्मसु ॥ १४६ ॥
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ।
विधुतं विनिवृत्तं च निर्भग्नं भुग्नमेव च ॥ १४७ ॥
निर्वृत्तं च तथोद्वाही कर्माण्यत्रास्यजानि तु ।
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥ १४८ ॥
अवाङ्मुखं च निर्भुग्नं व्याभुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च विवृतमुद्वास्युत्क्षिप्तमेव च ॥ १४९ ॥
विनिवृत्तमसूयायां ईर्ष्याक्रोधकृतेन च ।
अवज्ञाविहृतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ॥ १५० ॥
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥ १५१ ॥
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावजम् ।
निर्वेदौत्सुक्यचिन्तासु तथा च विनिमन्त्रणे ॥ १५२ ॥
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहलीलायां गर्वे गच्छत्स्वनादरे ॥ १५३ ॥
एवं नामेतिकार्यं च कोपवाक्ये विचक्षणैः ।
समं साचिकृताद्युक्ता यच्च दृष्टिविकल्पितम् ॥ १५४ ॥
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम् ।
अथातो मुखरागश्च चतुर्धा परिकीर्तितः ॥ १५५ ॥
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ।
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ॥ १५६ ॥

---

१ जरा–क । २ जपा. .यनं संतापभद्वायोतेषु–ख ।
३ ०प्वायामे कूजिते मृते–ख ।
४–अतः परमष्टौ श्लोकाः खपुस्तके नोपलभ्यन्ते ।

मध्यस्थादिषु भावेषु[1] मुखरागः प्रयोक्तृभिः।
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ॥ १५७ ॥
वीररौद्र[2]मदाद्येषु रक्तः स्यात् करुणे तथा।
भयानके सबीभत्से श्यामं सञ्जायते मुखम् ॥ १५८ ॥
एवं भावरसार्थेषु मुखरागं प्रयोजयेत्।
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः ॥ १५९ ॥
मुखरागविहीनस्तु नैव शोभान्वितो भवेत्।
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ॥ १६० ॥
द्विगुणां लभते शोभां रात्राविव निशाकरः।
नयनाभिनयोऽपि स्यान्नानाभाव[3]रसान्वितः ॥ १६१ ॥
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम्।
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥ १६२ ॥
तथा भावरसोपेतं मुखरागं प्रयोजयेत्।
इत्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः ॥ १६३ ॥
अतः परं प्रवक्ष्यामि ग्रीवाकर्माणि वै द्विजाः।
समा [4]नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ॥ १६४ ॥
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः।
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ॥ १६५ ॥
नता नैतास्यालङ्कार[6]बन्धे कण्ठावलम्बने।
उन्नताभ्युन्नतमुखी ग्रीवा[7] चोर्ध्वनिवेशने ॥ १६६ ॥
त्र्यस्रा पार्श्वगता चैव स्कन्दभारेऽथ दुःखिते।
रेचिता विधुतभ्रान्ता ह्यावे मथननृत्तयोः ॥ १६७ ॥
कुञ्चिता[8]कुञ्चिते मूर्ध्नि धारिते गलरक्षणे।
अञ्चितापसृतो[11]द्बन्धकेशकर्षोच्चदर्शने ॥ १६८ ॥

---

१ रागेषु-क। २ भया०-क। ३ रसस्फुटः-ख। ४ ०ना चो०-ख। ५ त०-ख। ६ ०रे-क। ७ ग्रैवेयोर्ध्वादिदर्शने-ख। ८ ०बुधा-क। ९ भावोन्म०-क। १० गदिता-ख। ११ ०ता बद्धकेशाकर्षे च दर्शने-ख।

पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे च[1] वीक्षणे ।
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ॥ १६९ ॥
इत्यादिलोकभावार्था ग्रीवा भङ्गैरनेकधा ।
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि च ॥ १७० ॥
शिरसः कर्मणा कर्म ग्रीवायाः सम्प्रवर्त्तते ।
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ॥ १७१ ॥
अङ्गकर्माणि शेषाणि गदतो मे निबोधत ॥ १७२ ॥

इति भारतीये नाट्यशास्त्रे उपाङ्गविधानं नाम अष्टमोऽध्यायः ।

## अथ नवमोऽध्यायः ।

एवमेतच्छिरोनेत्र[2]भ्रूनासोष्ठकपोलजम्[3] ।
कर्म लक्षणसंयुक्तमपाङ्गानां मयोदितम् ॥ १ ॥
हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं सम्प्रवक्ष्यमि विनियोगं च तत्त्वतः ॥ २ ॥
हस्तानां च प्रवक्ष्यामि कर्म नाट्यप्रयोगजम्[4] ।
यथा येनाभिनेयं च तन् मे निगदतः शृणु ॥ ३ ॥
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥ ४ ॥
मुष्टिश्च शिखराख्यश्च कपित्थः क[5]टकामुखः ।
सूच्यास्यः पद्मकोशश्च त[6]था वै सर्पशीर्षकः ॥ ५ ॥
[7]मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।
ल[8]ङ्गूलोत्पलपद्मश्च चतुरो भ्रामरस्तथा ॥ ६ ॥
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा ।
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशदिमे[9] कराः ॥ ७ ॥

१ विवक्षिते-क । २ ०त्रे-ख । ३ ०क०-ख ।
४ ०जकम्-ख । ५ ख०-ख । ६ स (ख) परा मृगशीर्षकः-ख ।
७ श्लोकार्धमिदं खपुस्तके न दृश्यते । ८ काङ्गूलकोपं पद्मश्च-ख ।
९ ०ति कीर्तिताः-ख । उभावेव पाठावशुद्धाविव लक्ष्येते ।

असंयुताः संयुताश्च गदतो मे निबोधत ।
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥ ८ ॥
[1]कटकावर्धमानश्च उत्संगो निषधस्तथा ।
[2]दोलः पुष्पपुटश्चैव तथा मकर एव च ॥ ९ ॥
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ।
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश ॥ १० ॥
नृत्तहस्ता[3]नतश्चो[4]र्ध्वं गदतो मे निबोधतः ।
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ॥ ११ ॥
स्वस्तिकौ विप्रकीर्णौ चाप्य[5]रालकटकामुखौ ।
आविद्धवक्रौ सूच्यास्यौ [6]रेचितावर्धरेचितौ ॥ १२ ॥
उत्तानावञ्चितौ[7] वापि पल्लवौ च तथा करौ ।
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च ॥ १३ ॥
सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च ।
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ॥ १४ ॥
ज्ञेयौ गरुडपक्षौ च [8]हंसपक्षौ तथैव च ।
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा ॥ १५ ॥
उरोमण्डलिनौ चैव उरःपार्श्वोर्धमण्डले ।
मुष्टिकःस्वस्तिकं[9]श्चापिन[10]लिनीपद्म[11]कोशकौ[12] ॥ १६ ॥
[13]अलपद्मोल्बणौ चापि ललितौ वलितौ तथा ।
चतुष्षष्टिकरा ह्येते नामतोऽभिहिता मया ॥ १७ ॥
[14]अथ लक्षणमेतेषां कर्माणि च निबोधत ।
प्रसारिता[15]ग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ १८ ॥

---

१ ख०-खा । २ डो०-क । ३ ०स्तांत०-का । ४ ऊ०-ख । ५ ०षरालावट०—ख । ६ ०त्यौ—ख । ७ एतावत् खपुस्तके त्रुटित दृश्यते । ८ दण्ड०-ख । ९ श्लोकार्धमिदं खपुस्तके न दृश्यते । १० एतावत खपुस्तके त्रुटितं दृश्यते । ११ नौ-ख । १२ ०प०-ख । १३ अल्लपलनवौ०-ख । १४ यथा—ख । १५ ०ता समाः सर्वा-ख ।

एष प्रहारपाते प्रतापने नोदने प्रहर्षे च ।
गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशस्थितः कार्यः ॥ १९ ॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥ २० ॥
स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद् द्रव्यं तच्च निर्देश्यम् ॥ २१ ॥
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृत्तं पाल्यं छन्नं निविडं च गोप्यं च ॥ २२ ॥
अस्यैव चाङ्गुलीभिरधोमुखप्रस्थितोत्थितचलाभिः ।
वायूर्मिवेगवेलाक्षोभश्चोयश्च कर्त्तव्यः ॥ २३ ॥
उत्साहनं बहुमहन्महाजनप्रांशुपुष्करमहतम् ।
पक्षोत्क्षेपाभिनयं रेचककरणैः प्रयुञ्जीत ॥ २४ ॥
परिमृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुद्घाटनमेव चाभिनयेत् ॥ २५ ॥
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥ २६ ॥
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥ २७ ॥
आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥ २८ ॥
माङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च ।
उष्णीषमुकुटधारणनासास्यश्रोत्रसंवरणम् ॥ २९ ॥
अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितौ स्थितचलाभ्याम् ।
लघुर्चटपवनस्रोतोभुजगतंभ्रमणादिकान् कुर्यात् ॥ ३० ॥
अश्रुप्रमार्जनतिलकविरोचनलोचनालभंनकं च ।

---

१ ०ष्व०-ख । २ ०ग०-क । ३ श्लोकोऽयं खपुस्के नास्ति । ४ ०च्यु०-ख । ५ ०घृ०-ख । ६ ०पा०ख । ७ धा०—ख । ८ मुखपतन-ख । ९ भ्रमरा०-ख । १० ०भौकश्च-क ।

त्रिपताकानामिकया दर्शनमलकस्य कार्यञ्च ॥ ३१ ॥
त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकिनी ।
तर्जनीमध्यमायाश्च तदासौ कर्तरीमुखः ॥ ३२ ॥
[1]पथिकचरणरचनरञ्जनगमनकरणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद् दृष्टं शृङ्गं च लेख्यं[2] च ॥ ३३ ॥
पतनमरणव्यतिक्रमपरिवृत्त[3]वितर्कितं तथा न्यस्तम् ।
भिन्नवलितेर्न[4] कुर्यात् कर्तर्यास्याङ्गुली[5]युगलेन ॥ ३४ ॥
[6]संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः ।
रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु ॥ ३५ ॥
यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापरम् ।
सोऽर्धचन्द्रो हि विज्ञेयः करः कर्मास्य वक्ष्यते ॥ ३६ ॥
एतेन बालतरवः शशिलेखाकम्बुकलशवलयानि ।
निर्घ[7]टनमा[8]यस्तं मध्यौपम्यं च पीनं च ॥ ३७ ॥
रशनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् ।
कर्त्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥ ३८ ॥
आद्या धनुर्लता कार्या कुञ्चिताङ्गुष्ठकः तथा ।
शेषा भिन्नोर्ध्ववलिता ह्यरालाङ्गुलयः स्मृताः ॥ ३९ ॥
एतेन सत्त्वशौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा भावाभि[9]नयसंज्ञकाः कार्याः ॥ ४० ॥
एतेन पुनः स्त्रीणां केशानां संग्रहोत्कर्षौ ।
सर्वाङ्गिकं तथैव च निर्व[10]हणमात्मनः कार्यम् ॥ ४१ ॥
कौतुकविवाहयोगं[11] प्रदक्षिणे[12]नैव संप्रयोगं[13] च ।
अङ्गुल्यग्रस्वस्तिकयोगात् कुर्यात् परिमण्डलेनैव ॥ ४२ ॥
प्रादक्षिण्यं परिमण्डलं च कुर्यात् महाजनं चैव ।

---

१ पथि च०-ख । २ ०खं-ख । ३ वेति-ख । ४ ते च-ख । ५ ०लिमुखेन-ख । ६ श्लोकोऽयं खपुस्ते नास्ति । ७ ०र्घा०-ख । ८ ०मी०-ख । ९ ०हितसं०-ख । १० निर्वर्णन०-ख । ११ गः-ख । १२ ०णो नैव-ख । १३ ०गः-ख ।

यच्च[1] महीतलनिहितं द्रव्यं तच्चाभिनेयं स्यात् ॥ ४३ ॥
आवाहने निवापे निन्दाक्षेपाद्यनेकवचने च ।
स्वेदस्य[3] चाभिनयने गन्धाघ्राणे शुभा चैव ॥ ४४ ॥
त्रिपताकहस्तजानि हि पूर्वं यान्यभिहितानि कर्माणि ।
तानि त्वरानुयोगात् स्त्रीभिः सम्यक् प्रयोज्यानि ॥ ४५ ॥
अरालस्य यदा वक्रा ऽनामिकात्वङ्गुलिर्भवेत् ।
शुकतुण्डस्तु स करः कर्म चास्य निबोधत ॥ ४६ ॥
एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति चार्थे[4] ।
आवाहने विसर्गे धिगितिवचने च सावज्ञम् ॥ ४७ ॥
अङ्गुल्यो यस्य हस्तस्य तलमध्येग्रसस्थिताः ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ ४८ ॥
एष प्रहारे व्यायामे निर्गमे हस्तपीडने ।
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे तथा ॥ ४९ ॥
अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते ।
हस्तः स शिखरो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ५० ॥
रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणं चैव ।
अधरोष्टपादरञ्जनमलकस्योत्क्षेपणं चैव ॥ ५१ ॥
अस्यैव शिखराख्यस्य मुखे[5]ऽङ्गुष्ठनिपीडिता ।
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥ ५२ ॥
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि ।
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च पथ्यं च ॥ ५३ ॥
उत्क्षिप्तचक्रा तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासौ कटकामुखः[6] ॥ ५४ ॥
होत्रं[7] हव्यं छत्रं प्रग्रहपरिकर्षणं च व्यजनकम् ।

---

१ त्र-ख । २ रचितं-ख । ३ इयमार्या खपुस्तके त्वेवं पठ्यते—
आवाहननिर्वाहणनिर्माणे चाप्यनेकवचः ।
खेदस्य चापनययानगन्धघ्राणे शुभे चैव ॥
४ ०र्थे-ख । ५ ह्यङ्गुष्ठकनि०-ख । ६ ख०-ख । ७ होतृन्-क ।

आदर्शधारणं [1]खण्डनं तथा पेषणं चैव ॥ ५५ ॥
आयातदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
[2]स्रग्दामधारणं खलु वस्त्रान्तालम्बनं चैव ॥ ५६ ॥
मन्थनशरावकर्षणपुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्वाकर्षणस्त्रीदर्शनमेव कार्[3]यं च ॥ ५७ ॥
कटकाख्ये यदा हस्ते तर्जनी संप्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ५८ ॥
अस्या विविधान्योगान् वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनर्[4]तलोल[5]कम्पितविजृम्भितोद्वाहितच[6]लायाः ॥ ५९ ॥
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्दे[7]श्याः साधुवादाँश्च ॥ ६० ॥
वालोरगपल्लवधूपदीपवल्लीलताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेयं चोर्ध्वलोलितया ॥ ६१ ॥
भूयश्चोर्ध्वविरचिता ताराघोणैकदण्डयष्टिषु च ।
विनता च पुनः कार्या दंष्ट्रिषु तथास्ययोगेन ॥ ६२॥
[8]पुनरपि मण्डलगतयः सर्वग्रहणं तथैव लोकस्य
प्रणतीकृता च कार्याद्ध्यायेदथ(?) च दिवसे च ॥ ६३ ॥
वदनाभ्यासे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या ।
.................................................॥ ६४ ॥
श्रवणाभ्यासे वक्रा विजृम्भणे वाक्यरूपणे च मुखे ।
सेति वादति(?) च योज्या प्रसारितोत्कम्पितोत्ताना ॥ ६५ ॥
कार्या प्रकम्पितारोषदर्शने स्वेदरूपणे चैव ।
कुन्तलकुण्डलाङ्गदगण्डाश्रयमण्डनाभिनये ॥ ६६ ॥
गर्वेऽहमिति ललाटे रिपुनिर्देशे तथैव च क्रोधे ।
कोऽसाविति निर्देशेऽथ कर्णकण्डूयने चैव ॥ ६७ ॥

---

१ चापनं–क। २ श्लोकार्द्धमिदं कपुस्तके नास्ति। ३ ०न्तं–क० ४ ०स–ख। ५ ०क–क। ६ वलेपाः–ख। ७ ०दश्चेत्–ख। ८ श्लोकत्रयमेतत् कपुस्तके नास्ति।

संयुक्ता संयोगे कार्या विश्लेषिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ॥ ६८ ॥
द्वाभ्यां तु वामगमनं दक्षिणतो दिननिशावसानानि ।
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत ॥ ६९ ॥
पुनरपि च भ्रमिताग्रा रूपशीलावर्तयन्त्रशैलेषु ।[1]
परिवेषणे तथैव हि कार्या चाधोमुखी नित्या ॥ ७० ॥
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपेण ।
शक्रस्याभ्युत्थानात् तज्ज्ञैस्तिर्यक्स्थिता कार्या ॥ ७१ ॥
द्वाभ्यां सन्दर्शयेन्नित्यं सम्पूर्णं चन्द्रमण्डलम् ।
श्लिष्टा ललाटे शक्रस्य कार्योत्थानं सुसंश्रिता ॥ ७२ ॥
परिमण्डलभ्रमितया मण्डलयोर्दर्शयेच्च चन्द्रस्य ।[2]
हरनयने च ललाटे शक्रस्यतिर्यगुत्ताना ॥ ७३ ॥
यस्याङ्गुल्यस्तु विरलाः सहाङ्गुष्ठेन कुञ्चिताः ।
ऊर्ध्वा ह्यसंगताग्राश्च स भवेत् पद्मकोशकः ॥ ७४ ॥
विल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम् ।
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु ७५ ॥[3]
देवार्चनबलिहरणे संगूहे चाग्रपिण्डदाने च ।[4]
कार्यः पुष्पप्रकरश्च पद्मकोशेन हस्तेन ॥ ७६ ॥
मणिवन्धश्लिष्टाभ्यां प्रविरलचलिताङ्गुलीयुतकराभ्याम् ।
कार्योपवर्त्तिताभ्यां विकसितकमलोत्पलाभिनयः ॥ ७७ ॥
अङ्गुल्यः सहिताः सर्वा सहाङ्गुष्ठेन यस्य तु ।
तथा निम्नतलश्चैव स तु सर्वशिरः करः ॥ ७८ ॥
एष सलिलप्रदाने भुजगतौ तोयसेचने चैव ।
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ॥ ७९ ॥

---

१ श्लोकद्वयमिदं खपुस्तके नोपलभ्यते ।
२ श्लोकोऽयं कपुस्तके नास्ति ।
३ कपुस्तके तु एतत् श्लोकार्द्धमेवं पठ्यते—
बहुजातिबीजपूरकमामिषखण्डं च निर्देश्यम् । ४ समुद्गके–ख ।

अधोमुखीनां सर्वासामङ्गुलीनां समागमः ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेन् मृगशीर्षकः ॥ ८० ॥
इह सांप्रतमस्त्यद्य शक्यश्चेल्लालनेऽक्षपाते च ।
स्वेदापमार्जनेषु च कुट्टिमिते प्रचलिते तु भवेत् ॥ ८१ ॥
त्रेताद्विसंस्थिता मध्या तर्जन्यङ्गुष्ठकास्तथा ।
अङ्गुलेनामिका वक्रा तथा चोर्ध्वा कनीयसी ॥ ८२ ॥
एतेन तरुणफलानि नानाविधानि च लघूनि कार्याणि ।
कार्याणि रोषजातिस्त्रीवचनान्यङ्गुलिक्षेपैः ॥ ८३ ॥
[1]मरकत वैदूर्यादीनां निदर्शनं कार्यम् ।
ग्राह्यं विडालपदमिति चैव प्रयोगेषु ॥ ८४ ॥
आवर्तिन्यः करतले यस्याङ्गुल्यो भवन्ति हि ।
पार्श्वगताविकीर्णाश्च स भवेदलपद्मकः ॥ ८५ ॥
प्रतिषेधकृते योज्यः कस्य त्वन्नास्ति शून्यवचनेषु ।
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥ ८६ ॥
तिस्रः प्रसारिता यत्र तथा चोर्ध्वा कनायसी ।
तासां मध्यस्तथाङ्गुष्ठः स करश्चतुरस्मृतः ॥ ८७ ॥
नयननिपुणसमसुनिपुणवालातुरशठ्यकैतवार्थेषु ।
वाक्ये युक्ते पथ्ये सत्ये प्रथमे च विनियोज्यः ॥ ८८ ॥
एकेन द्वाभ्यां वा किञ्चिन्मण्डलकृतेन हस्तदण्डेन ।
[2]विधृतविचरितचरितं विवर्जितं लज्जितं चैव ॥ ८९ ॥
नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशम् ।
संयुक्तकरेणैव चतुरेणैतानि कुर्वीत ॥ ९० ॥
लीलां रतिं रुचिं च स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं च ।
सञ्ज्ञामाशां प्रणयं विचारणं सङ्गतं शौचम् ॥ ९१ ॥
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रशमं वार्त्तां युक्तिं वेषं मृदुशाड्वलं स्तोकम् ॥ ९२ ॥

---

१ श्लोकोऽयं कपुस्तके नोपलभ्यते ।
२ विवृतविवारितरचितं वितर्कितं लज्जितं चैव-स ।

विभवाविभवौ सुरतं गुणागुणौ यौवनं गृहान् दारान्।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥ ९३ ॥
सितमूर्ध्वेन तु कुर्यात् रक्तं पीतं च मण्डलकरेण।
परिमृदितेन तु नीलं वर्णाश्चतुरेण हस्तेन ॥ ९४ ॥
मध्यमाङ्गुष्ठसन्दंशो वक्रे चैव प्रदेशिनी।
ऊर्ध्वमन्ये प्रकीर्णे च अङ्गुल्यो भ्रमरे करे ॥ ९५ ॥
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥ ९६ ॥
वि¹च्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु।
बालालापे च शीघ्रे च ताले विश्वासने तथा ॥ ९७ ॥
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः।
भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते ॥ ९८ ॥
श्लक्ष्णाल्पशिथिललाघवनिस्सारार्थां मृदुतत्वयोगेषु।
कार्योऽभिनयविशेषः किञ्चित्प्रस्यन्दिताग्रेण ॥ ९९ ॥
समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः ॥ १०० ॥
एष² विधिर्निवापसलिले दातव्ये गन्धसंश्रये चैव।
कार्यः प्रतिग्रहावमानभोजनार्थेषु विप्राणाम् ॥ १०१ ॥
आलिङ्गने महास्तम्भनिदर्शने रोमहर्षणे चैव।
स्पर्शेऽनुलेपनार्थे योज्यः संवाहने चैव ॥ १०२ ॥
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः³।
कार्या यथारसं स्याद् दुःखे हनुधारणे चैव ॥ १०३ ॥
तर्जन्यङ्गुष्ठसन्दंशो ह्यरालस्य यथा भवेत्।
आभुग्नतलमध्यश्च स सन्दंश इति स्मृतः ॥ १०४ ॥
सन्दंशस्त्रिविधो ज्ञेयो अग्रतो मुखजस्तथा।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः । १०५ ॥

---

१ विद्युतश्च सहजश्च–ख।
२ एषः सार्धः श्लोकः कपुस्तके नास्ति। ३ विषादाः–क।

पुष्पावचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् ।
शल्याकर्षग्रहणापकर्षणे चाग्रसन्दंशः ॥ १०६ ॥
वृन्तात् पुष्पोद्धरणं वर्तिशलाकादिपूरणं चैव ।
धिगिति च वचनं रोषात् मुखसन्दंशस्य कर्माणि ॥ १०७ ॥
यज्ञोपवीतनिधनवेधनगुणसूक्ष्मबाणलक्षेषु ।
योगे[1]ऽध्ययने स्तोके संयुक्तकरस्तु कर्त्तव्यः ॥ १०८ ॥
पेशलकुत्सासूयासदोषवचने च वामहस्तेन ।
किञ्चिद् विवर्तितकराग्रः प्रयुज्यते पार्श्वसन्दंशः ॥ १०९ ॥
आलेख्यनेत्ररञ्जनवितर्कवृन्तप्रवालरचनेषु ।
निष्पीडितं तथालक्तकस्य कार्यं च नारीभिः ॥ ११० ॥
समा नताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्यैव भवेन्मुकुलकः करः ॥ १११ ॥
देवार्चनबलिकरणे पद्मोत्पलमुकुलरूपणे चैव ।
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णे च ॥ ११२ ॥
[2]भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः ॥ ११३ ॥
पद्मकोशस्य हस्तस्य अङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः केशचौर्यगृहादिषु ॥ ११४ ॥
शिरःकण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
सिंहव्याघ्राद्यभिनयः प्रस्तरग्रहणे तथा ॥ ११५ ॥
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्त्तव्ये ताम्रचूडे कराङ्गुली ॥ ११६ ॥
[3]विच्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु ।
ताले विश्वासने चैव शीघ्रार्थे संज्ञितेषु च ॥ ११७ ॥
[4]तथा कलासु काष्ठासु निमेषे तु क्षणे तथा ।
एष एव करः कार्यो बलालापनिमन्त्रणे ॥ ११८ ॥

---

१ योगस्थाने-क । २ श्लोकोऽयं कपुस्तके न दृश्यते ।
३ व्युत्पन्न०-ख । ४ एष श्लोकः खपुस्तके नोपलभ्यते ।

अङ्गुल्यः सहिता वक्रा ऊपर्यङ्गुष्ठपीडिताः ।
प्रसारिता कनिष्ठा च ताम्रचूडः करः स्मृतः ॥ ११९ ॥
शतं सहस्रं लक्षं च करेणैकेन योजयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान् विप्रुषस्तथा ॥ १२० ॥
असंयुक्ताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
पुनश्च संयुतान् हस्तान् गदतो मे निबोधत ॥ १२१ ॥
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने ॥ १२२ ॥
देवतानां शिरःस्थस्तु गुरूणामास्यसंस्थितः ।
वक्षःस्थश्चैव मित्राणां शेषे त्वनियमो भवेत् ॥ १२३ ॥
उभाभ्यामपि हस्ताभ्यामन्योऽन्यं पार्श्वसङ्ग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥ १२४ ॥
द्विषद्भियाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाषे ।
शीते भये च कार्यो वक्षःस्थः कल्पितः स्त्रीभिः ॥ १२५ ॥
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु ।
एतावदिति च कार्यो नेदानीं कृत्यमिति चार्थे ॥ १२६ ॥
अङ्गुल्यो यस्य हस्तस्य अन्योन्यान्तरनिस्सृताः ।
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥ १२७ ॥
एष मदनाङ्गमर्दे सुप्तोत्थविजृम्भणे त्र्यहद्वहे ।
हनुधारणे च योज्यः शङ्खग्रहणे च तत्त्वज्ञैः ॥ १२८ ॥
मणिवन्धनविन्यस्तावरालौ वर्धमानकौ ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ १२९ ॥
स्वस्तिकविच्युतिकरणाद् दिशो घना खं वनं समुद्राश्च ।
ऋतवो मही तथान्यद् विस्तीर्णं चाभिनेयं स्यात् ॥ १३० ॥
कटकः कटकैर्न्यस्तः कटको वर्धमानकः ।
शृङ्गारार्थेषु योक्तव्यः प्रमाणकरणे तथा ॥ १३१ ॥
अरालौ तु विपर्यस्तावुत्तानौ्वूर्धमानतौ ।

---

१ स्त्रीप्रयोजितौ–ख । २ ०नौ वर्धमानकौ–ख ।

उत्सङ्ग इति विज्ञेयः [१]स्पर्शस्य ग्रहणे करः ॥ १३२ ॥
संनिष्पेषकरश्चैव रोषेऽमर्षेऽपि च स्मृतः ।
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृतो भवेत् ॥ १३३ ॥
गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम् ।
दक्षिणं चापि वामस्य कूर्पराभ्यन्तरं न्यसेत् ॥ १३४ ॥
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत् ।
इत्येष निषधो हस्तः कर्म चास्य निबोधत ॥ १३५ ॥
एतेन मदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः ।
अभिमानावष्टम्भः स्तम्भस्थैर्यादयः कार्याः ॥ १३६ ॥

अथवा—

ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्याभिघट्टने ॥ १३७ ॥
असौ प्रशिथिलौ मुक्तौ पताकौ प्रविलम्बितौ ।
यदा भवेतां करणे स दोल इति संज्ञितः ॥ १३८ ॥
सम्भ्रमविषादमूर्च्छितमदाभिघाते तथैव चाऽऽवेगे ।
व्याधिप्लुते च शस्त्र[३]क्षते च कार्योऽभिनययोगः ॥ १३९ ॥
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः ।
द्वितीयः पार्श्वसुश्लिष्टः स तु पुष्पपुटः स्मृतः ॥ १४० ॥
धान्यजलपुष्पभक्ष्याण्यनेकनानाविधानि युक्तेन ।
ग्राह्याण्युपनेयानि तोयानयनापनयने च ॥ १४१ ॥
पताकौ तु यदा हस्तौ मूर्द्धाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥ १४२ ॥
सिंहव्यालद्विपदर्शने नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा ह्यभिनेयास्तेन हस्तेन ॥ १४३ ॥
कूर्परासञ्चितौ हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः स विज्ञेयः कर्म चास्य निबोधत ॥ १४४ ॥
[४]एष च वधूवराणामुद्वाहे चातिभारयोगे च ।

---

१ कार्यः सिंहावलोकिते-ख । २ अतः परं पञ्च श्लोकाः खपुस्तके न दृश्यन्ते । ३ ०त्र—ख । ४ यानवधूग्रहणे वत्सोत्सङ्गादि०-क ।

स्तम्भे ग्रहणे च तथा शैलशिलोत्पाटने चैव ॥ १४५ ॥
शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृतः ॥ १४६ ॥
दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च ।
उत्कण्ठिते च तज्ज्ञैरभिनययोगस्तु कर्तव्यः ॥ १४७ ॥
मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः ।
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥ १४८ ॥
सङ्ग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च ।
संक्षेपतस्तु संक्षिप्तनिपीडितेनाभिनेतव्यम् ॥ १४९ ॥
विज्ञेयो वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यो विघाटने ॥ १५० ॥
उक्ता ह्येते द्विविधा ह्यसंयुताः संयुताश्च सङ्क्षेपात् ।
अभिनयकरा ये त्विह ते ह्यत्राप्यर्थतः साध्याः ॥ १५१ ॥
आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय तत्पुनः ।
स्वयं वितर्कात् कर्तव्यं हस्ताभिनयनं बुधैः ॥ १५२ ॥
नास्ति कश्चित्तथा हस्तो नाट्यार्थाभिनयं प्रति ।
यस्य यद् दृश्यते रूपं बहुशस्तन्मयोदितम् ॥ १५३ ॥
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह ।
छन्दतस्ते नियोक्तव्या रसभावविचेष्टितैः ॥ १५४ ॥
देशं कालं प्रयोगं च अर्थयुक्तिमवेक्ष्य च ।
हस्ता ह्येते प्रयोक्तव्याः स्त्रीणां नृणां विशेषतः ॥ १५५ ॥
सर्वेषामेव हस्तानां यानि कर्माणि सन्ति हि ।
तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु ॥ १५६ ॥
उत्कर्षणं विकर्षणं तथा चैवापकर्षणम् ।
परिग्रहो निग्रहश्च आह्वानं नोदनं तथा ॥ १५७ ॥

१ प्र०—क ।
२ खपुस्तके त्विदं श्लोकार्द्धमेवं पठ्यते-
परिग्रहश्चाप्याह्वानं ताडनं तर्जनं तथा ।

संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा।
विक्षेपधूनने चैव विसर्गस्तदनन्तरम्॥ १५८॥
छेदनं भेदनं चैव स्फोटनं मोहनं तथा।
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्म करान् प्रति॥ १५९॥
उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च।
हस्तप्रचारस्त्रिविधो नाट्यतत्त्वसमाश्रयः॥ १६०॥
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि।
नेत्रभ्रूमुखरागैश्च कर्तव्या व्यञ्जिता बुधैः॥ १६१॥
करणं कर्मस्थानं प्रकारयुक्तिं क्रियां च संप्रेक्ष्य।
हस्ताभिनयस्तज्ज्ञैः कार्यो लोकोपचारेण॥ १६२॥
उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः॥ १६३॥
ज्येष्ठे स्वल्पप्रचाराः स्युर्मध्ये मध्यविचारिणः।
अधमेषु प्रकीर्णास्तु हस्ताः कार्याः प्रयोक्तृभिः॥ १६४॥
लक्षणव्यञ्जिता हस्ता कार्यास्तूत्तममध्यमैः।
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः॥ १६५॥
अथवान्यादृशं प्राप्य प्रयोगं कालमेव च।
विपरीताश्रया हस्ताः प्रयोक्तव्या बुधैर्नरैः॥ १६६॥
विषण्णे मूर्च्छिते भीते जुगुप्साशोकपीडिते।
ग्लाने सुप्ते विहस्ते च निश्चेष्टे तन्द्रिते जडे॥ १६७॥
व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते।
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते॥ १६८॥
हिमवर्षगते बन्धे हरिणप्लवसंश्रिते।
स्वप्नायिते च संभ्रान्ते नखसंस्फोटने तथा॥ १६९॥
तथा हस्ताभिनयः कार्यः सत्त्वस्य संग्रहः।
तथाकारविशेषश्च नानाभावरसान्वितः॥ १७०॥
यथा व्यग्रावुभौ हस्तौ यत्र दृष्टिविलोकितैः।

---

१ ०क्षेप—क।

उत्तानोऽधस्तलस्तिर्यगूर्ध्वोऽधोमुख एव च ॥ १७१ ॥
हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा ।
एवं ज्ञेयाः करा ह्येते नानाभिनयसंश्रिताः ॥ १७२ ॥
अत ऊर्ध्वं प्रवक्ष्यामि हस्तान् नृत्तसमाश्रयान् ।
वक्षःस्थोष्ठाङ्गुलस्थौ तु प्राङ्मुखौ कटकामुखौ ॥ १७३ ॥
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ।
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ॥ १७४ ॥
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ ।
चतुरस्रस्थितौ हस्तौ हंसपक्षकृतौ तथा ॥ १७५ ॥
तिर्यक्स्थितौ चाभिमुखौ ज्ञेयौ तलमुखाविति ।
तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ॥ १७६ ॥
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ।
अलपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोशकौ ॥ १७७ ॥
अरालकटकाख्यौ वा अरालकटकामुखौ ।
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ॥ १७८ ॥
पराङ्मुखतयाविद्धौ ज्ञेयावाविद्धवक्रकौ ।
हस्तौ तु सर्पशिरसौ मध्यस्थाङ्गुष्ठकौ यदा ॥ १७९ ॥
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ।
रेचितौ चापि विज्ञेयौ हंसपक्षोद्धृतभ्रमौ ॥ १८० ॥
प्रसारितोत्तानतलौ रेचितावेव संस्थितौ ।
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ॥ १८१ ॥
विज्ञेयौ नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञकौ ।
अञ्चितौ कूर्परांसौ तु त्रिपताकाकृतौ करौ ॥ १८२ ॥
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ।
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ॥ १८३ ॥
बाहुशीर्षादिनिष्क्रान्तौ नितम्बाविति कीर्तितौ ।
केशदेशाद्विनिष्क्रान्तौ परिपार्श्वस्थितौ यदा ॥ १८४ ॥
विज्ञेयौ केशबन्धाख्यौ करावाचार्यसम्मतौ ।

तिर्यक्प्रसरितौ चैव पार्श्वसंस्थौ तथैव च ॥ १८५ ॥
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ।
समुन्नतो लताहस्तः पार्श्वात्पार्श्वं विलोलितः ॥ १८६ ॥
त्रिपताकोऽपरः कर्णे करिहस्तौ प्रकीर्तितौ ।
कटिशीर्षनिविष्टाग्रौ त्रिपताकौ यदा करौ ॥ १८७ ॥
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः ।
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ॥ १८८ ॥
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्त्तितौ ॥ १८९ ॥
यथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ।
ऊर्ध्वमण्डलिनौ हस्तवूर्ध्वदेशविवर्तनात् ॥ १९० ॥
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ।
उद्वेष्टितो भवेदेको द्वितीयश्च विवेष्टितः ॥ १९१ ॥
भ्रमितावुरसः स्थाने उरोमण्डलिनौ स्मृतौ ।
अलपल्लवकारालावुरोर्ध्वभ्रमणक्रमात् ॥ १९२ ॥
पार्श्वावर्तश्च विज्ञेयावुरःपार्श्वार्धमण्डलौ ।
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ॥ १९३ ॥
कटकाख्यौ तु तौ स्यातां मुष्टिकस्वस्तिकौ तदा ।
पद्मकोशौ यदा हस्तौ व्यावर्त्तपरिवर्तितौ ॥ १९४ ॥
नलिनीपद्मकोशौ तु तदा ज्ञेयौ प्रयोक्तृभिः ।
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ ॥ १९५ ॥
ऊर्ध्वप्रसारिताविद्धौ विज्ञेयौ उल्बणाविति ।
पल्लवौ च शिरोदेशे संप्राप्तौ ललितौ स्मृतौ ॥ १९६ ॥
कूर्परस्वस्तिकगतौ लताख्यौ ललिताविति ।
वियुताः संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः ॥ १९७ ॥
अतः परं प्रवक्ष्यामि करणं हस्तसंश्रयम् ।
सर्वेषामेव हस्तानां नाट्यहस्तनिदेशिभिः ॥ १९८ ॥

---

१ एतत् श्लोकत्रयं खपुस्तके न दृश्यते ।

विज्ञातव्या प्रयत्नेन करणं तु चतुर्विधम् ।
अपवेष्टितमेकं स्यात उद्वेष्टितमथापरम् ॥ १९९ ॥
व्यावर्तितं तृतीयं तु चतुर्थं परिवार्तितम् ।
आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ॥ २०० ॥
अभ्यन्तरेण करणं तदावेष्टितमुच्यते ।
उद्वेष्ट्यन्ते यदाङ्गुल्यः तर्जन्या बहिर्मुखाः ॥ २०१ ॥
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ।
आवर्त्तन्ते कनिष्ठाद्या ह्यङ्गुल्योऽभ्यन्तरेण तु ॥ २०२ ॥
यत्तु क्रमेण करणं तद्व्यावर्तितमुच्यते ।
उद्वर्त्तन्ते कनिष्ठाद्या बाह्यशः क्रमशो यदा ॥ २०३ ॥
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवार्तितम् ।
नृत्तेऽभिनययोगे वा पाणिभिर्वर्तनाश्रयैः ॥ २०४ ॥
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ।
तिर्यगूर्ध्वगतं चैव तथाधोमुख एव च ॥ २०५ ॥
आविद्धश्चापविद्धश्च मण्डलस्वस्तिकस्तथा ।
अञ्चितः कुञ्चितश्चैव पृष्ठगश्चेति चोदितः ।
बाहुप्रकारो दशधा नाट्यनृत्तप्रयोक्तृभिः ॥ २०६ ॥
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोदरपार्श्वकर्माणि ॥ २०७ ॥

इति भारतीये नाट्यशास्त्रे हस्ताभिनयो नाम नवमोऽध्यायः ।

---

## अथ दशमाध्यायप्रारम्भः ।

आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव उरः पञ्चविधं स्मृतम् ॥ १ ॥
निम्नमुन्नतपृष्ठं च व्याभुग्नं संश्लथं क्वचित ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥ २ ॥
संभ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशल्येषु ।

---

१ शिल्पेषु–ख ।

कार्यं तेन स्पर्शे वर्षे लज्जायितेऽर्थवशात् ॥ ३ ॥
स्तब्धं च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरोनिर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥ ४ ॥
स्तम्भे मानग्रहणे विस्मयदृष्टे तु सत्यवचने च ।
अहमिति च दर्पवचने गर्वोत्सेहे तु कर्त्तव्यम् ॥ ५ ॥
ऊर्ध्वोत्क्षेपैरुरो यत्तु निरन्तरकृतैः कृतम् ।
प्रकम्पितं तु विज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥ ६ ॥
हँसितरुदितादिसंभ्रमभयश्रमव्याधिपीडितार्थेषु ।
नानाभावोपगतं कार्यमुरो नाट्ययोगेषु ॥ ७ ॥
उद्वाहितमूर्ध्वगतमुरो ज्ञेयं प्रयोगतः ।
दीर्घोच्छ्वसनता लोके जृम्भणादिषु चेष्यते ॥ ८ ॥
सर्वैः ससौष्ठवैरङ्गैश्चतुरस्रकृतैः कृतम् ।
उरः समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥ ९ ॥
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥ १० ॥
नतं समुन्नतं चैव प्रसारितविवर्तिते ।
तथा प्रसृतमेतत्तु पार्श्वयोः कर्म पञ्चधा ॥ ११ ॥
कटिर्भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांसं च किञ्चित्पार्श्वं नतं स्मृतम् ॥ १२ ॥
तस्यैव चापरं पार्श्वं विपरीतं तु युक्तितः ।
कटीपार्श्वभुजांसैश्चाभ्युन्नतैरुन्नतं भवेत् ॥ १३ ॥
आयामनादुभयतः पार्श्वयोः स्यात् प्रसारितम् ।

---

१ स्वच्छं-ख । २ ०त्सेके-ख ।
३ अस्मात् श्लोकात् पूर्वं खपुस्तकेऽयं श्लोकोऽधिको दृश्यते—
दीर्घनिश्वसिते चैव जृम्भणाप्रोटने तथा ।
विक्षो (ब्वो) के च पुनः स्त्रीणां तद्विज्ञेयं प्रयोक्तृभिः ॥
४ खपुस्तके इयमार्याऽन्यथैवं पठ्यते—
हसितरुदितेषु कार्यं श्रमे भये श्वासकाशयोश्चैव ।
हिक्कादुःखे च तथा नाट्यज्ञैरर्थवेगेन ॥

परिवर्तिंत्रिकस्यापि विवर्तितमिहेष्यते ॥ १४ ॥
विवर्तितापनयनात् भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥ १५ ॥
उपसर्पे नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं प्रहर्षादौ परिवर्त्तौ विवर्तितम् ॥ १६ ॥
विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥ १७ ॥
क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षामं नतं खल्वं पूर्णमाध्मातमुच्यते ॥ १८ ॥
क्षामं हासे च रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते ॥ १९ ॥
पूर्णमुच्चलितं स्थूले व्याधितन्द्राशनादिषु ।
ईत्येतदुदरं प्रोक्तं कट्याः कर्म निबोधत ॥ २० ॥
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहिता चैव कटी नाट्ये नृत्ते च पञ्चधा ॥ २१ ॥
कटी मध्यस्य बलनाच् छिन्ना संपरिकीर्तिता ।
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्त्तिता ॥ २२ ॥
सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी ।
तिर्यग्गता गताक्षिप्ता कटी ज्ञेया प्रकम्पिता ॥ २३ ॥
नितम्बपार्श्वोद्वहनात् शनैरुद्वाहिता कटी ।
कटीकर्म मया प्रोक्तं विनियोगं निबोधत ॥ २४ ॥
छिन्ना व्यायामसंभ्रान्तव्या[2]वृत्तप्रेक्षणादिषु ।
निवृत्ता वर्तने चैव रेचिता भ्रमणेषु च ॥ २५ ॥
कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ।
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च ॥ २६ ॥
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ।

---

१ इतः पूर्वं खपुस्तके इयदधिकं दृश्यते—अन्ये तु, क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् । २ क्षेपणादिषु-ख ।

निवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥ २७ ॥
नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तराज्जानु यत्र तद्वलनं स्मृतम् ॥ २८ ॥
स्तम्भनं चापि विज्ञेयं अपवृत्तक्रियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥ २९ ॥
पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्र निवर्तनम् ।
गतिष्वधमपात्राणां भये चापि हि कम्पनम् ॥ ३० ॥
वलनं चैव कर्त्तव्यं स्त्रीणां स्वैरपरिक्रमे ।
साध्वसे च विषादे च स्तम्भनं तु प्रयोजयेत् ॥ ३१ ॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
निवर्तनं तु कर्तव्यं संभ्रमादिपरिभ्रमे ॥ ३२ ॥
तथा दर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घायास्तु निबोधत ॥ ३३ ॥
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि च ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥ ३४ ॥
वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः ।
पादो[1] यत्र व्रजेद्विप्रास्तदावर्त्तितमुच्यते ॥ ३५ ॥
जानुनः[2] कुञ्चनं वापि नतं ज्ञेयं प्रयोक्तृभिः ।
विक्षेपं चैव जङ्घायाः क्षिप्तमित्यभिधीयते ॥ ३६ ॥
उद्वाहितं[3] च विज्ञेयमूर्ध्वमुद्वाहनादपि ।
प्रतीपनयनं यत्तत्परिवृत्तं तदुच्यते ॥ ३७ ॥
आवर्तितं प्रयोक्तव्यं संभ्रमातिपरिक्रमे[4] ।
नतं चापि हि कर्तव्यं स्थानासनगतादिषु ॥ ३८ ॥
क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते ।

---

१ अयं श्लोकः खपुस्तके नास्ति ।
२ इतः पूर्वममयमंशः खपुस्तकेऽधिको दृश्यते—केचित्, जङ्घास्वस्तिकयोगेन क्रमादावर्तितं भवेत् । ३ इतः पूर्वं खपुस्तकेऽयमंशोऽधिको दृश्यते—केचित् क्षेपकोऽयम्–नतं स्याज्जानुनमनात् क्षिप्तं विक्षेपणाद् बहिः । ४ विदूषकपरिक्रमे–ख ।

तथा चोद्वाहितं कुर्यादाविद्धगमनादिषु ॥ ३९ ॥
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ।
इत्येतज्जङ्घयोः कर्म पादयोश्च निबोधत ॥ ४० ॥
उद्घट्टितं समं चैव तथाग्रतलसञ्चरः ।
अञ्चितः कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥ ४१ ॥
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ।
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः ॥ ४२ ॥
अयमुद्घट्टितकरणेष्वनुकरणार्थं प्रयोगमासाद्य ।
द्रुत[1]मध्यमप्रचारः सं[2]कृदसकृदा प्रयोक्तव्यः ॥ ४३ ॥
स्वभावरचिते भूमौ समस्थाने च यो भवेत् ।
समः पादः स विज्ञेयः स्वभावाभिनयाश्रयः ॥ ४४ ॥
स्थिरस्वभावाभिनये नानाकरणसंश्रयं ।
चा[3]लिताश्च पुनः कार्यो वि[4]क्षेपः पादरेचिते ॥ ४५ ॥
उत्क्षिप्ता तु भवेत्पार्ष्णिरञ्चितोङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः पादोऽग्रतलसञ्चरः ॥ ४६ ॥
नोदनानिकुट्टिते स्थितनिस्तुंभितेभूमिताडनभ्रमणे ।
विक्षेपविविधरेचकपार्ष्णिक्षताग्रगमनमतेन ॥ ४७ ॥
पार्ष्णिर्यस्याञ्चिता भूमौ ऊर्ध्वाग्रतलं तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः संपादस्त्वञ्चितः स्मृतः ॥ ४८ ॥
पादाग्रतलसञ्चारे वर्तितोद्वर्तिते तथा ।
एष पादाहते कार्यो नानाभ्रमरकेषु च ॥ ४९ ॥
उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
तथा कुञ्चितमध्यश्च सपादः कुञ्चितः स्मृतः ॥ ५० ॥
उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।
उत्क्षिप्तं भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थिता ॥ ५१ ॥
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ।

---

१ धृ–क । २ स तु सव्यवृद्धा–क
३ क०–ख । ४ विधिश्चैः–क ।

नृत्ते नूपुरकरणे प्रयोगस्तस्य कीर्त्यते ॥ ५२ ॥
अतिक्रान्तक्रमे चैव पादमेवं प्रयोजयेत् ।
पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ॥ ५३ ॥
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ।
यथा पादः प्रवर्त्तेत तथैवोरुः प्रवर्त्तते ॥ ५४ ॥
अनयोः समानकरणात् पादचारीं प्रयोजयेत् ।
इत्येतदङ्गजं प्रोक्तं लक्षणं कर्म चैव हि ॥ ५५ ॥
अतः परं प्रवक्ष्यामि चारीव्यायामलक्षणम् ।
इति भारतीये नाट्यशास्त्रे शरीराभिनयो नाम दशमोऽध्यायः ।

# अथैकादशोऽध्यायः ।

एवं पादस्य जङ्घाया ऊर्वोः कट्यास्तथैव च ।
समानकरणाच्चेष्टा सा चारीत्यभिधीयते ॥ १ ॥
विधानोभयतश्चार्यो व्यायच्छन्ति परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद्व्यायाम उच्यते ॥ २ ॥
एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥ ३ ॥
करणानां समायोगात् खण्डमित्यभिधीयते ।
खण्डैः त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥ ४ ॥
चारिभिः प्रस्तुतं नृत्तं चारिभिश्चेष्टितं तथा ।
चारिभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥ ५ ॥
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संज्ञितम् ।
नहि चार्या विना किञ्चिन्नाट्ये ह्यङ्गं प्रवर्तते ॥ ६ ॥
तस्माच्चारीविधानस्य सम्प्रवक्ष्यामि लक्षणम् ।
या यस्मिंस्तु प्रयोक्तव्या नृत्ते युद्धे गतौ तथा ॥ ७ ॥
समपादा स्थिता वार्ता शकटास्या तथैव च ।
अध्यर्धिका चाषगतिर्विच्यवाचा तथापरा ॥ ८ ॥

१ घा (पा) तन—ख । २ अयं श्लोकः खपुस्तके नालोक्यते ।

एडकाक्रीडिता बद्धा ऊरुद्वृत्ता तथाड्डिता ।
उत्स्यन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥ ९ ॥
समोत्सारितमत्तल्ली मतल्ली चापि षोडश ।
एता भौम्यः स्मृताश्चार्यः शृणुताकाशकीः पुनः ॥ १० ॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥ ११ ॥
डोलापादा तथाक्षिप्ता ह्याविद्धोद्धृतसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता तथा ॥ १२ ॥
मृगप्लुता च दण्डा च भ्रमरी चेति षोडश ।
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १३ ॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा स्मृता चारी विज्ञेया स्थानसंश्रया ॥ १४ ॥
भूमिघृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सादयेदन्यं स्थिता वार्त्ता तु सा स्मृता ॥ १५ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत् ॥ १६ ॥
सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्योपसर्पणं चैव ज्ञेया साध्यर्धिका बुधैः ॥ १७ ॥
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी च चाषगत्यां विधीयते ॥ १८ ॥
वीच्यवाक् समपादायां विश्लेषं सम्प्रयोजयेत् ।
निकुट्टयंस्तथाग्रेण पादस्य धरणीतलम् ॥ १९ ॥
तलसञ्चारपादाभ्यामुप्लुत्य पतनं तु यत् ।
पर्यायतश्च क्रियते एडकाक्रीडिता तु सा ॥ २० ॥
अन्योन्यजङ्घासंवेधात् कृत्वा तु स्वरितकं ततः ।
ऊरुभ्यां वलनं यस्मात् सा बद्धाचार्युदाहृता ॥ २१ ॥
तलसञ्चरपादस्य पाष्णिर्बाह्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्धृता ऊरूद्वृत्तेति सा स्मृता ॥ २२ ॥

अग्रतः पृष्ठतो वापि पादस्तु तलसञ्चरः ।
द्वितीयपादो निर्घृष्टः यत्र स्यादड्डिता तु सा ॥ २३ ॥
शनैः पादो विवर्तेत बाह्येणाभ्यन्तरेण वा ।
यद्रेचकानुसारेण सा चार्युत्सन्दिता स्मृता ॥ २४ ॥
मुष्टिहस्तश्च वक्षःस्थः करोऽन्यश्च प्रवर्तितः ।
तलसञ्चारपादश्च जनिता चार्युदाहृता ॥ २५ ॥
पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां न्यसेत् ।
द्वितीयेन तु पादेन तथापस्यन्दितामपि ॥ २६ ॥
तलसञ्चारपादाभ्यां घूर्णमानापसर्पणैः ।
समोत्तारितमत्तल्ली व्यायामे समुदाहृत्ताः ॥ २७ ॥
उभाभ्यामपि[1] पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्युदाहृता ॥ २८ ॥
एता भूम्यः स्मृताश्चार्यो नियुक्तकरणाश्रयाः ।
आकाशकीनां[2] चारीणां सम्प्रवक्ष्यामि लक्षणम् ॥ २९ ॥
कुञ्चितं पादमुत्क्षिप्य पुरतः सम्प्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥ ३० ॥
ऊरुभ्यां[3] वलनं कृत्वा कुञ्चितं तु समुद्धरेत् ।
पार्श्वे विनिक्षिपेच्चैवमपक्रान्ता तु सा स्मृता ॥ ३१ ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वोत्थानोद्वर्तिं न्यसेत् ।
उद्धट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥ ३२ ॥
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ।
द्वितीयं च क्रमात् स्तब्धमूर्ध्वजानुः प्रकीर्तितः ॥ ३३ ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वं पार्श्वं तु दोलयेत् ।
पातयेदञ्चितं चैव दोलापादा तु सा स्मृता ॥ ३४ ॥
कुञ्चितं पादमुत्क्षिप्य आक्षिप्यं चाञ्चितं न्यसेत् ।
जङ्घास्वस्तिकसंयुक्ता उत्क्षिप्ता नाम सा भवेत् ॥ ३५ ॥

---

१ श्लोकोऽयं खपुस्तके न दृश्यते । २ ०कौ० — ख ।
३ श्लोकोऽयं खपुस्तके नास्ति ।

स्वस्तिकस्याग्रतः पादः कुञ्चितस्तु प्रसारितः ।
निपतेदञ्चिताविद्ध आविद्धा नाम सा स्मृता ॥ ३६ ॥
पादमाविद्धमावेष्ट्य समुत्क्षिप्य निपातयेत् ।
परिवृत्य द्वितीयं च सोद्वृत्ता चार्युदाहृता ॥ ३७ ॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥ ३८ ॥
पृष्ठः प्रसारितः पादो वलिताभ्यन्तरीकृतः ।
पार्ष्णिप्रपादितश्चैव अलाता सा प्रकीर्त्तिता ॥ ३९ ॥
कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं प्रवर्त्तयेत् ।
कटिजानुविवर्त्तेन भुजङ्गत्रासिता भवेत् ॥ ४० ॥
अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य विपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणप्लुता ॥ ४१ ॥
नूपुरं चरणं कृत्वा पुरतः सम्प्रसारयेत् ।
क्षिप्रमाविद्धकरणं दण्डपादा तु सा स्मृता ॥ ४२ ॥
अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्त्तयेत् ।
द्वितीयपादभ्रमणात्तलेन[1] भ्रमरी स्मृता ॥ ४३ ॥
आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
धनुर्वज्रादिशस्त्राणां प्रयोक्तव्या प्रयोक्तृभिः ॥ ४४ ॥
अग्रगौ समगौ[2] वापि अनुगौ चापि योगतः ।
पादयोस्तु द्विजहस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥ ४५ ॥
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं ज्ञात्वा तत्रोपाङ्गानि योजयेत् ॥ ४६ ॥
पादचार्या यथा पादो धरणीमेव गच्छति ।
एवं हस्तं चरित्वा तु कटीदेशं समाश्रयेत् ॥ ४७ ॥
एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्थानानि संप्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥ ४८ ॥
वैष्णवं समपादं च वैशाखं मण्डलं तथा ।

१ चलने—ख । २ पृष्ठ०—ख ।

प्रत्यालीढमथालीढं स्थानान्येतानि षण् नूणाम् ॥ ४९ ॥
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समस्थितस्त्वेकः त्र्यस्रपादस्थितोऽपरः ॥ ५० ॥
किञ्चिदञ्चितजङ्घोऽसौ सौष्ठवाङ्गसमन्वितः ।
वैष्णवं स्थातमेतद्धि विष्णुरत्राधिदैवतम् ॥ ५१ ॥
स्थानेनानेन कर्त्तव्यः संल्लापस्तु स्वभावजः ।
नानाकार्यान्तरापेतो नृभिरुत्तममध्यमैः ॥ ५२ ॥
चक्रस्य मोक्षणं चैव धारणे धनुषस्तथा ।
धैर्यदानाङ्गलीलासु तथा क्रोधे प्रयोजयेत् ॥ ५३ ॥
इदमेव विपर्यस्तं प्रणयक्रोध इष्यते ।
उपालम्भकृते चैव प्रकर्षाधिबलस्तथा ॥ ५४ ॥
शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये[1] चपलतायोगे गर्वाभीष्टेषु शक्तिषु ॥ ५५ ॥
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोषितम् ।
समपादे समौ पादौ तालमात्रान्तरस्थितौ ॥ ५६ ॥
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन विप्रमङ्गलकारणम् ॥ ५७ ॥
रूपणं पक्षिणां चैव परं कौतुकमेवच ।
स्वस्थानां स्यन्दनस्थानां विमानस्थायिनामपि ॥ ५८ ॥
लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत् ।
तालास्त्रयोऽर्धतालाश्च[2] पादयोरन्तरं भवेत् ॥ ५९ ॥
तालांस्त्रीनर्धतालांश्च निषण्णोरुं प्रकल्पयेत् ।
त्र्यस्रौ वक्षःस्थितौ चैव तत्र पादौ प्रयोजयेत् ॥ ६० ॥
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ।
स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः ॥ ६१ ॥
व्यायामो निर्गमश्चैव स्थूलपक्षिनिरुपणम् ।
शराणां च समुत्क्षेपं व्यायामकृतमेवच ॥ ६२ ॥

---

१ मन्त्राधिक्येषु–ख । २ श्लोकोऽयं खपुस्तके नास्ति ।

रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ।
ऐन्द्रं तु मण्डलं पादौ चतुस्तालान्तरस्थितौ ॥ ६३ ॥
न्यस्तौ वक्षःस्थितौ चैव कटिजानू समौ तथा ।
धनुर्वज्रादिशस्त्राणां मण्डलेन प्रयोजयेत् ॥ ६४ ॥
वाहनं कुञ्जराणां तु स्थूलपक्षिनिरूपणम् ।
अस्यैव दक्षिणं पादं पञ्च तालान् प्रसार्य तु ॥ ६५ ॥
आलीढस्थानकं कुर्याद् रुद्रश्चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ॥ ६६ ॥
उत्तरोत्तरसंजल्पो रोषामर्षकृतस्तु यः ।
मल्लानाश्चैव संफेटः शत्रूणां च निरूपणम् ॥ ६७ ॥
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ।
कुञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च ॥ ६८ ॥
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ।
आलीढसहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् ॥ ६९ ॥
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ।
न्यायाश्चैव हि विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥ ७० ॥
भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः ।
भारते तु कटीच्छेदं पादच्छेदं तु सात्वते ॥ ७१ ॥
वक्षसो वार्षगण्ये तु शिरश्छेद्यन्तु कैशिके ।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः ॥ ७२ ॥
प्रविचार्य प्रयोक्तव्यो नानाशस्त्रविमोक्षणे ।
न्यायं श्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ॥ ७३ ॥
यस्माद् युद्धानि नीयन्ते तस्मान्न्यायाः प्रकीर्तिता ।
वामहस्तेन निक्षिप्य खेटकं दक्षिणेन च ॥ ७४ ॥
शस्त्रमादाय हस्तेन प्रविचारमथाचरेत् ।
प्रसार्य च करौ सम्यक् पुनराक्षिप्य चैव हि ॥ ७५ ॥
खेटकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वमथापि च ।
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ॥ ७६ ॥

कपोलस्यान्तरे चापि शस्त्रस्योद्वेष्टनं तथा ।
पुनश्च खड्गहस्तेन ललितोद्वेष्टितेन च ॥ ७७ ॥
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ।
एवं विचार्य कर्तव्यो भारते शस्त्रमोक्षणे ॥ ७८ ॥
सात्वते तु प्रवक्ष्यामि प्रविचारं यथाविधि ।
स एवं प्रविचारस्तु खड्गखेटकयोः स्मृतः ॥ ७९ ॥
केवलं पृष्ठतः शक्रं कर्तव्यं खलु सात्वते ।
गतिश्च वार्षगण्येऽपि सात्वतेन क्रमेण तु ॥ ८० ॥
शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते ।
शिरःपरिगमादस्मिंस्तस्य शस्त्रस्य केवलम् ॥ ८१ ॥
उरस्युद्वेष्ठनं कार्यं शस्त्रस्याङ्गेन वा पुनः ।
भारते प्रविचारोऽयं कर्तव्यः स तु कौशिके ॥ ८२ ॥
विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।
प्रविचाराश्च कर्तव्या ह्येवमेतेऽङ्गलीलया ॥ ८३ ॥
धनुर्वज्रादिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि तु च्छेद्यं न चापि रुधिरस्रुतिः ॥ ८४ ॥
रङ्गप्रहरणे कार्यं न चापि व्यक्तघातनम् ।
संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥ ८५ ॥
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।
अङ्गैः सौष्ठवसंयुक्तैरङ्गहारैर्विभूषितम् ॥ ८६ ॥
व्यायामं कारयेत् सम्यक् लयतालसमन्वितः ।
सौष्ठवेन तु यत्नस्तु कार्यो व्यायामसेविभिः ॥ ८७ ॥
न हि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ।
अचञ्चलमकुब्जं चासन्नगात्रमथापि च ॥ ८८ ॥
नात्युच्चं चलपातं च सौष्ठवाङ्गं प्रयोजयेत् ।
कटी कर्णसमा यत्र कूर्परोंऽसस्थितस्तथा ॥ ८९ ॥
सौष्ठवं[2] लक्षणं प्रोक्तवर्त्मना क्रमयोजितम् ।

---

१ ०द्वर्ति०—ख । २ श्लोकोऽयं कपुस्तके नास्ति ।

शोभा सर्ववविरत्यं (?) हि सौष्ठवं समुपाश्रिता ॥ ९० ॥
समुन्नतमुरश्चैव सौष्ठवं नाम तद् भवेत् ।
कटिनाभिखरौ हस्तौ वक्षश्चैव समुन्नतम् ॥ ९१ ॥
वैष्णवं स्थानमित्यङ्गं चतुरस्रमुदाहृतम् ।
परिमार्जनमादानं सन्धानं मोक्षणं तथा ॥ ९२ ॥
धनुषस्तु प्रकर्त्तव्यं करणं तु चतुर्विधम् ।
संमार्जनं परामर्श आदानं ग्रहणं क्रिया ॥ ९३ ॥
सन्धानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ।
तैलाभ्यक्तेन गात्रेण [२]युवा श्वासोदितेन च ॥ ९४ ॥
व्यायामं कारयेत् धीमान् भित्तावाकाशिके तथा ।
योग्यायां मातृका भित्तिस्तस्माद्भित्तिं समाश्रयेत् ॥ ९५ ॥
[१]भित्तौ प्रसारिताङ्गस्तु व्यायामं कारयेद् बुधः ।
बलार्थं च निषेवेत नस्यं च त्रिविधं तथा ॥ ९६ ॥
आहारेऽधिष्ठिताः प्राणा प्राणे योग्याः प्रतिष्ठिताः ।
तस्माद्योग्यप्रसिध्यर्थमाहारे यत्नवान् भवेत् ॥ ९७ ॥
अशुद्धकायं प्रक्लान्तमतीवक्षुत्पिपासितम् ।
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ॥ ९८ ॥
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ।
व्यायामं कारयेद्धीमान् नरमङ्गक्रियात्मकम् ॥ ९९ ॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ।
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ॥ १०० ॥

इति भारतीये नाट्यशास्त्रे चारीविधानो नाम
एकादशोऽध्यायः ।

---

१ एष श्लोकः खपुस्तके नास्ति । २ यवागूमृदितेन च-ख ।

# अथ द्वादशोऽध्यायः ।

एताश्चार्यो मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥ १ ॥
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
सूचीविद्धं दण्डपादाविहृतालातके तथा ॥ २ ॥
वामबन्धं सललितं क्रान्तश्चाकाशगामि च ।
भ्रमरास्कन्दिते स्यातामावर्तं च तथा परम् ॥ ३ ॥
समाक्रन्दितमप्याहुरेडकाक्रीडितं तथा ।
अड्डितं शकटास्यं च तथाऽध्यर्धकमेव च ॥ ४ ॥
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ।
भूमिकामण्डला ह्येते लक्षणं च निबोधत ॥ ५ ॥
आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत् ।
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ॥ ६ ॥
सूचीपादं पुनश्चैव त्रिकं च परिवर्तयेत् ।
तथा दक्षिणमुद्धृत्य अलातञ्चैव वामकम् ॥ ७ ॥
परिच्छिन्नं तु कर्त्तव्यं बाह्यभ्रमरकेण हि ।
अतिक्रान्तं पुनर्वामं दण्डपादञ्च दक्षिणम् ॥ ८ ॥
उद्धृत्तं दक्षिणं चैव अलातं चैव वामकम् ।
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा ॥ ९ ॥
विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम् ।
बाह्यभ्रमरकञ्चैव विक्षेपञ्चैव योजयेत् ॥ १० ॥
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ।
कृत्वोर्ध्ववामचरणमाद्यं सूचीं प्रयोजयेत् ॥ ११ ॥
अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् ।
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् ॥ १२ ॥
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तञ्च वामकम् ।

---

१ ०परिवृत्ता-ख ।

सूचीवामक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ॥ १३ ॥
पार्श्वक्रान्तं पुनश्चान्यो वामोऽतिक्रान्त एव च ।
परिच्छिन्नं च कर्त्तव्यं बाह्यभ्रमणकेण हि ॥ १४ ॥
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरैः ।
सूचीवामपदं दद्यात् त्रिकं च परिवर्तयेत् ॥ १५ ॥
पार्श्वक्रान्तः पुनश्चान्यो वामोऽतिक्रान्त एव च ।
सूचीमाद्यं पुनर्दद्यात् अतिक्रान्तश्च वामकम् ॥ १६ ॥
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले ।
आद्यस्तु जनितो भूत्वा स च दण्डक्रमो भवेत् ॥ १७ ॥
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्त्तयेत् ।
उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ॥ १८ ॥
पार्श्वक्रान्तः पुनश्चान्यः भुजङ्गत्रासितस्तथा ।
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ॥ १९ ॥
वामसूचीत्रिकावर्त्तौ दण्डपादे तु मण्डले ।
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ॥ २० ॥
आस्कान्दितं च वामेन उद्धृत्तं दक्षिणेन च ।
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणम् ॥ २१ ॥
पार्श्वक्रान्तं पुनर्वाममाक्षिप्तो दक्षिणस्तथा ।
परिवृत्य त्रिकं चैव दण्डपादं प्रसारयेत् ॥ २२ ॥
सूचीवामपदं दद्यात् त्रिकं तु परिवर्त्तयेत ।
भुजङ्गत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ॥ २३ ॥
एष चारप्रियोगस्तु विहृते मण्डले भवेत् ।
सूचीमाद्यक्रमं कृत्वा चाऽपक्रान्तं च वामकम् ॥ २४ ॥
पार्श्वक्रान्तस्ततश्चान्तोऽप्यलातश्चैव वामकः ।
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः ॥ २५ ॥
कार्यस्त्रिकविवर्त्तश्च पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्यात् दण्डपार्श्वं च दक्षिणम् ॥ २६ ॥
ऊरूद्वृत्तं च तेनैव कर्त्तव्यं दक्षिणेन तु ।

सूचीवामकरं चैव त्रिकं च परिवर्त्तयेत् ॥ २७ ॥
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामो वामबन्धे तु मण्डले ॥ २८ ॥
सूचीमाद्यक्रमं कृत्वा अपक्रान्तं च वामकम् ।
पार्श्वक्रान्तः पुनश्चान्यो भुजङ्गत्रासितं तथा ॥ २९ ॥
अतिक्रान्तः पुनः वाम आक्षिप्तो दक्षिणस्तथा ।
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तं तथैव च ॥ ३० ॥
अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामः कार्यो ललितसंज्ञकः ॥ ३१ ॥
एष पादप्रसारस्तु ललिते मण्डले भवेत् ।
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ॥ ३२ ॥
पार्श्वक्रान्तं पुनश्चान्यं वामपार्श्वक्रमं तथा ।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥ ३३ ॥
वामसूचीं ततो दद्यात् अपक्रान्तं च दक्षिणम् ।
स्वभावगमने ह्येतन्मण्डलं संविधीयते ॥ ३४ ॥
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ।
एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु ॥ ३५ ॥
अतः परं प्रवक्ष्यामि भौमानामिह लक्षणम् ।
आद्यन्तुं जनितः कार्यो वामश्चास्कन्दितो भवेत् ॥ ३६ ॥
शकटास्यः पुनश्चान्यो वामश्चापि प्रसारितः ।
आद्यो भ्रमरकः कार्यस्त्रिकश्च परिवर्तयेत् ॥ ३७ ॥
आस्कन्दितः पुनर्वामः शकटास्यश्च दक्षिणः ।
वामः पृष्ठापसर्पी च दद्यात् भ्रमरकं तथा ॥ ३८ ॥
स एवास्कान्दितः कार्यस्त्वेतद् भ्रमरमण्डलम् ।
आद्यो भ्रमरकः कार्यो वामश्चैवाड्डितो भवेत् ॥ ३९ ॥
एतदास्कन्दितं नाम व्यायामे युद्धमण्डलम् ।
आद्यन्तु जनितं कृत्वा वामश्चैव निकुट्टकम् ॥ ४० ॥
शकटास्यः पुनश्चान्य ऊरूद्वृत्तः स एव च ।

पृष्ठापसर्पी वामश्च स च चाषगतिर्भवेत् ॥ ४१ ॥
आस्कन्दितं पुनः सौख्यं शकटास्यश्च वामकः ।
आद्यो भ्रमरकश्चैव त्रिकञ्च परिवर्तयेत् ॥ ४२ ॥
पृष्ठापसर्पी वामश्चेत्यावर्ते मण्डले भवेत् ।
समपादं बुधः कृत्वा स्थानं हस्तौ प्रसारयेत् ॥ ४३ ॥
निरन्तरावूर्ध्वतलावावेष्ट्योद्वेष्ट्य चैव हि ।
कटीतटे विनिक्षिप्य आद्यमावर्त्तयेत क्रमम् ॥ ४४ ॥
तथा क्रमं पुनर्वाममावर्तेन प्रसारयेत् ।
चारया चानया भ्रान्त्वा पर्यायेणाथ मण्डलम् ॥ ४५ ॥
समोत्सारितमेतत्तु कार्यं व्यायाममण्डलम् ।
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च ॥ ४६ ॥
एडकाक्रीडितश्चैव तूर्णं त्रिकविवर्तितैः ।
सूचीविद्धापविद्धश्च क्रमेणावृत्त्य मण्डलम् ॥ ४७ ॥
एलकाक्रीडितं दद्यात कण्डमण्डलसंज्ञितम् ।
सव्यमुद्घट्टितं कृत्वा तेनैवावर्तमाचरेत् ॥ ४८ ॥
तेनैवास्कन्दितं कार्यं शकटास्यश्च वामकः ।
आद्यः पृष्ठावसर्पी च स च चाषगतिर्भवेत ॥ ४९ ॥
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ।
आद्यन्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ॥ ५० ॥
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः ।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥ ५१ ॥
अध्यर्धमेतद्विज्ञेयं नियुद्धे चारिमण्डलम् ।
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तञ्च वामकम् ॥ ५२ ॥
भुजङ्गत्रासितश्चान्य एष एव तु वामकः ।
भुजङ्गत्रासितैर्भ्रान्त्वा चारैरपि च मण्डलम् ॥ ५३ ॥
पिष्टकुट्टन्तु विज्ञेयं नियुद्धे चारिमण्डलम् ।
सर्वैश्चापगतैः पादैः परिभ्राम्य तु मण्डलम् ॥ ५४ ॥
एतच्चाषगतं विद्यान्नियुद्धे चारिमण्डलम् ।

नानाचारीसमुत्थानि मण्डलानि समासतः ॥ ५५ ॥
उक्तान्यतः परं चैव समचारीणि योजयेत् ।
समचारीप्रयोगो यस्तत्समं नाम मण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥ ५६ ॥
एतानि खण्डानि समण्डलानि युद्धे नियुद्धे च परिक्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥५७॥

इति भारतीय नाट्यशास्त्रे मण्डलविधानं नाम
द्वादशोऽध्यायः समाप्तः ।

# अथ त्रयोदशोऽध्यायः ।

एवं व्यायामसंयोगे कार्यं मण्डलकल्पनम् ।
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥ १ ॥
तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।
यथामार्गरसोपेतं प्रकृतीनां प्रवेशनम ॥ २ ॥
ध्रुवायां संप्रयुक्तायां पटे चैवावकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः ॥ ३ ॥
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ।
समुन्नतं समं चैव चतुरस्रमुरस्तथा ॥ ४ ॥
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः ॥ ५ ॥
कर्णादष्टाङ्गुलिस्थे च बाहुशीर्षे प्रयोजयेत् ।
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम ॥ ६ ॥
हस्तौ तथैव कर्तव्यौ कटीनाभितटस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वामः कटितटस्थितः ॥ ७ ॥
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
पादोत्क्षेपस्तु कर्त्तव्यः स्वप्रमाणविनिर्मितः ॥ ८ ॥
चतुस्तालो द्वितालश्च एकतालस्तथैव च ।

१ श्लोकार्धमिदं खपुस्तके नास्ति ।

चतुस्तालस्तु देवानां पार्थिवानां तथैव च ॥ ९ ॥
द्वितालश्चैव मध्यानां तालः स्त्रीनीचसङ्गिनाम् ।
[1]चतुष्कलोऽथ द्विकलस्तथा ह्येककलः स्मृतः ॥ १० ॥
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः पादो नीचानां संप्रकीर्तितः ॥ ११ ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयत्रयम् ।
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् ॥ १२ ॥
धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसम्मतानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥१३॥
एष एव भुवि ज्ञेयः कलातालल्ये विधिः ।
पुनर्गतिं प्रचारस्य प्रयोगं शृणुतानघाः ॥ १४ ॥
स्वभावैरुत्तमगतौ कार्यं जानुकटीसमम् ।
युद्धचारीप्रयोगेषु जानुस्तनसमं भवेत् ॥ १५ ॥
पार्श्वक्रान्तैः सललितैः पादैर्वाद्यान्वितैरथ ।
रङ्गकोणोन्मुखो गच्छेत् सम्यक् पञ्चपदानि तु ॥ १६ ॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन तु ।
[2]परिवृत्य द्वितीयं तु गच्छेत् कोणं ततः परम् ॥ १७ ॥
तत्रापि वामवेधस्तु विक्षेपो व्राक्षितेन च ।
ततो भाण्डोन्मुखो गच्छेत् तान्येव विपदानि च ॥ १८ ॥
एवं गतागतैः कृत्वा पदानामेकविंशतिम् ।
वामवेधं ततः कुर्यात् विक्षेपं दक्षिणस्य च ॥ १९ ॥
रङ्गे विकृष्टे भरतेन कार्यौ गतागतैः पादगतिप्रचारः ।
त्र्यस्रे त्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव ॥ २० ॥
यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलोऽथ द्विकलो भवेदेककलः पुनः ॥ २१ ॥
अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः ।

---

१ श्लोकार्द्धमेतत् खपुस्तके न दृश्यते ।
२ सार्धश्लोकद्वयं कपुस्तके नोपलभ्यते ।

चतुष्कलमथोर्ध्वं च तथा चैककलं पुनः ॥ २२ ॥
देवदानवयक्षाणां नृपपन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥ २३ ॥
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते ।
तत्रापि चोर्ध्ववा(गा?)ये तु तेषां देवैः समा गतिः ॥ २४ ॥

अत्राह—

यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति ॥ २५ ॥
इह प्रकृतयो दिव्या तथा च दिव्यमानुषी ।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति ॥ २६ ॥
देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषी ।
या त्वन्यालोकविदिता मानुषी सा प्रकीर्तिता ॥ २७ ॥
देवान्वाजास्तु राजानो वेदाध्यात्मप्रकीर्तिताः ।
एवं देवानुकरणे दोषो ह्यत्र न विद्यते ॥ २८ ॥
अयं विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ।
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते ॥ २९ ॥
[1]सर्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया ।
उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥ ३० ॥
चतुर्थैककलं वा स्यात् तथार्धकलमेव च ।
[3]अवस्थान्तरमासाद्य कुर्याद् गतिविचेष्टितम् ॥ ३१ ॥
[4]ज्येष्ठे चतुष्कलं ह्यत्र मध्यमे द्विकलं भवेत् ।
विकलं चोत्तमा यत्र नीचेष्वर्धकलं भवेत ॥ ३२ ॥
एवमर्धार्धहानिं तु कलानां संप्रयोजयेत् ।
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत ॥ ३३ ॥
मध्यमानां गतिर्या तु न तां नीचेषु योजयेत् ।
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ॥ ३४ ॥

---

१ श्लोकोऽयं खपुस्तके नोपलभ्यते । २ ०रर्ध-ख ।
३ अथवा ज्वर-ख । ४ सार्धश्लोकद्वयमिदं खपुस्तके नास्ति ।

विस्मये[1] चावहित्थे च तथौत्सुक्यसमन्विते ।
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ॥ ३५ ॥
पुनश्चिन्तान्विते चैव गतिः कार्या चतुष्कला ।
अस्वस्थे कामिते चैव भये वित्रासिते तथा ॥ ३६ ॥
आवेगे चैव हर्षे च कार्ये यच्च त्वरान्वितम् ।
अनिष्टश्रवणे चैव क्षेपे[3]ष्यार्दद्भुतदर्शने ॥ ३७ ॥
अपि चात्ययिके कार्ये दुःखिते शत्रुमार्गणे ।
अपराध्वानुसरणे श्वापदानुगते तथा ॥ ३८ ॥
एतेष्वेवं गतिः प्राज्ञो द्विकलां सम्प्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वच्छकामितसम्भवा ॥ ३९ ॥
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूचयश्चाप्यभिनयं कुर्यादर्थसमाश्रयम् ॥ ४० ॥
हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ४१ ॥
गच्छेत् सललितैः पादैरतिक्रान्तोत्थितस्तथा ।
तथा सौष्ठवसंयुक्तैर्लयतालसमन्वितैः ॥ ४२ ॥
पादयोरनुगौ हस्तौ नित्यं कार्यौ प्रयोक्तृभिः ।
उत्क्षिप्तः[4] सहपादेन पतनेन विपर्ययः ॥ ४३ ॥
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ।
विसर्जितजनस्तत्र तथा दूतीसहायवान् ॥ ४४ ॥
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ।
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा ॥ ४५ ॥
व्रजेत् प्रच्छन्नकामैस्तु पादैर्निश्शब्दमन्दगैः ।
शब्दशक्त्युत्सुकश्च स्यादवलोकनतत्परः ॥ ४६ ॥

---

१ विक्षते-क ।
२ इदं श्लोकार्द्धं खपुस्तके त्वेवं पठ्यते:—
गतिः स्थितलया कार्या विफलान्तरपातिना ।
३ क्षेपे चा०-ख । ४ श्लोकार्द्धमिदं खपुस्तके नास्ति ।

वेपमानशरीरश्च शङ्कितः प्रस्खलन् मुहुः ।
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति ॥ ४७ ॥
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।
नैपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ॥ ४८ ॥
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकीर्तितः ।
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ॥ ४९ ॥
तथापि शिरहस्तश्च रौद्रो नेपथ्यजस्तु सः ।
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ॥ ५० ॥
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्त्तितः ।
रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः ॥ ५१ ॥
रूक्षे निर्भत्सनपरो रौद्रः सोऽयं स्वभावजः ।
चतुस्तालान्तरोत्क्षिप्तैः पदैस्त्र्यन्तरपातितैः ॥ ५२ ॥
गतिरेवं प्रकर्त्तव्या तेषां ये चापि तद्विधाः ।
अहृद्या तु मही यत्र श्मशानरणकश्मला ॥ ५३ ॥
गतिं तत्र प्रयुञ्जीत बीभत्सानुनयं प्रति ।
क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित् ॥ ५४ ॥
एडकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
तेषामेवानुगैर्हस्तैर्बीभत्सा गतिरिष्यते ॥ ५५ ॥
तथा वीरे प्रकर्त्तव्या पदविक्षेपसंयुता ।
द्रुता प्रहरणाविद्धा नानाचारीसमाकुला ॥ ५६ ॥
पार्श्वक्रान्तैस्तथाविद्धैः सूचीविद्धैस्तथैव च ।
कालाकालागतैः पादैरावेगे योजयेद् गतिम् ॥ ५७ ॥
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ।
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ॥ ५८ ॥
विस्मये चैव हर्षे च विक्षिप्य पदविक्रमान् ।
आसाद्य तु रसं हास्यमेताश्चान्याश्च योजयेत् ॥ ५९ ॥
पुनश्च करुणे कार्या गतिः स्थिरपदैरथ ।

१ श्लोकोऽयं खपुस्तके नास्ति ।

वाष्पाम्बुरुद्धनयनः सन्नगात्रस्तथैव च ॥ ६० ॥
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः ।
गच्छेत्तथाविद्धकायः प्रत्यग्रगतिसंश्रये ॥ ६१ ॥
एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव च ।
उत्तमानां तु कर्त्तव्या सधैर्यं वाष्पसंगता ॥ ६२ ॥
निश्वासैरायतोत्कृष्टैस्तथैवोर्ध्वनिरीक्षितैः ।
न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥ ६३ ॥
उरःपादगतोत्साहः शोकव्याकुलचेतनः ।
नात्युत्क्षिप्तैः पदैर्गच्छेत् इष्टबन्धुनिपातने ॥ ६४ ॥
गाढप्रहारे कार्ये च शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिश्चूर्णपदैरथ ॥ ६५ ॥
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥ ६६ ॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ॥ ६७ ॥
दन्तोष्ठस्फुरणं चैव चिबुकस्य तु कम्पनम् ।
कार्यं शनैश्च गन्तव्यं शीताभिनयने गतौ ॥ ६८ ॥
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ ६९ ॥
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकनैः ॥ ७० ॥
द्रुतैश्चूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ॥ ७१ ॥
एषानुकरणे कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतस्वरम् ॥ ७२ ॥
एषा स्त्रीणां प्रकर्त्तव्या नृणाञ्चाक्षिप्तविक्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ ७३ ॥
एडकाक्रीडितैः पादैरुपर्युपरि पातितैः ।

  

एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् ॥ ७४ ॥
वणिजां सचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ७५ ॥
कृत्वा नाभितटे हस्तं मुक्ताङ्ककटकामुखम् ।
आद्यं चारालमुक्तानां कुर्यात्पार्श्वं तदन्तरे ॥ ७६ ॥
न निषण्णं वचस्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥ ७७ ॥
यतीनां श्रमणानां च ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्विप्रा नैष्ठिकं व्रतमाश्रिता ॥ ७८ ॥
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥ ७९ ॥
अचञ्चलमनाश्चैव तथा लिङ्गं समाश्रितः ।
विनीतवेषश्च भवेत् कषायवसनस्तथा ॥ ८० ॥
प्रथमं समपादेन कृत्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा तथा चैकं प्रयोजनम् ॥ ८१ ॥
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगः ।
अनिषण्णेन गात्रेण गतिं गच्छेदतिक्रमात् ॥ ८२ ॥
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ८३ ॥
तथा व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः ।
विभ्रान्ता वाप्युदात्ता वा विभ्रान्तनिभृतापि वा ॥ ८४ ॥
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ।
कार्या पाशुपतानां च गतिरुद्भ्रान्तगामिनी ॥ ८५ ॥
अन्धकारेऽन्धयाने च गतिः कार्या प्रयोक्तृभिः ।
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शितैः ॥ ८६ ॥
अधस्तस्यापि कर्तव्या गतिश्चूर्णपदैरथ ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ ८७ ॥

१ श्लोकद्वयं खपुस्तके न दृश्यते ।

धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम् ।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ॥ ८८ ॥
वाहनानि विचित्राणि कर्तव्यानि विभागशः ।
द्रुतैश्चूर्णपदैश्चैव कर्तव्यं रङ्गमण्डले ॥ ८९ ॥
विमानस्थस्य कर्तव्या एषैव स्यन्दिनी गतिः ।
आरूढमुद्वहेद् गात्रं किञ्चित् स्यादुन्मुखस्थितम् ॥ ९० ॥
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।
अधोऽवलोकनैश्चैव मण्डलावर्तनेन च ॥ ९१ ॥
आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः ।
[1]व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद् द्रु(ग?)तिम् ॥ ९२ ॥
रुद्धायतोऽनुतननैः(?) कुटिलावर्तितैरथ ।
भ्रश्यतश्च तथाकाशादपविद्धभुजा गतिः ॥ ९३ ॥
विकीर्णवसना चैव तथा भूगतलोचना ।
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ॥ ९४ ॥
आरोहणावतरणं कार्यमर्थवशाद् बुधैः ।
प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ॥ ९५ ॥
उद्वाह्य गात्रपादश्च सोपाने निक्षिपेन्नरः ।
[2]अथावतरणञ्चैव गात्रमानम्य रेचयेत् ॥ ९६ ॥
अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ।
प्रासादारोहणं यत्तु तदेवाद्रिषु कारयेत् ॥ ९७ ॥
केवलं मूर्धनिक्षेपमद्रिष्वङ्गे भवेदथ ।
द्रुमे चारोहणं कार्यमतिक्रान्तोत्थितैः पदैः ॥ ९८ ॥
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ।
एतदेवावतरणं सरित्स्वपि नियोजयेत ॥ ९९ ॥
प्रासादे यन्मया प्रोक्ता प्रतारे केवलं भवेत् ।
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥ १०० ॥

---

१ श्लोकद्वयं कपुस्तके नोपलभ्यते ।
२ खपुस्तके श्लोकद्वयमेतन्न दृश्यते ।

तोयेऽल्पे वसनोत्कर्षैः प्राज्ये पाणिविकर्षणैः ।
किञ्चिन्नताग्रकाया तु प्रतारे गतिरिष्यते ॥ १०१ ॥
प्रसार्य बाहुमेकैकं मुहुर्बाहुविकर्षणः ।
तिर्यक् प्रसारिता चैव ह्रियमाणस्य वारिणा ॥ १०२ ॥
अशेषाङ्गाकुलापूरवदना गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या गतिश्चूर्णपदैर्गतिः ॥ १०३ ॥
अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् ।
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ॥ १०४ ॥
तस्मान्मृत इति प्रोक्ते किं कर्तव्यं प्रयोक्तृभिः ।
अङ्कुशग्रहणान्नागं खलीनग्रहणाद्धयम् ॥ १०५ ॥
प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि ।
अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ॥ १०६ ॥
यथा चूर्णपदैश्चित्रैरुपर्युपरि पातितैः ।
[1]वनगानां गतिः कार्या पादैः स्वस्तिकसंज्ञितैः ॥ १०७ ॥
पार्श्वक्रान्तं पदं कुर्यात् स्वस्तिकं रेचयेदिह ।
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा ॥ १०८ ॥
पादैराकुञ्चितैः किञ्चित् तालाभ्यन्तरपातितैः ।
ससौष्ठवसमायुक्तौ तथा हस्तौ पदानुगौ ॥ १०९ ॥
कटकौ वर्धमानौ तु कृत्वा विटगतिं व्रजेत् ।
काञ्चुकीयस्य कर्तव्या वयोवस्थाविशेषतः ॥ ११० ॥
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् ।
अर्धतालोत्थितैः पादैर्विष्कम्भैः ऋजुभिस्तथा ॥ १११ ॥
समुद्वहंस्तथाङ्गानि पङ्कलग्न इव व्रजेत् ।
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका ॥ ११२ ॥
विष्कम्भेन कृतप्राणा मन्दोत्थितपदक्रमा ।
कृशस्याप्यभिनेया वै गतिर्मन्दपदक्रमा ॥ ११३ ॥
व्याधिग्रस्ते ज्वरार्ते च तपःश्रान्ते क्षुधान्विते ।

१ पन्नगानां—ख ।

विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा ॥ ११४ ॥
क्षामस्वरकपोलश्च दीननेत्रस्तथैव च ।
शनैरुत्क्षेपणं चैव कर्त्तव्यं हस्तपादयोः ॥ ११५ ॥
कम्पनं चैव गात्राणां क्लेशनं च तथैव च ।
दूराध्वानं गतस्यापि गतिर्मन्दपदक्रमा ॥ ११६ ॥
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम् ।
स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ॥ ११७ ॥
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा ।
विष्कम्भगामी च भवेन्निश्वासबहुलस्तथा ॥ ११८ ॥
श्रमस्वेदाभिभूतश्च व्रजेच्चूर्णपदैस्तथा ।
मत्तानां तु गतिः कार्या मदे तरुणमध्यमे ॥ ११९ ॥
वामदक्षिणपादाभ्यां घूर्णमानोपसर्पणः ।
अपकृष्टे मदे चैव ह्यनवस्थितपादिका ॥ १२० ॥
विघूर्णितशरीरा च पदैः प्रस्खलितैरथ ।
उन्मत्तस्यापि कर्तव्या गतिश्च नियतक्रमा ॥ १२१ ॥
बहुचारीसमायुक्ता लोकानुकरणाश्रया ।
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ॥ १२२ ॥
अनिमित्तप्रकथनो बहुभाषी विकारवान् ।
गायत्यकस्माद्धसति सङ्गे चापि न सज्जते ॥ १२३ ॥
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः ।
कदाचिद्धावति जवात् कदाचिदवतिष्ठते ॥ १२४ ॥
कदाचिदुपविष्टस्तु शयितः स्यात् कदाचन ।
नानाचीरधरश्चैव रथ्यास्वनियतालयः ॥ १२५ ॥
उन्मत्तो भवति ह्येष तस्य तां कारयेत् गतिम् ।
स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ॥ १२६ ॥
बध्वा चारीं तथा चैव कृत्वा स्वस्तिकमेव च ।
अनेन चारीयोगेन परिक्रम्य चतुर्दिशम् ॥ १२७ ॥

---

१ श्लोकत्रयमेतत् खपुस्तके नोपलभ्यते ।

चाद्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् ।
त्रिकं सुललितं कृत्वा लताख्यं हस्तमेव च ॥ १२८ ॥
विपर्ययगतैर्हस्तैः पद्भ्यां सहगतिर्भवत् ।
त्रिविधा तु गतिः कार्या खञ्जपङ्गुकवामनैः ॥ १२९ ॥
विकलाङ्गप्रयोगेण कुहकाभिनयं प्रति ।
एकः खञ्जगतौ नित्यं स्तब्धो वै चरणो भवेत् ॥ १३० ॥
तथा द्वितीयः कार्यस्तु पादोऽग्रतलसञ्चरः ।
स्तब्धेनोत्थापनं कार्यमङ्गस्य चरणेन तु ॥ १३१ ॥
गमनेन विषण्णःस्यादन्यो न चरणेन तु ।
इतरेण निषीदेच्च क्रमेणानेन वै व्रजेत् ॥ १३२ ॥
एषा खञ्जगतिः कार्या तालशल्यक्षतेषु च ।
पादेनाग्रतलस्थेन अञ्चितेन व्रजेत्तथा ॥ १३३ ॥
निषण्णदेहा पङ्गोस्तु नतजङ्घा तथैव च ।
सर्वसंकुचिताङ्गा च वामने गतिरिष्यते ॥ १३४ ॥
न तस्य विक्रमः कार्यो विक्षेपश्चरणस्य वा ।
सोद्वाहिता चूर्णपदा सा कार्या कुहकात्मिका ॥ १३५ ॥
विदूषकस्यापि गतिर्हास्यत्रयसमन्विता ।
अङ्गवाक्यकृतं हास्यं हास्यं नेपथ्यजं तथा ॥ १३६ ॥
दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ।
य ईदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् ॥ १३७ ॥
यदा तु खगवत् गच्छेदुल्लोकितविलोकितैः ।
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्स तु ॥ १३८ ॥
वाक्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणात् ।
अनर्थकैर्बहुविधैस्तथा चाश्लीलभाषितैः ॥ १३९ ॥
चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डितः ।
यस्तादृशो भवेद्विप्रा हास्यो नेपथ्यजस्तु सः ॥ १४० ॥
तस्मात्तु प्रकृतिं ज्ञात्वा भावः कार्यस्तु तत्त्वतः ।
गतिप्रचारं विभजेत् नानावस्थान्तरात्मकम् ॥ १४१ ॥

स्वभावजायां विन्यस्य कुटिलं वामके करे ।
तदा दक्षिणहस्ते च कुर्याच्चतुरकं ततः ॥ १४२ ॥
पार्श्वमेकं शिरश्चैव हस्तोऽथ चरणस्तथा ।
पर्यायतः सन्नमते लयतालवशानुगः ॥ १४३ ॥
स्वभावजा तु तस्यैषा गतिरन्या विकारजा ।
अलभ्यलाभात् भक्ष्यस्य तथा तस्य गतिर्भवेत् ॥ १४४ ॥
कार्या चैव हि नीचानां चेटादीनां परिक्रमात् ।
अधमा इति ये ख्याता नानाशीलाश्च ते पुनः ॥ १४५ ॥
पार्श्वमेकं शिरश्चैव करः सचरणस्तथा ।
गतौ नमेत चेटानां दृष्टिश्चार्धविचारिणी ॥ १४६ ॥
वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितैः ।
गात्रैर्विकारविक्षिप्तैर्लम्बवस्त्रस्रजस्तथा ॥ १४७ ॥
गर्विता चूर्णपादस्य शकारस्य गतिर्भवेत् ।
जात्या नीचेषु योक्तव्या विलोकनपरा गतिः ॥ १४८ ॥
अत्यस्पर्शाच्च लोकस्य स्वाङ्गानि विनिगूह्य च ।
म्लेच्छानां जातयो यास्तु पुलिन्दशवरादयः ॥ १४९ ॥
तेषां गतिविचारेण कार्यं गतिविचेष्टितम् ।
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः ॥ १५० ॥
स्वस्वजातिसमुत्थेन स्वभावेन गतिर्भवेत् ।
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ॥ १५१ ॥
या कृता नरसिंहेन विष्णुना प्रभविष्णुना ।
आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ॥ १५२ ॥
जानूपरि करं चैकमपरं वक्षसि स्थितम् ।
अवलोक्य दिशः कृत्वा चिबुकं बाहुमस्तके ॥ १५३ ॥
गन्तव्यं विक्रमैर्विप्रा पञ्चतालान्तरोत्थितैः ।
नियुद्धसमये चैव रङ्गावतरणे तथा ॥ १५४ ॥
सिंहादीनां प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः ।

१ स्तब्धा–ख ।

शेषाणामर्थयोगेन गतिं स्थाने च योजयेत् ॥ १५५ ॥
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ।
एवमेताः प्रयोक्तव्या नराणां गतयो बुधैः ॥ १५६ ॥
नोक्ताश्च या मया ह्यत्र ग्राह्यास्ता अपि लोकतः ।
अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ॥ १५७ ॥
स्त्रीणां स्थानानि कार्याणि गतिष्वाभरणेषु च ।
आयतं चावहित्थं च अश्वक्रान्तमथापि च ॥ १५८ ॥
दक्षिणस्तु समः पश्चात् त्र्यस्रः पक्षस्थितोऽपरः ।
वामः समुन्नतकटिश्चायते स्थानके भवेत् ॥ १५९ ॥
आवाहने विसर्गे च तथा निर्वर्णनेषु च ।
चिन्तायां चावहित्थे च स्थानमेतत्प्रयोजयेत् ॥ १६० ॥
रङ्गावतरणारम्भः पुष्पाञ्जलिविसर्जनम् ।
मन्मथेर्ष्योद्भवं कोपं तर्जन्याङ्गुलिमोटनम् ॥ १६१ ॥
निषेधगर्वगाम्भीर्यमौनं मानावलम्बनम् ।
स्थानेऽस्मिन् संविधातव्यं दिगन्तरनिरूपणम् ॥ १६२ ॥
समो यत्र स्थितो वामस्त्र्यस्रः पक्षस्थितोऽपरः ।
समुन्नतकटिर्वामस्त्ववहित्थन्तु तद्भवेत् ॥ १६३ ॥
पुरोऽपि चलितस्त्र्यस्रस्तदन्योपसृतः समः ।
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम् ॥ १६४ ॥
पाणिर्लताख्यो यत्रैकस्तदन्यस्तु नितम्बगः ।
अवहित्थं समाख्यातं स्थानमागमभूषणैः ॥ १६५ ॥
स्त्रीणामेतत् स्मृतं स्थानं संलापे तु स्वभावजे ।
निश्चये परितोषे च वितर्के चिन्तने तथा ॥ १६६ ॥
विवाहलीलालावण्ये शृङ्गारादिनिरूपणे ।
स्थानमेतत्प्रयोक्तव्यं तथा मार्गावलोकने ॥ १६७ ॥
पादः समुत्थितश्चैक एकश्चाग्रतलाञ्चितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥ १६८ ॥
शाखावलम्बने कार्यं स्तबकग्रहणे तथा ।

विश्रामेष्वथ देवानां दाराणाञ्चात्र योगतः ॥ १६९ ॥
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ।
पुनश्च संप्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ॥ १७० ॥
कृत्वाऽवहित्थं स्थानन्तु वामञ्चाधोमुखं करम्[1] ।
नाभिप्रदेशे विन्यस्य सव्यञ्च कटकामुखम् ॥ १७१ ॥
ततः सललितं पादं तालमात्रसमुत्थितम् ।
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् ॥ १७२ ॥
तेनैव समकालञ्च लताख्यं वामकं भुजम् ।
दक्षिणं विनमेत्पार्श्वे न्यसेन्नाभितटे ततः ॥ १७३ ॥
नितम्बे दक्षिणं कृत्वा हस्तञ्चोद्वेष्ट्य वामकम् ।
ततो वामपदं दद्याल्लताहस्तं च दक्षिणम् ॥ १७४ ॥
लीलयोद्वाहितेनाथ शिरसोऽनुगतेन च ।
षट्कलं[2] तु न कर्तव्यं तथाष्टकलमेव च ॥ १७५ ॥
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत्स्त्रियः ।
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ॥ १७६ ॥
स्थवीयसीनामेतासां सम्प्रवक्ष्याम्यहं गतिम् ।
कृत्वाऽपविद्धं स्थानन्तु वामं न्यस्य कटीतटे ॥ १७७ ॥
आद्यश्चारालमुक्तानां कुर्यान्नाभिस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ॥ १७८ ॥
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ।
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ॥ १७९ ॥
क्वचिदुन्नमितैर्गात्रैराविद्धगतिविक्रमा ।
स्थानं कृत्वाऽवहित्थञ्च वामञ्चाधोमुखं भुजम् ॥ १८० ॥
नाभिप्रदेशे विन्यस्य सव्यञ्च कटकामुखम् ।
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ॥ १८१ ॥
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ।
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया ॥ १८२ ॥

---

१ भुजम्–ख । २ श्लोकार्द्धमिदं कपुस्तके नास्ति ।

स्त्रीणां कापुरुषाणाञ्च ततोऽर्धार्धञ्च योजयेत् ।
मध्यमोत्तमनीचानां नृणां यद् गतिचेष्टितम् ॥ १८३ ॥
स्त्रीणां तदेव कर्तव्यं ललितैः पदविक्रमैः ।
बालानामपि कर्तव्या स्वच्छन्दगतिविक्रमा ॥ १८४ ॥
न तस्याः सौष्ठवं कार्यं प्रमाणं न प्रयोक्तृभिः ।
[1]तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसकम् ॥ १८५ ॥
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ।
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके ॥ १८६ ॥
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ।
व्याजेन [2]सेवया वाऽपि तथा भूयश्च वञ्चनात् ॥ १८७ ॥
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि वा ।
धैर्यौदारेण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ॥ १८८ ॥
स्त्री पुमांसं त्वभिनयेत् वेषवाक्यविचेष्टितैः ।
स्त्रीवेषभाषितैर्युक्तः प्रेषिताप्रेषितैस्तथा ॥ १८९ ॥
मृदुमन्दगतिश्चैव पुमान् स्त्रीभावमाचरेत् ।
[3]विजातीयास्तु या नार्यः पुलिन्दशबराङ्गनाः ॥ १९० ॥
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ।
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च ॥ १९१ ॥
स्वस्थानाञ्चैव नारीणां समपादं प्रयोजयेत् ।
उद्धता येऽङ्गहारास्युर्याश्चार्यो मण्डलानि च ॥ १९२ ॥
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिता ।
अथासनविधिः कार्यो नृणां स्त्रीणां विशेषतः ॥ १९३ ॥
नानाभावसमायुक्तस्तथा च शयनाश्रयः ।
विष्कम्भेनाञ्चितौ पादौ त्रिकं किञ्चित्समुन्नतम् ॥ १९४ ॥
हस्ताः कट्यूरुविन्यस्ताः स्वस्थे स्यादुपवेशने ।

---

१ श्लोकोऽयं खपुस्तके नोपलभ्यते । २ क्रीडया—ख ।
३ सार्धश्लोकद्वयं खपुस्तके नास्ति ।

पाद: प्रसारित: किञ्चिदेकश्चैवासनाश्रय: ॥ १९५ ॥
शिर: पार्श्वगतं चैव सचिन्त उपवेशने ।
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिर: ॥ १९६ ॥
सम्प्रनष्टेन्द्रियमना: शोकौत्सुक्योपवेशने ।
प्रसार्य बाहू शिथिलौ तथा चोपाश्रयाश्रित: ॥ १९७ ॥
मोहमूर्च्छामदग्लानिविषादेषूपवेशयेत् ।
सर्वपिण्डीकृताङ्गस्तु संयुक्त: पादजानुभि: ॥ १९८ ॥
व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नर: ।
तथा चोत्कटिकास्थानास्फिक्पार्ष्णीनां समागम: ॥ १९९ ॥
पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमनेऽपि च ।
विष्कम्भितं पुनश्चैव जानु भूमौ निपातयेत् ॥ २०० ॥
प्रियाप्रसादने कार्यं होमादिकरणेषु च ।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥ २०१ ॥
देवाभिगमने चैव रुषितानां प्रसादने ।
शोके चाक्रन्दने तीव्रमृतानां चैव दर्शने ॥ २०२ ॥
त्रासने च कुसत्त्वानां नीचानाञ्चैव याचने ।
होमयज्ञक्रियायाञ्च प्रेष्याणाञ्चैव कारयेत् ॥ २०३ ॥
मुनीनां नियमेष्वेष भवेदासनजो विधि: ।
अथासनविधि: कार्यो विविधो नाटकाश्रय: ॥ २०४ ॥
स्त्रीणाञ्च पुरुषाणाञ्च बाह्यश्चाभ्यन्तरस्तथा ।
आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च ॥ २०५ ॥
देवानां नृपतीनाञ्च दद्यात्सिंहासनं द्विजा: ।
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ॥ २०६ ॥
मुण्डासनञ्च दातव्यं सेनानीयुवराजयो: ।
कु(?मु)ञ्जासनं द्विजातीनां कुमारीणां कुथासनम् ॥ २०७ ॥

---

१ श्लोकोऽयं खपुस्तके न दृश्यते । २ सम्पाते—ख ।
३ पीडावहित्थेषु—ख । ४ श्लोकार्धमिदं खपुस्तके नास्ति ।
५ काष्ठासनं—ख ।

एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः।
स्त्रीणाञ्चाप्यासनविधिं सम्प्रवक्ष्याम्यहं पुनः॥ २०८॥
सिंहासनन्तु राज्ञीनां देवीनाम्मुण्डमासनम्।
पुरोधोऽमात्यपत्नीनां दद्याद्वेत्रासनं तथा॥ २०९॥
भोगिनीनां तथा चैव वस्त्रञ्चर्म कुथापि वा।
[1]ब्राह्मणीनां यतीनाञ्च पट्टासनमथापि च॥ २१०॥
वैश्यानाञ्च प्रदातव्यमासनञ्च मयूरकम्।
शेषाणां प्रमदानान्तु भवेद्दिव्यासनं द्विजाः॥ २११॥
एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः।
तथा स्वगृहवार्तासु च्छन्देनासनमिष्यते॥ २१२॥
नियमस्थमुनीनां च भवेदासनजो विधिः।
लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः॥ २१३॥
दण्डमुण्डवृषीप्रार्थं वेत्रासनमथापि च।
[2]होमे यज्ञक्रियायाञ्च पित्र्यार्थे च प्रयोजयेत्॥ २१४॥
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः।
तेषामासनसत्कारः कर्तव्य इह पार्थिवैः॥ २१५॥
समे समासनं दद्यात् मध्ये मध्यममासनम्।
अतिरिक्तेऽतिरिक्तञ्च हीने भूम्यासनं भवेत्॥ २१६॥
उपाध्यायस्य नृपतेर्गुरूणामग्रतो बुधैः।
भूम्यासनन्तथा कार्यमथवा काष्ठमासनम्॥ २१७॥
नौनागरथयानेषु तथा काष्ठासनेषु च।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः॥ २१८॥
आकुञ्चितं समञ्चैव प्रसारितविवर्तने।
उद्वाहितं समञ्चैव शयने कर्म कीर्त्यते॥ २१९॥
[3]स्वैरमाकुञ्चितैरङ्गैः शल्याविद्धेषु जानुनी।
स्थानमाकुञ्चितं नाम शीतानान्तु प्रयोजयेत्॥ २२०॥

---

१ श्लोकोऽयं खपुस्तके नोपलभ्यते।
२ श्लोकार्धमिदं खपुस्तके नास्ति। ३ श्लोकोऽयं खपुस्तके नास्ति।

उत्तानितमुखं चैव स्रस्तमुत्तरकं तथा ।
समं नाम तु सुप्तस्य स्थानकं संविधीयते ॥ २२१ ॥
एकं भुजमुपाधाय सम्प्रसारितजानुकम् ।
स्थानं प्रसारितं नाम खलु सुप्तस्य कारयेत् ॥ २२२ ॥
अधोमुखस्थितश्चैव विकर्तनमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ २२३ ॥
अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितन्तु विज्ञेयं लीलायां वेशने प्रभोः ॥ २२४ ॥
ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ २२५ ॥
गतिप्रचारस्तु मयोदितोऽयं
नोक्तश्च यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गविधिक्रमस्य
वक्ष्यामि कक्ष्यां प्रविभागयुक्ताम् ॥ २२६ ॥

इति भारतीये नाट्यशास्त्रे गतिप्रचारो नाम त्रयोदशोऽध्यायः ।

## अथ चतुर्दशोऽध्यायः ।

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः कक्ष्यां प्रयोजयेत् ॥ १ ॥
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥ २ ॥
कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य कक्ष्या ह्यन्या विधीयते ॥ ३ ॥
कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसहितो देशो ग्रामोऽटवी तथा ॥ ४ ॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।

१ एते पञ्च श्लोकाः खपुस्तके न दृश्यन्ते ।

वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा ॥ ८ ॥
आलोकश्चैव लोकश्च रसातलमथापि च।
दैत्यानामालयश्चैव गृहाणि च वनानि च ॥ ६ ॥
तथा सप्तसमुद्राश्च वर्षा वै पर्वतास्तथा।
यत्र वार्ता प्रवर्त्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥ ७ ॥
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः।
दूरं वा सन्निकृष्टं वा देशात्तु परिकल्पयेत् ॥ ८ ॥
पूर्वं प्रविष्टा ये रङ्गा ज्ञेयास्तेऽभ्यन्तरे बुधैः।
पश्चात्प्रविष्टा विज्ञेयाः कक्ष्याभागे तु बाह्यतः ॥ ९ ॥
तेषान्तु दर्शनेच्छुर्यः प्रविशेद्रङ्गमण्डलम्।
दक्षिणाभिमुखं सोऽथ कुर्यादात्मनिवेदनम् ॥ १० ॥
निष्क्रामेच्चापि यस्तत्र नरः कार्येण केनचित्।
स निष्क्रमेत्तु तेनैव कृतं येन निवेशनम् ॥ ११ ॥
निष्क्रान्तोऽर्थवशाच्चापि प्रविशेद्यदि तद् गृहम्।
यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रमेत् ॥ १२ ॥
अथवार्थवशाच्चापि तेनैव सह गच्छति।
तथैव प्रविशेत् गेहमेकाकी सहितोऽपि वा ॥ १३ ॥
तयोश्चापि प्रविशतोः काष्ठामन्यां विनिर्दिशेत्।
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते ॥ १४ ॥
समैश्च सहितो गच्छेन्नीचैश्च परिवाहितः।
अथ प्रेक्षणिकाश्चापि विज्ञेया ह्यग्रतो गतौ ॥ १५ ॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः।
मध्या वा सन्निकृष्टा वा तेषामेवं विकल्पयेत् ॥ १६ ॥
नगरे वा वने वापि सागरे पर्वतेऽपि वा।
[1]दिव्यानां गमनं कार्यं द्वीपे वर्षेषु वा पुनः ॥ १७ ॥
आकाशेन विमानेन माययाप्यथ वा पुनः।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥ १८ ॥

---

१ एते चत्वारः श्लोकाः खपुस्तके नोपलभ्यन्ते।

नाटके च्छन्नवेषाणां दिव्यानां भूमिसञ्चरः ।
मानुषैः कारणादेषां यथा भवति दर्शनम् ॥ १९ ॥
भारते[1] त्वथ हैमे वा हरिवर्षे इलावृते ।
रम्ये किंपुरुषे वापि कुरुषूत्तरकेषु वा ॥ २० ॥
दिव्यानां छन्दगमनं वर्षेष्वेतेषु कारयेत् ।
भारते मानुषाणाञ्च गमनं संविधीयते ॥ २१ ॥
गच्छे[2]द्यतिविकृष्टस्तु देशकालवशान्तरः ।
अङ्कच्छेदं न चान्यस्मिन् निर्दिशेत्प्रविशेशके ॥ २२ ॥
अध्वप्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेत् ।
तथालाभे तु कार्यस्य अङ्कच्छेदो विधीयते ॥ २३ ॥
क्षणो मुहूर्तो यामो वा दिवसो वापि नाटके ।
एकाङ्के संविधातव्यो बीजस्यार्थवशानुगः ॥ २४ ॥
अङ्कच्छेदं पुनर्वृत्तं मासं वा वर्षमेव वा ।
नोर्ध्वं वर्षाचु कर्तव्यं कार्यं माससमाश्रयम् ॥ २५ ॥
एवन्तु भारते वर्षे कक्ष्या कार्या प्रयोगतः ।
मानुषाणां गतौ येषां दिव्यानान्तु निबोधत ॥ २६ ॥
हिमवत्पृष्ठसंस्थे तु कैलासे पर्वतोत्तमे ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥ २७ ॥
रक्षःपिशाचभूताश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥ २८ ॥
सर्वे नागाश्च निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशद् ज्ञेया देवगणास्तथा ॥ २९ ॥
नीले तु वैडूर्यमये सिद्धब्रह्मर्षयस्तथा ।
दैत्यानां दानवानाञ्च श्वेतपर्वत इष्यते ॥ ३० ॥
पितरश्चापि विज्ञेया शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासाः प्रकीर्तिताः ॥ ३१ ॥

---

१ अयं श्लोकः खपुस्तके नास्ति ।
२ एते पञ्च श्लोकाः खपुस्तके नोपलभ्यन्ते ।

तेषां कक्ष्याविभागश्च जम्बूद्वीपे भवेदयम् ।
तेषां तु चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ ३२ ॥
परिच्छेदविशेषस्तु तेषां मानुषलोकवत् ।
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ॥ ३३ ॥
तेषान्त्वनिमिषत्वं यत्तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव दृष्टावेव प्रतिष्ठिताः ॥ ३४ ॥
दृष्ट्या हि सूचितो भावः पुनरङ्गैर्विभाव्यते ।
एवं[1] कक्ष्याविभागस्तु मया प्रोक्ता द्विजोत्तमाः ॥ ३५ ॥
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनान्तु लक्षणम् ।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः ॥
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्र[2]मागधी ॥ ३६ ॥

अत्राह—प्रवृत्तिरिति कस्मादिति । उच्यते—पृथिव्यां नानादेशवेषभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः । वृत्तिश्च निवेदने । अत्राह—यथा पृथिव्यां बहवो देशाः सन्ति, कथमासाञ्चतुर्विधत्वमुपपन्नं, समानलक्षणश्चासां प्रयोग उच्यते, सत्यमेतत् । समानलक्षणः प्रयोगः किन्तु नानादेशवेषभाषाचारो लोक इति कृत्वालोकानुमतेऽनुवृत्तिसंश्रितस्य नाट्यस्य मया चतुर्विधत्वमभिहितं भारती सात्त्वती कैशिक्यारभटी चेति । वृत्तिसंश्रितेष्वमीषु प्रयोगेषु अभिरता देशाः यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चोत्पादितः । तत्र दाक्षिणात्यास्तावत् बहुनृत्तगीतवाद्या कैशिकीप्रायाः चतुरमधुरललिताङ्गाभिनयाश्च । तद्यथा—

महेन्द्रो मलयः सह्यो मेख[3]कः कालपञ्जरः[4] ।
एतेषु ये श्रिता देशाः स ज्ञेयो दक्षिणापथः ॥ ३७ ॥
कौसला तोशलाश्चैव कलिङ्गा यवनाः[5] खसाः ।
द्रमिडान्ध्रमहाराष्ट्रा वैष्णा वै वानवासिजाः ॥ ३८ ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशाः संश्रितास्तेषु दाक्षिणात्यास्तु नित्यशः ॥ ३९ ॥

---

१ श्लोकोऽयं खपुस्तके नास्ति । २ चैव—क ।
३ ०लकः—ख । ४ पलविञ्जरः—ख । ५ एव मोशलः—ख ।

आवन्तिका वैदिशिका सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा आवर्ताः सार्बुदेशकाः ॥ ४० ॥
दाशार्णास्त्रैपुराश्चैव तथा वै वैर्तिकावताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ४१ ॥
सात्त्वतीं कैशिकीञ्चैव वृत्तिमेषा समाश्रिता ।
भवेत् प्रयोगो नान्यत्र स च कार्यः प्रयोक्तृभिः ॥ ४२ ॥
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवौड्रमागधाः ।
पौण्ड्रा नेपलकाश्चैव अन्तिर्गिरिबहिर्दुराः ॥ ४३ ॥
तथा प्लवङ्गमाहेन्द्रमलदामलवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवामार्गवस्तथा ॥ ४४ ॥
प्राक्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
प्रांशुप्रवृत्तयश्चैव युज्यन्ती चौड्रमागधी ॥ ४५ ॥
अन्येऽपि देशाः प्राच्यां ये पुराणे सम्प्रकीर्तिताः ।
तेषु प्रयुज्यते त्वेषा प्रवृत्तिश्चौड्रमागधी ॥ ४६ ॥
पाञ्चाला सौरसेनाश्च काश्मीरा हास्तिनापुराः ।
बाह्लिका शल्यकाश्चैव मद्रकौशीनरास्तथा ॥ ४७ ॥
हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः ॥ ४८ ॥
पाञ्चाला मध्यमायान्तु सात्त्वत्यारभटीश्रिताः ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविक्रमः ॥ ४९ ॥
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।
प्रदक्षिणप्रदेशा च तथा चाप्यप्रदक्षिणा ॥ ५० ॥
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रदेशास्तु पाञ्चाली चौड्रमागधी ॥ ५१ ॥
आवन्त्यां दाक्षिणात्यायां योज्यं द्वारमथोत्तरम् ।
पाञ्चाल्यामौड्रमागध्यां योज्यं द्वारन्तु दक्षिणम् ॥ ५२ ॥

---

१ मार्तिका मता—ख । २ श्लोकार्धमिदं खपुस्तके न दृश्यते ।
३ गिरः—ख । ४ श्लोकोऽयं खपुस्तके नास्ति ।

एकभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
वर्षैश्च[1] देशश्चाप्यर्थयुक्तिं कालमवेक्ष्य च ॥ ५३ ॥
येषु देशेषु या पूर्वं प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ५४ ॥
एकीभूताः[2] पुनस्त्वेता गानकादौ भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्माचरेत् सदा ॥ ५५ ॥
सार्थे बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् ।
येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा ॥ ५६ ॥
प्रयोगो द्विविधश्चैव विज्ञेयो नाट्यकाश्रयः ।
सुकुमारस्तथाऽविद्धो नाट्ययुक्तिसमाश्रयः ॥ ५७ ॥
यत्त्वाविद्धाङ्गहारन्तच्छेद्यभेद्याहवात्मकम् ।
मायेन्द्रजालबहुलं पुंसो नेपथ्यसंयुतम् ॥ ५८ ॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ॥ ५९ ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ६० ॥
एषः प्रयोगः कर्तव्यो दैत्यदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥ ६१ ॥
नाटकं सप्रकरणं भाणो वीथ्यङ्कनाटिके ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि तु ॥ ६२ ॥
यतो मुखं भवेद्भाण्डं द्वारनैपथ्यकस्य तु ।
सा मन्तव्या तु दिक् पूर्वा नाट्ययोगेषु नित्यशः ॥ ६३ ॥
अथ[3] बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गः कदाचिद्भर्तुराज्ञया ॥ ६४ ॥
पृष्ठे कृत्वाऽस्य कुतपं नाट्यं युङ्क्ते यतो मुखं भरतः ।
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥ ६५ ॥

---

१ पार्षदं—ख । २ श्लोकद्वयमेतत् खपुस्तके नास्ति ।
३ एते पञ्च श्लोकाः खपुस्तके नोपलभ्यन्ते ।

द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि ।
नाट्यप्रयोगेन खलु प्रवेशे प्राच्यां प्रतीच्यां च दिशि प्रवेशः ॥ ६६ ॥
विधानमुत्क्रम्य यथात्र रङ्गे लीना (?) प्रमाणानि दिशः प्रयोगम् ।
द्वारन्तु यस्मात्समृदङ्गभाण्डं प्राचीदिशं तां मनसाऽध्यवस्येत् ॥ ६७ ॥
वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतञ्च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ ६८ ॥
धर्मी या द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः ।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥ ६९ ॥
स्वभावभावोपगतं शुद्धं त्वविकृतं तथा ।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् ॥ ७० ॥
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ ७१ ॥
अतिसत्त्वक्रियोपेतमतिसत्त्वातिभाषितम् ।
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ॥ ७२ ॥
स्वरालङ्कारसंयुक्तमस्वर्भूपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ ७३ ॥
लोकप्रसिद्धं द्रव्यन्तु यदा नाट्ये प्रयुज्यते ।
वृत्तिमत् साभिलाषञ्च नाट्यधर्मी तु सा स्मृता ॥ ७४ ॥
आसन्नोक्तन्तु यद्वाक्यं[1] न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते वाक्यं नाट्यधर्मी तु सा स्मृता ॥ ७५ ॥
शैल[2]यानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥ ७६ ॥
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते यच्च नाट्यधर्मी तु सा स्मृता ॥ ७७ ॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी तु सा स्मृता ॥ ७८ ॥

---

१ वाक्य-ख । २ अयं श्लोकः क-पुस्तके न दृश्यते ।

यश्च कक्ष्याविभागोऽयं नानाविधिसमाश्रितः ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥ ७९ ॥
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् ।
न ह्यङ्गाभिनयात्किञ्चिद्दृते नाट्यं प्रवर्तते ॥ ८० ॥
सर्वस्य सहजो भावः सर्वो ह्यभिनयार्थजः ।
अङ्गालङ्कारचेष्टाभिर्नाट्यधर्मी प्रकीर्तिता ॥ ८१ ॥
एवं कक्ष्याविभागास्तु धर्मयुक्ताः प्रकीर्तिताः ।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च तत्त्वतः ॥ ८२ ॥
उक्तो मयाऽङ्गाभिनयो यथावत् भावः[2] कृतो यश्च कृताङ्गहारैः ।
पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥८३॥

इति भारतीयनाट्यशास्त्रे प्रवृत्तिधर्मव्यञ्जको नाम चतुर्दशोऽध्यायः ।
अङ्गाभिनयः समाप्तः ।

# *अथ पञ्चदशोऽध्यायः ।

यो वागभिनयः प्रोक्तो मया पूर्वं द्विजोत्तमाः ।
लक्षणं तस्य वक्ष्यामि स्वरव्यञ्जनसम्भवम् ॥ १ ॥
वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता ।
अङ्गनेपथ्यतत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥ २ ॥
वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च ।
तस्माद्वाचः परं नास्ति वाक् हि सर्वस्य कारणम् ॥ ३ ॥
नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।
सन्धिविभक्तिषु युक्तो विज्ञेयो वाचिकाभिनयः ॥ ४ ॥
द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा ।
तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः ॥ ५ ॥
व्यञ्जनानि स्वराश्चैव सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातस्तद्धितास्तथा ॥ ६ ॥

---

१ सार्धोऽयं श्लोकः कपुस्तके नास्ति । २ शाखा-क ।
* अस्याध्यायस्यादितः अष्टोत्तरशतं श्लोकाः कपुस्तक एवोपलभ्यन्ते।

एतैरङ्गविधानैस्तु नानाधातुसमाश्रयम् ।
विज्ञेयं संस्कृतं पाठ्यं तद्वक्ष्यामि समासतः ॥ ७ ॥
अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश ।
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः ॥ ८ ॥
वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ ।
अघोषा इति ये त्वन्ये सघोषा संप्रकीर्तिता ॥ ९ ॥

तत्र स्वराश्चतुर्दश–अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेयाः ॥

व्यञ्जनानि यथा–क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गः

एते घोषाघोषाः कण्ठ्योष्ठदन्तजिव्ह्यानुनासिक्यः ।
ऊष्माणस्तालव्यत्रिसर्जनीयाश्च बोद्धव्याः ॥ १० ॥
गघङ जझञ डढण दधन बभम तथैव यरलवहा घोषाः
कख चछ टठ तथ पफ इति वर्गेष्वघोषाः ॥ ११ ॥
कण्ठस्तालुस्थाना मतास्तु चछजझञाः ।
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्थाः ॥ १२ ॥
पफबभमास्त्वोष्ठ्याः स्युः दन्त्या ऌलसा अहौ च कण्ठस्थौ ।
तालव्या इयशा स्युर्ऋरषा मूर्धस्थिताः ज्ञेयाः ॥ १३ ॥
ओऔ कण्ठोष्ठस्थानौ एऐकारौ च कण्ठतालव्यौ ।
कण्ठ्यो विसर्जनीयो जिव्हामूलोद्भवः कपयोः ॥ १४ ॥
पफयोरोष्ठं स्थानं भद्रेन्द्रकारस्वराविद्धः ।
स्पृष्टाः काद्या मान्ता शषसहकारास्तथा विवृताः ॥ १५ ॥
अन्तस्थाः संवृताः ङञणनमा नासिकोद्भवा ज्ञेयाः ।
ऊष्माणश्च शषसहाः यरलववर्णास्तथैव चान्तःस्थाः ॥ १६ ॥
जिह्वामूलीयः कः प उपध्मानीयसञ्ज्ञया ज्ञेयः ।
कचटतपा स्युः खछठथफा स्युः सदा कण्ठ्याः ॥ १७ ॥
कण्ठ्येन रसान् विद्यात् घझढधभान् पाठ्ययोगे तु ।
वेद्यो विसर्जनीयो विद्यास्थानस्थितो वर्णः ॥ १८ ॥

एते व्यञ्जनवर्णाः समासतः सञ्ज्ञया मया कथिताः ।
शब्दविषयप्रयोगे स्वरांस्तु भूयः प्रवक्ष्यामि ॥ १९ ॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥ २० ॥
एभिर्व्यञ्जनयुक्तैर्नामाख्यातोपसर्गनिपातैः ।
तद्धितसन्धिविभक्तिभिराधिष्ठितः शब्द इत्युक्तः ॥ २१ ॥
पूर्वाचार्यैरुक्तं शब्दानां लक्षणन्तु विस्तरशः ।
पुनरेव संहृतार्थं लक्षणतः संप्रवक्ष्यामि ॥ २२ ॥
तत्प्राहुः सप्तविधं पदकारकसंयुतं प्रथितसाध्यम् ।
निर्देशसम्प्रदानापादानप्रभृतिसञ्ज्ञाभिः ॥ २३ ॥
संप्रत्यतीतकालप्रयोजितः क्रियादिसंयोगः ।
प्रथितः साध्ये वचनानां यतियुक्तं सदृशसंयोजनविभक्तम् ॥ २४ ॥
स्वाद्यत्याधिकारगुणैरर्थविशेषैर्विभूषितन्यासा ।
प्रातिपदिकार्थलिङ्गयुक्तं पञ्चविधामिदं ज्ञेयम् ॥ २५ ॥
आख्यातं पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम् ।
प्रातिपदिकार्थयुक्तान्धात्वर्थानुत्सृजन्ति ये स्वार्थैः ॥
उपसर्गाद्युपदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन् ॥ २६ ॥
प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु ॥ २७ ॥
प्रत्ययविभागजनिताः प्रकर्षसंयोगसत्ववचनैश्च ।
यस्मात्पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥ २८ ॥
लोपप्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैश्च ।
तस्मात्पूरयतेऽर्थास्ततो यत्तस्तद्धितस्तस्मात् ॥ २९ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्यापदानां वा ।
विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ताः प्रोक्ताः ॥ ३० ॥
वर्णक्रमसम्बन्धः पदैकयोगोऽन्यवर्णयोगाच्च ।
सन्धीयते च यस्मात्तस्मात् सन्धिः समुद्दिष्टः ॥ ३१ ॥
लुप्तविभक्तिर्नाम्ना एकार्था संहरन्ति संक्षेपात् ।

तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि ॥ ३२ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनात्वसंयुक्तैः ।
पदबन्धाः कर्तव्या वृत्तनिबन्धास्तु चूर्णा वा ॥ ३३ ॥
विभज्यैक्यं पदं ज्ञेयं निबन्धं चूर्णमेव च ।
तत्र चूर्णपदस्येह बहिर्बोधत लक्षणम् ॥ ३४ ॥
अनिबद्धं पदवृन्दं तथा चानियताक्षरम् ।
अथोपेक्षाक्षरयुतं ज्ञेयं चूर्णपदं बुधैः ॥ ३५ ॥
निबद्धाक्षरसंयुक्तं पदच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियताक्षरम् ॥ ३६ ॥
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्वृत्तं छन्दो वृत्ताभिधानवत् ॥ ३७ ॥
षड्विंशतिः स्मृतानीह पादे छन्दांसि संख्यया ।
समञ्चार्धसमञ्चैव तथा विषममेव च ॥ ३८ ॥
छन्दोयुक्तं समासेन निबद्धं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषातनुस्स्मृता ॥ ३९ ॥
छन्दोहीनो न शब्दोऽस्ति न च्छन्दश्शब्दवर्जितः ।
तस्मात्तूभयसंयुक्ते नाट्यस्योद्योतके स्मृते ॥ ४० ॥
एकाक्षरं भवेदुक्तं अत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ४१ ॥
सुप्रतिष्ठा भवेत् पञ्च गायत्री षट् भवेदिह ।
सप्ताक्षरा भवेदुष्णिक् अष्टौ चानुष्टुबुच्यते ॥ ४२ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ॥ ४३ ॥
त्रयोदशाऽतिजगती शक्करी तु चतुर्दश ।
अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्तिता ॥ ४४ ॥
अत्यष्टिः स्यात्सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशातिधृतिः कृतिर्विंशतिरेव च ॥ ४५ ॥
प्रकृतिश्चैकाविंशत्या द्वाविंशत्याकृतिस्तथा ।

विकृतिश्च त्रयोविंशा चतुर्विंशा च संकृतिः ॥ ४६ ॥
पञ्चविंशत्यतिकृतिः षड्विंशत्युत्कृतिर्भवेत् ।
अतोधिकाक्षरं यत्तु मालावृत्तं तदिष्यते ॥ ४७ ॥
संपद्विरामपादश्च दैवतस्थानमक्षरम ।
वर्णस्वरोऽधिकं वृत्तमिति छन्दोगतो विधिः ॥ ४८ ॥
नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः ।
विधानाच्छन्दसामेषां संपदित्यभिसंज्ञिता ॥ ४९ ॥
यत्रार्थस्य समाप्तिःस्यात् स विराम इति स्मृतः ।
पादश्च पद्यते धातोश्चतुर्भाग इति स्मृतः ॥ ५० ॥
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
शरीराश्रयसंभूतं जिव्हाश्रयमथापि च ॥ ५१ ॥
शारीरमन्त्रसंभूतं छन्दो गायत्रिसंज्ञितम् ।
कष्टे(?) मध्यं दिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥ ५२ ॥
तृतीयसवनञ्चापि शीर्षं च जागतं हि यत् ।
ह्रस्वदीर्घस्तुतैश्चैव त्रिविधश्चाक्षरं स्मृतम् ॥ ५३ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारणश्चैव मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥ ५४ ॥
ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिकालकृतश्चैव तथैवार्धकृतो भवेत् ॥ ५५ ॥
वृत्तमर्धवृतञ्चैव विषमं सममेव च ।
छन्दसी यस्य पादः स्याद्धीनो वाऽधिक एव वा ॥ ५६ ॥
वृत्तं निवृदिति प्रोक्तं गुरुं कैश्चित् द्विजोत्तमाः ।
अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ॥ ५७ ॥
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ।
छन्दसां तु भेवेदेषां भेदोऽनेकविधः पृथक् ॥ ५८ ॥
असंख्यपरिमाणानि वृत्तान्याहुरथो बुधाः ।
गायत्रीप्रभृतिस्त्वेषां प्रमाणं संविधीयते ॥ ५९ ॥
प्रयोगजानि सर्वाणि प्रायस्तानि भवन्ति हि ।

वृत्तानां हि चतुष्षष्टिर्गायत्री परिकीर्तिता ॥ ६० ॥
शतं विंशतिरष्टौ च वृत्तान्युष्णिगथोच्यते ।
षट्पञ्चाशच्छतं चैव वृत्तानामप्यनुष्टुभः ॥ ६१ ॥
शतानि पञ्चवृत्तानां बृहत्यां द्वादशैव च ।
पङ्क्तः सहस्रं वृत्तानां चतुर्विंशतिरेव च ॥ ६२ ॥
त्रिष्टुभो त्रिसहस्रे च चत्वारिंशत्तथाष्ट च ।
सहस्राण्यपि चत्वारि नवती च षडुत्तरा ॥ ६३ ॥
जगत्याः समपादानां वृत्तानामिह सर्वशः ।
शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः ॥ ६४ ॥
जगत्यामतिपूर्वायां वृत्तानां परिमाणतः ।
शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ॥ ६५ ॥
वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया ।
द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च ॥ ६६ ॥
अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्वरीम् ।
पञ्च षष्टिसहस्राणि सहस्रार्धञ्च संख्यया ॥ ६७ ॥
षट्त्रिंशच्चैव वृत्तानां अष्टौ निगदितानि च ।
एकत्रिंशत्सहस्राणि वृत्तानाञ्च द्विसप्ततिः ॥ ६८ ॥
तथा शतसहस्रञ्च छन्दस्यत्यष्टिसंज्ञिते ।
धृत्यामपि च पिण्डेन वृत्तमाकलितं मया ॥ ६९ ॥
तथा शतसहस्रे द्वे शतमेकं तथैव च ।
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ॥ ७० ॥
चत्वारि चैव वृत्तानि शतसंख्यानि यानि तु ।
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च ॥ ७१ ॥
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ।
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च ॥ ७२ ॥
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ।
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ॥ ७३ ॥
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः ।

तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ॥ ७४ ॥
सप्त वै गदितं ह्यत्र नवतिश्चैव संख्यया ।
सहस्राणि शतञ्चैव द्वौ पञ्चाशत्तदन्तरम् ॥ ७५ ॥
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ।
चत्वारिंशत्तथैकञ्च लक्षाणामथ संख्यया ॥ ७६ ॥
विज्ञेयाष्टसहस्राणां नवतिश्च षडुत्तरा ।
शतत्रयं समाख्यातं संकृत्या परिमाणतः ॥ ७७ ॥
कोटित्रयञ्चाभिकृत्यां पञ्चविंशाद्भिरन्वितः ।
पञ्चाशद्भिः सहस्रैश्च चतुर्भिराधिकैस्तथा ॥ ७८ ॥
चतुष्टयं शतानाञ्च द्वात्रिंशद्भिः समन्वितः ।
षट् कोटयस्तथोत्कृत्यां लक्षाणामेकसप्ततिः ॥ ७९ ॥
चतुष्पष्ठिशतान्यष्टौ सहस्राण्यष्ट चैव च ।
सर्वेषां छन्दसां पिण्डं कोटयोऽत्र त्रयोदश ॥ ८० ॥
शतानि सप्त सप्तैव सहस्राणि दशैव च ।
तथा शतसहस्राणां द्विचत्वारिंशदत्र हि ॥ ८१ ॥
षड्विंशतिश्च वृत्तानामित्थं चान्यत् समुच्यते ।
सर्वेषां छन्दसामेवं वृत्तांशं कथितं मया ॥ ८२ ॥
एतेषान्तु पुनर्ज्ञेयं त्रिकैर्वृत्तप्रवर्त्तनम् ।
एकं वा विंशतिर्वापि सहस्रं कोटिमेव च ॥ ८३ ॥
सर्वेषां छन्दसामेषां वृत्तानां वा द्विजोत्तमाः ।
ज्ञेयाश्चाष्टौ त्रिकास्तत्र स्वसंज्ञाभिः पृथक् पृथक् ॥ ८४ ॥
त्रीण्यक्षराणि विज्ञेयस्त्रिकोशः परिकल्पितः ।
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥ ८५ ॥
गुरुपूर्वो भकारः स्यान्मकारस्तु गुरुत्रिकम् ।
जकारो गुरुमध्यस्थः सकारोऽन्तगुरुस्तथा ॥ ८६ ॥
लघुमध्यस्थितो रेफस्तकारोऽन्तलघुः परः ।
लघुपूर्वो यकारस्तु नकारस्तु लघुत्रयम् ॥ ८७ ॥
एते ह्यष्टौ त्रिका प्राज्ञैर्विज्ञेया ब्रह्मसम्भवाः ।

लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य च ॥ ८८ ॥
अस्वराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणे ।
गुर्वेकं गिति विज्ञेयं तथा लघु लिति स्मृतम् ॥ ८९ ॥
नियतो पदविच्छेदो यतिरित्यभिधीयते ।
गुरुर्दीर्घं प्लुतश्चैव संयोगपरमेव च ॥ ९० ॥
सानुस्वारविसर्गश्च तथान्यच्च लघु क्वचित् ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ॥ ९१ ॥
दिव्यो दिव्यतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टप् च बृहती पङ्क्तिरेव च ॥ ९२ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्करी चातिशक्करी ॥ ९३ ॥
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणा ।
कृतिश्च प्रकृतिश्चैव व्याकृतिर्विकृतिस्तथा ॥ ९४ ॥
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा ।
गायत्री द्वौ त्रिकौ ज्ञेयौ उष्णिक् चैकाधिकाक्षरा ॥ ९५ ॥
अनुष्टुप् द्व्यधिका चैव बृहती च त्रिकास्त्रयः ।
एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ॥ ९६ ॥
चतुस्त्रिका तु जगती सैकातिजगती पुनः ।
शक्करी द्व्यधिका चैव त्रिकाः पञ्चातिशक्करी ॥ ९७ ॥
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते ।
षट् त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ॥ ९८ ॥
कृतिश्च द्व्यधिका प्रोक्ता प्रकृतिः सप्त वै त्रिकाः ।
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ॥ ९९ ॥
अष्ट त्रिकाः संकृतिः स्यात् सैका चाभिकृतिः पुनः ।
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणसारतः ॥ १०० ॥
अत ऊर्ध्वं तु पादानां मालावृत्ताश्रिता गणाः ।
एवं तु छन्दसामेषां प्रस्तारविधिसंश्रयम् ॥ १०१ ॥
लक्षणं सम्प्रवक्ष्यामि नष्टोदिष्टं तथैव च ।

प्रस्ताराक्षरनिर्दिष्टसमावुक्तस्तथैव च ॥ १०२ ॥
द्विकौ ग्लाविति वर्णोक्तौ न्द्रोचेत्यपि(?) मातृका ।
गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ॥ १०३ ॥
अग्रतस्तु समो देया गुरवः पृष्ठतस्तथा ।
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ॥ १०४ ॥
वृत्तन्तु सर्वछन्दस्सु प्रस्तारविधिरेव तु ।
गुर्वधस्ताल्लघु न्यस्य तथा द्विद्वि यथोदितम् ॥ १०५ ॥
न्यस्येत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्याविनिर्दिष्टो गणैर्मात्राविकल्पितः ॥ १०६ ॥
शिष्टो ग्लाविति विज्ञेयः पृथक्कक्ष्याविभागतः ।
मात्रागणो गुरुश्चैव लघुनीलविलक्षितैः ॥ १०७ ॥
आर्याणां च सकृन्मात्राप्रस्तारे परिकल्पितः ।
प्राकृतः प्रकृतीनान्तु पञ्चमात्रो गणः स्मृतः ॥ १०८ ॥
[1]वैतालीयं पुरस्कृत्य षण्मात्राद्यास्तथैव च ।
त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥ १०९ ॥
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
अन्या द्विगुणिताद्रूपात् द्विद्विरेवं गुरोर्भवेत् ॥ ११० ॥
द्विगुणञ्च लघोः कृत्वा संख्यां पिण्डेन योजयेत् ।
आद्यं सर्वगुरु ज्ञेयं वृत्तन्तु समसंश्रितम् ॥ १११ ॥
[2]कोशे तु सर्वलघ्वन्त्यमिश्रैः शेषाणि सर्वतः ।
वृत्तानान्तु समानानां संख्यां संयोज्य तावतीम् ॥ ११२ ॥
राश्यूनामर्धविषमं समासादिति निर्दिशेत् ।
एकाद्याञ्च तथा संख्यां छन्दसो विनिवेश्य च ॥ ११३ ॥
यावत् पूर्वन्तु पूर्वेण पूरयेदुत्तरस्तथा ।

---

१ अयं श्लोकः खपुस्तके त्वेवं पठ्यते—
यं पुरस्कृत्य षण्मात्राः स्युस्तथैव च त्र्यक्षराः ।
उक्ताद्यास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥
२ कौशं—ख ।

एवं कुर्यात्तु सर्वेषां पूर्वं[1] पूर्वस्य पूरणम् ॥ ११४ ॥
क्रमान्नैधनमेकैकं प्रतिलोमं विसर्जयेत् ।
सर्वेषां छन्दसां वक्ष्ये लघ्वक्षरविनिश्चयम् ॥ ११५ ॥
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा ।
वृत्ताङ्गपरिमाणन्तु छित्वाऽर्धेन यथाक्रमम् ॥ ११६ ॥
न्यसेल्लघु तथा सैकं छित्वाऽर्धेन गुरुं न्यसेत् ।
एवं विन्यस्य वृत्तानां नष्टोद्दिष्टविभागतः ॥ ११७ ॥
गुरुलघ्वक्षराणीह सर्वछन्दस्सु दर्शयेत् ।
इति छन्दांसि जातानि मयोक्तानि द्विजोत्तमाः ॥ ११८ ॥
ध्रुवान्येतेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ॥ ११९ ॥

इति भारतीये नाट्यशास्त्रे वाचिकाभिनयच्छन्दोविभागो नाम पञ्चदशोऽध्यायः ।

---

# अथ षोडशाध्यायप्रारम्भः ।

इतिच्छन्दांसि यानीह मयोक्तानि द्विजोत्तमाः ।
वृचान्येतेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ॥ १ ॥[2]

आद्ये पुनरन्त्ये द्वे[3] द्वे गुरुणी चेत् ।
वृत्तं तनुमध्या गायत्रसनुत्था ॥ २ ॥

यथा—

सन्त्यक्तभूषणा भ्रष्टाञ्जननेत्रा ।
हस्तार्पितवक्त्रा किञ्चित्तनुमध्या ॥ ३ ॥

लघुगण आद्यो भवति चतुष्के ।
गुरुयुगमन्ते मकरकशीर्षा ॥ ४ ॥

यथा—

स्वयमुपयान्तं भजसि न कान्तम् ।
भैयकरिकिञ्चं[4] ( ? )मकरकशीर्षा ॥ ५ ॥

---

१ र्व्द—ख । २ श्लोकोऽयं कपुस्तके नास्ति । ३ पादे—क ।
४ भवकरिकित्वं—ख ।

षडक्षरकृते पादे लघु यत्र द्वितीयकम्[1] ।
शेषाणि तु गुरूणि स्युः मालिनी सा मता यथा ॥ ६ ॥
स्नानगन्धस्रग्भिर्वस्त्रभूषायोगैः ।
व्यक्तमेवैषा त्वं मालिनी प्रख्याता ॥ ७ ॥
द्वितीयं[2] च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे सा ज्ञेया तूद्धता यथा ॥ ८ ॥
दन्तघातकृताङ्कं[3] व्याकुलालकशोभम् ।
शंसतीव तवास्यं निर्भरं[4] रतयुद्धम् ॥ ९ ॥
आदौ[5] द्वे निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया सा तु भ्रमरमालिका ॥ १० ॥

यथा--

नानाकुसमचित्रे प्राप्ते सुरभिमासे ।
एषा भ्रमति पुष्पे मत्ता भ्रमरमाला ॥ ११ ॥
आद्यं[6] तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलीलेति सा स्मृता ॥ १२ ॥

---

१ इदं लक्षणं कपुस्तके त्वेवं लक्ष्यतेः—
एकमात्रं षट्के स्यात् द्वितीयं पादे ।
ख्यातरूपा वृत्ते मालिनी सा नाम्ना ॥

२ इदं लक्षणं कपुस्तके त्वेवं दृश्यते--
द्वौ त्रिकौ यदि पादे अक्षरश्च गातारः ।
उष्णिगुदिते पादे उद्धता खलु नाम्ना ॥

३ कुन्तकृताङ्कं--ख । ४ युद्धमुद्धतवेशम्--ख ।

५ लक्षणमिदं कपुस्तके त्वेवं दृश्यते--
पादे यदि गणौ त्सौ सम्यग्विरचितार्थौ ।
अन्ते यदि गकारः स्यात् सा भ्रमरमाला

६ इदं लक्षणं कपुस्तके त्वेवं लक्ष्यते—
जौ तु यस्य गौ च पादे संस्थितौ समौ कृतौ चेत् ।
तामनुष्टुबाश्रयस्थां ज्ञापयन्ति सिहलीलाख्याम् ॥

यथा—

[१]यत्त्वया ह्यनेकभावाचेष्टितं रतं सुगात्रि ।
तन्मनो मम प्रविष्टं वृत्तमत्र सिंहलीलम् ॥ १३ ॥

[२]चतुर्थं च द्वितीयं च षष्ठमष्टममेव च ।
गुरूण्यष्टाक्षरे पादे वदन्ति मत्तचेष्टितम् ॥ १४ ॥

यथा—

मदावघूर्णितेक्षणं विलम्बितालकाकुलम् ।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥ १५ ॥

[३]अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन् सा नाम्ना विद्युल्लेखेति संज्ञिता ॥ १६ ॥

यथा—

सान्द्राम्भोभिर्नानाम्भोदैः श्यामाकारैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युल्ले[४]खा ॥ १७ ॥

[५]नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि तु ।
गुरूणि यस्यां सा नाम्ना भवेन्मधुकरी यथा ॥ १८ ॥

कुसुमितमपश्यन्ती विविधतरुगणैच्छन्नम् ।
[६]नवनलिनसुगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥ १९ ॥

---

१ अस्योदाहरणं खपुस्तके भिन्नमेव दृश्यते—
वैरिवारणान्तकारिन् वीर तावकं स्तुवन्ति ।
जन्यकानने करालं वृत्तमत्र सिंहलीलम् ॥

२ कपुस्तके मत्तचेष्टितलक्षणम्—
पादौ जरौ सलौ गकार एव च स्थितम् ।
अनुष्टुबुद्भवं तथा वदन्ति मत्तचेष्टितम् ॥

३ इदं लक्षणं कपुस्तके त्वेवं दृश्यते—
मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च ।
सा चानुष्टुच्छन्दस्युक्ता नित्या सद्भिर्विद्युन्माला ॥

४ ०न्माला- क ।

५ कपुस्तके त्विदं लक्षणमेवं दृश्यते-
षडिह लघूनि स्युर्निधनगतमकारश्चेत्
बुधजनसंस्था बृहती भवति मधुकरी नाम्ना

६ वनम०क ।

[१]दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिनी ॥ २० ॥

यथा--
अस्मिंस्ते भ्रमरनिभे कान्ते
नानारत्नरचितभूषाढ्ये ।
शोभामावहति शुभा मूर्ध्नि
प्रोत्फुल्ला कुवलयमालेयम् ॥ २१ ॥

[२]द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पाठे यत्र सा शिखिसारिणी ॥ २२ ॥

यथा--
नैव तेऽस्ति सङ्गमो मनुष्यै-
र्नास्ति कामभोगचिह्नमन्यत् ।
गर्भिणीव दृश्यसे ह्यनार्ये किं
मयूरसारिणी त्वमेव ॥ २३ ॥

[३]प्रथमं च चतुर्थं च सप्तमं दशमं गुरु
अन्त्यं च त्रैष्टुभे पादे यत्र स्याद् दोधकं तु तत् ॥ २४ ॥

---

१ लक्षणमिदं खपुस्तके त्वेवं दृश्यते—
त्रीण्यादौ यदि हि गुरूणि स्युः
चत्वारो यदि लघवो मध्ये ।
पङ्क्तावन्तर्गतमकारः स्याद्
विज्ञेया कुवलयमाला सा ॥

२ कपुस्तकस्थं लक्षणं यथा—
जौं त्रिकौ तु पादगौ च यस्या
गौं च संश्रितौ तथा समस्तौ ।
पङ्क्तियोगसुप्रतिष्ठिताङ्गा
सा मयूरसारिणीति नाम्ना ॥

३ कपुस्तकस्थं लक्षणं यथा—
भौ तु भगौ गिति यस्य गुणाः सा
स्याच्चयतिस्त्रिचतुर्भिरथोक्ता ।
त्रैष्टुभमेव च यत्खलु नाम्ना
दोधकवृत्तमिति प्रवदन्ति ॥

यथा—

प्रस्खलिताग्रपदप्रविचारं
मत्तविघूर्णितगात्रविनामम् ।
पश्य विलासिनि कुञ्जरमेनं
दोधकवृत्तगतिं प्रकरोति ॥ २५ ॥

आदौ द्वे पञ्चमञ्चैवाप्यष्टमं नैधनं तथा ।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥ २६ ॥

एषोऽम्बुदनिःस्वनतुल्यरवः
क्षणस्खलमानविडम्बगतिः ।
श्रुत्वा घनगर्जितमद्रितटे
वृक्षान् प्रति मोटयति द्विरदः ॥ २७ ॥

नवमं सप्तमं षष्ठं तृतीयञ्च लघून्यथ ।
यत्रैकादशके पादे इन्द्रवज्रेति सा यथा ॥ २८ ॥

चन्द्रं निरीक्ष्यादुरितस्वभावा
दुःखैकसाध्या कठिनैकभावा
सर्वास्ववस्थासु च कामतन्त्रे
योग्यासि किंवा बहुनेन्द्रवज्रे ॥ २९ ॥

एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यथा ।
उपेन्द्रवज्रा विज्ञेया लघ्वादाविह केवलम् ॥ ३० ॥

यथा—

श्रिया च वर्णेन विशेषणेन
स्मितेन कान्त्या सुकुमारभावात् ।
अमी गुणा रूपगणानुरूपा
भवन्ति ते किं त्वमुपेन्द्रवज्रा ॥ ३१ ॥

आद्यं तृतीयमन्त्यञ्च सप्तमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥ ३२ ॥

यथा—

किन्त्वया सुभट[1] दूरवर्जितं
नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥ ३३ ॥

आद्यं तृतीयमन्त्यञ्च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा ॥ ३४ ॥

अद्य मे स फलमायतनेत्रे
जीवितं मदनसंश्रित[2]भावम् ।
आगतासि सदनं मम यस्मात्
स्वागतं तव वरोरु निषीद ॥ ३५ ॥

षष्ठञ्च नवमं चैव लघु स्यात् त्रैष्टुभे यदि ।
चतुर्भिराद्यैर्विच्छेदः सा ज्ञेया शालिनी यथा ॥ ३६ ॥

शीलभ्रष्टे निर्गुणे या प्रकोपा
लोके धैर्यादप्रियं न ब्रवीषि ।
आर्ये शीलं साध्वि हे तेऽनुवृत्तं
माधुर्यात् स्यात् सर्वथा शालिनी त्वम् ॥३७॥

[3]षष्ठं तृतीयं नवमं गुरुण्यन्त्यमथापि वा ।
यत्र तु द्वादशे पादे तज् ज्ञेयं तोटकं बुधैः ॥ ३८ ॥

यथा—

किमिदं कपटाश्रयदुर्विषहं
[4]बहुगर्जमिवोद्गणरूक्षकथम् ।

---

१ सुभग–क ।    २ संस्कृत–ख ।
३ कपुस्तकस्थं तोटकलक्षणं यथा—
त्रिकसोऽत्र भवेत्तु समुद्रसम-
स्त्रिषु चापि तथा नियमेन यतिः ।
सततं जगतीविहितं हि ततो
गदितं खलु तोटकवृत्तमिदम् ॥
४ बहुगण्डमिवोल्वणरूक्षपथम्–ख ।

स्वजनाप्रियदुर्जनभेदकरं
ननु तोटकवृत्तमिदं कुरुष ॥ ३९ ॥

यदि खलु पादे न्यौ त्रिकौ तथा यौ
यतिरपि वर्णैः षड्भिरेव चेत् स्यात्।
जगति विधाने नित्यसन्निविष्टा
कुमुदनिभा सा नामतः प्रसिद्धा ॥४०॥

यथा—

कुमुदनिभा त्वं कामबाणविद्धा
किमसि नतभ्रूश्शीतवातदग्धा ।
मृदुनलिनीव पाण्डुवक्त्रशोभा
कथमसि जाता अग्रतस्सखीनाम् ॥४१॥

द्वादशाक्षरके पादे सप्तमं दशमं लघु
आदौ पञ्चाक्षरे छेदश्चन्द्रलेखेति सा यथा ॥ ४२ ॥

वक्त्रं सौम्यन्ते पद्मपत्रायताक्षं
कामस्याभासं स्वभ्रुवोश्चापभासम् ।
कामस्यापीदं काममाहर्तुकामं
कान्त्या त्वं कान्ते चन्द्रलेखेव भासि ॥४३॥

तृतीयमन्त्यं नवमं पञ्चमञ्च यदा गुरु ।
द्वादशाक्षरके पादे तदा स्यात् प्रमिताक्षरा ॥ ४४ ॥

यथा—

स्मितहासिनी ह्यचपलाऽपरुषा
निभृतापवादविमुखी सततम् ।
यदि कस्यचिद्युवतिरस्ति सुखा
प्रमिताक्षरा स हि पुमाञ्जयति ॥४५॥

---

१ कुमुदनिभाचन्द्रलेखयोर्लक्षणोदाहरणे खपुस्तके न दृश्येते ।

द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमम्।
गुरूणि द्वादशे पादे वंशस्थं[1] जगती तु सा ॥ ४६ ॥

यथा--

न मे प्रिया यद्बहुमानवर्जिता
कृता प्रिये ते परुषाभिभाषणैः।
तथा च पश्याम्यहमद्य विक्रमं
ध्रुवं स वंशस्थगतिः करिष्यति ॥४७॥

चतुर्थमन्त्यं दशमं सप्तमञ्च यदा गुरु।
भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता ॥ ४८ ॥

यथा--

परुषवाक्यकशाभिहता त्वया
भयविलोक(न)पार्श्वनिरीक्षणा।
वरतनुः प्रततप्लुतसर्पणै-
रनुकरोति गतैर्हरिणप्लुतम् ॥ ४९ ॥

सप्तमं नवमञ्चान्त्यमुपान्त्यं च यदा गुरु।
द्वादशाक्षरके पादे काममत्तेति[2] सा स्मृता ॥ ५० ॥

यथा—

करजपदविभूषिता यथा त्वं
सुदति दशनविक्षताधरा च।
गतिरपि चरणावलग्नमन्दा
त्वमसि मृगसमाक्षि काममत्ता ॥ ५१ ॥

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु।
द्वादशाक्षरके पादे अप्रमेया तथाहि सा ॥ ५२ ॥

---

१ लक्षणमिदं कपुस्तके त्वेवं पठ्यते—
यदा त्रिकौ ज्तौ भवतस्तु पादत-
स्तथैव च ज्राववसानसंज्ञितौ।
तदा हि वृत्तं जगतीप्रतिष्ठितं
वदन्ति वंशस्थमितीह नामतः॥

२ ०दत्ते-क।

न ते काचिदन्या समा दृश्यते स्त्री
गुणैर्वा द्वितीया तृतीयापि चास्मिन् ।
ममेयं मतिर्लोकमालोक्य सर्वं
जगत्यप्रमेयासि सृष्टा विधात्रा ॥ ५३ ॥

द्वितीयं[1] पञ्चमं चैव अष्टमैकादशं तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा ॥ ५४ ॥

देहतोयाशया वक्त्रपद्मोज्वला
नेत्रभृङ्गाकुला दन्तहंसैः स्थिता ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ५५ ॥

यदि चरणनिविष्टौ नौ तथा म्यौ
यतिविधिरपि युक्त्याष्टाभिरिष्टः ।
भवति च जगतीस्थः सर्वदा यः
स इह हि पुटवृत्तं नामतस्तु ॥ ५६ ॥

यथा—

उपवनसलिलानां बालपद्मै-
र्भ्रमरपरभृतानां कण्ठनादैः ।
समदगतिविलासैः कामिनीनां
कथयति पुटवृत्तं पुष्पमासः ॥ ५७ ॥

द्वितीयञ्च चतुर्थञ्च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्याञ्च चतुर्भिः सा प्रभावती ॥ ५८ ॥

यथा—

कथन्त्विमं कमलविशाललोचने
गृहं घनैः पिहितकरे निशाकरे[2] ।

---

१ लक्षणमिदं कपुस्तके त्वेवं दृश्यते—
रास्त्रिकाः सागराख्या निविष्टा यदि
स्युस्त्रिके युक्तरूपा यतिर्दृश्यते ।
सन्निविष्टा जगत्यां मता सा बुधै-
र्नामतश्चापि संकीर्त्यते पद्मिनी ॥
२ दिवा०-ख ।

अचिन्तयन्त्यभिनववर्षविद्युते
समागता सुतनु यथा प्रभावती ॥ ५९ ॥
त्रीण्यादावष्टमोपान्त्ये दशमं नैधनं तथा ।
गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षणी ॥ ६० ॥

यथा—

भावस्थैर्मधुरकथैः सुभाषितैस्त्वं
साटोपस्खलितविलम्बितैर्गतैश्च ।
नानागैर्हरसि मनांसि कामुकानां
सुव्यक्तं ह्यसि जगति प्रहर्षणीव ॥६१॥
षष्ठञ्च सप्तमञ्चैव दशमैकादशं लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥ ६२ ॥

यथा—

विद्युन्नद्धा सेन्द्रधनुर्द्योतितदेहा
वातोद्धूता श्वेतबलाकाकृतशोभाः ।
एते मेघा गर्जितनादोज्वलचिन्हाः
प्रावृट्कालं मत्तमयूराः कथयन्ति ॥६३॥
आदौ द्वे च चतुर्थञ्चाप्यष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च शक्वर्यां वसन्ततिलका यथा ॥ ६४ ॥
चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचना सुविभूषिताङ्गी ।
नागावतंसविनिभूषितगण्डपाली
साक्षाद्वसन्ततिलकेव विभाति नारी ॥६५॥
पञ्चादौ शक्करीपादे गुरूणि त्रीणि चान्ततः ।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा स्मृता ॥ ६६ ॥

---

१ नानावतंसक वि०–ख ।
२ एतद्वृत्तमधिकृत्य कपुस्तके तु उदाहरस्यान्तिमांश एव दृश्यते–०गतिरपरं देशं । कीर्णा नानार्थैरवनिरियमसम्बाधा ।

यथा—

मानालोकज्ञः सुतबलकुलशीलाढ्यो
यस्मिन् सम्मानं न सदृशमनुपश्येद्धि ।
गच्छेत्तं त्यक्त्वा द्रुतगतिरपरं देशं
कीर्णा नानार्थैरवानिरियमसंबाधा ॥ ६७ ॥

आदौ चतुर्गुरूणि स्युर्दशमैकादशे तथा ।
आन्त्योपान्त्ये तु शक्वर्याः पादे तु शरभा यथा ॥ ६८ ॥

एषा कान्ता व्रजति ललिता वेपमाना
गुल्मच्छन्नं वनमुरुनगैः सम्प्रविद्धम् ।
हा हा कष्टं किमिदमिति नो वेद्मि मूढो
व्यक्तं क्रोधाच्छरभललितं कर्तुकामा ॥ ६९ ॥

आदौ षट् दशमश्चैव लघूनि स्युस्त्रयोदश ।
यत्र पञ्चदशे पादे ज्ञेया नान्दीमुखीति सा ॥ ७० ॥

यथा—

न खलु तव कदाचित् क्रोधताम्रायताक्षं
भ्रुकुटिवलितभङ्गं दृष्टपूर्वं मयाऽऽस्यम् ।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
त्वमसि मधुरवाक्या देवि नान्दीमुखीव ॥ ७१ ॥

आद्यं षष्ठं चतुर्थं च नैधनं च गुरूण्यथ ।
षोडशाक्षरके पादे गजं विलसितं तु तत् ॥ ७२ ॥

यथा—

तोयधरः सुधीरघनपटुपटहरवः
सर्जकदम्बनीपकुटजकुसुमसुरभि ।
कन्दलसेन्द्रगोपकरचितमवनितलं
वीक्ष्य करोत्यसौ वृषभगजविलसितकम् ॥ ७३ ॥

---

१ लक्षणमिदं कपुस्तके त्वेवं पठ्यते-
भ्रौ यदि नाश्च नित्यमिह विरचितचरणाः
गश्च तथाऽत्र संभवति निधनमुपगतः ।
स्यादपि चाष्टिमेव यदि सततमनुगतं
तत् खलु वृत्तमग्र्यवृषभगजविलसितम् ।

आद्यात् पराणि पञ्चैव द्वादशं सत्रयोदशम् ।
अन्त्ये द्वे यत्र दीर्घाणि प्रवरं ललितं हि तत् ॥ ७४ ॥

नखालीढं गात्रं दशननिहितं चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रविलुलितकेशालकान्तम् ।
गतिर्मन्दा चैवं वदनमपि संभ्रान्तनेत्र-
महो श्लाघ्यं वृत्तं प्रवरललितं कामवेषम् ॥ ७५ ॥

आद्यात्पराणि पञ्चैव द्वादशं सत्रयोदशम् ।
अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि च ॥ ७६ ॥

महानद्याभोगे पुलिनमिव ते भाति जघनं
तथाऽऽस्यं नेत्राभ्यां भ्रमरसहितं पङ्कजमिव ।
तनुस्पर्शश्चायं सुतनु सुकुमारो न परुषः
स्तनाभ्यां तुङ्गाभ्यां शिखरिणिनिभा भासि दयिते ॥७७॥

यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे ।
षोडशैकादशे चैव तत्स्यात् वृषभचेष्टितम् ॥ ७८ ॥

---

१ कपुस्तके लक्षणमिदमेवं लक्ष्यते-
यदा य्मौ पादस्थौ भवत इह चेत् न्सौ तथागौं
तथा षड्भिश्चान्यैर्यतिरपि पुनर्यथा स्यात् ।
तदप्यष्टौ वृत्तेसमनुगतमेवोक्तमन्यैः
प्रयोगज्ञैर्वृत्तं प्रवरललितं नामतस्तु ॥

२ लक्षणमिदं कपुस्तके त्वेवं पठ्यते—
चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणे·
यदा लौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते ।
यदा षड्भिश्छेदो भवति यतिमार्गे विरचित—
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता ॥

३ लक्षणमिदं कपुस्तके त्वेवं पठ्यते—
यदि हि चरणौ न्सौ म्रौ सौ गः क्रमाद्विनिवेशिताः
यदि खलु यतिः षड्भिर्वर्णैस्तथा दशभिः पुनः ।
यदि च विहितं स्याद्दृष्टिप्रयोगसुखाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा ॥

जलदनिनदं श्रुत्वा गर्जन्मदोच्चयदर्पितो
विलखति महीं दर्पाच्छृङ्गैर्मुहुः प्रतिनर्द्य च ।
स्वयुवतिवृतो गोष्ठोपगोष्ठं प्रयाति च निर्भयो
वृषभललितं चित्रं वृत्तं करोति च शाड्वले ॥ ७९ ॥

भो भो नस्तौ चरणरचिता गश्च गोऽन्त्यप्रतिष्ठ-
श्छेदश्चेष्टो यदि च दशभिः स्यात्तथाचैश्चतुर्भिः ।
अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा
विज्ञेया द्विजन्मनि (?)श्रीधरा नामतश्च ॥ ८० ॥

यथा—

स्नानैश्चूर्णैः सुखसुरभिभिर्गण्डलेपैः सुधूपैः
पुष्पैश्चान्यैः शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकरचितैरङ्गसम्भोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलया श्रीधरा त्वं विभासि ॥ ८१ ॥

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु ।
तद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः ॥ ८२ ॥

एष गजोऽद्रिमस्तकतटे कलभपरिवृतः
क्रीडति वृक्षगुल्मगहने कुसुमभरनते ।
मेघरवं निशम्य मुदितपवनजववशात्
सुन्दरि वंशपत्रपतितं पुनरपि कुरुते ॥ ८३ ॥

यदा द्विरुदितौ हि पादमभिसंश्रितौ ज्सौ त्रिकौ
तथैव च पुनस्तयोर्निधनमाश्रितौ य्लौ सगौ ।
तदाष्टिरितिपूर्विका यतिरपि स्वभावाद्यथा
विलम्बितगतिस्तथा निगदिता द्विजैर्नामतः ॥ ८४ ॥

यथा—

विघूर्णितविलोचना पृथुविघूर्णहारा पुनः
प्रलम्बरसनाचलत्स्खलितपादमन्दक्रमा ।

---

१ दीप्तस्मरोत्सवलालितो-ख ।

न मे प्रियमिदं जनस्य बहुमानरागेण यन्-
मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये ॥ ८५ ॥
पञ्चादौ पञ्चदशकं द्वादशैकादशे गुरु ।
चतुर्दशं तथाऽन्त्ये द्वे चित्रलेखा बुधैः स्मृता ॥ ८६ ॥

यथा—

नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थै-
र्नानागन्धाढ्यैर्मदजननैरङ्गहार्यैर्विचित्रैः ।
केशैः स्नानार्द्रैः कुसुमरचितैर्वक्त्ररागैश्च तैस्तैः
कान्ते सङ्क्षेपात् किमिह बहुना चित्रलेखेव भासि ॥८७॥
अन्त्यं सप्तदशं चैव षोडशं च चतुर्दशम् ।
द्वादशं साग्रगं चैव षष्ठमष्टममेव च ॥ ८८ ॥
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि तत् स्याच्छार्दूलविक्रीडितम् ॥ ८९ ॥
नानाशस्त्रशतघ्नितोमरहताः प्रभ्रष्टसर्वायुधा
निर्भिन्नोदरबाहुवक्त्रनयना निर्भर्त्सिताः शत्रवः ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै-
र्वृत्तं ते रिपुघाति भाति समरे शार्दूलविक्रीडितम् ॥ ९० ॥
चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् ।
तथा पञ्चदशं चैव षोडशं नैधनं तथा ॥ ९१ ॥

---

१ कपुस्तके शार्दूलविक्रीडितस्य लक्षणं त्वेवं पठ्यते—
म्सौ ज्सौ तौ गथ च प्रयोगनियता यस्मिन्निविष्टास्त्रिका
आद्याश्चात्र यतिश्चतुस्त्रिकयुता ज्ञेया पुन सप्तभिः ।
नित्यं यत् पदमाश्रितं ह्यतिधृतिं नित्यं कवीनां प्रियं
तज् ज्ञेयं समवृत्तजातनिपुणैः शार्दूलविक्रीडितम् ॥

२ कपुस्तके सुवदनाया लक्षणम्—
म्रौ भ्नौ यभौ लगौ च सम्यग्यदि च विरचिता पादे क्रमवशात्
विच्छेदः सप्तभिः स्यात् पुनरपि च यतिः सप्ताक्षरकृता ।
यद्येवं संश्रिता स्यात् कृतिमपि च पुनः श्लिष्टाक्षरपदां
विद्वाद्भिर्वृत्तजातौ तत इह गदिता नाम्ना सुवदना ॥

एतानि तु गुरूणि स्युः शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना सुवदना तु सा ॥ ९२ ॥

यथा—

नेत्रे लीलालसे ते कमलदलनिभे भ्रूचापनिहिते
गण्डोष्ठं पीनमध्यं सममहितघनं स्निग्धाश्च दशनाः ।
कर्णौ पार्श्वावलम्बौ चिबुकमपि नतौ घोणा सुरुचिरा
सर्वस्मिन् मर्त्यलोके वरतनु विदितास्येका सुवदना ॥ ९३ ॥

चत्वार्यादौ च षष्ठं च सप्तमं च चतुर्दशम्[1] ।
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः ॥ ९४ ॥
अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥ ९५ ॥

चूताशोकारविन्दैः कुरबकतिलकैः कर्णिकारैः शिरीषैः
पुन्नागैः पारिजातैर्बकुलकुवलयैः किंशुकैः सातिमुक्तैः ।
एतैर्नानाप्रकारैरधिकसुरभिभिर्विप्रकीर्णैश्च तैस्तै–
र्वासन्तैः पुष्पवृन्दैर्नरवर वसुधा स्रग्धरेवाद्य भाति ॥ ९६ ॥

चतुर्थमाद्यं[2] षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥ ९७ ॥
द्वाविंशत्यक्षरे पादे शेषाणि तु लघूनि च ।
भवन्ति यत्र तज् ज्ञेयं मद्रकं नामतो यथा ॥ ९८ ॥

---

१ कपुस्तके स्रग्धराया लक्षणम्—
म्रौ भ्नौ यौ यश्च सम्यग्यदि हि विरचिताः स्युस्त्रिकाः पादयोगे
वर्णैः पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् ।
........................प्रकृतिमनुगतन्ताद्भिवद्भिः(?) प्रदिष्टं
विज्ञेया वृत्तजातौ कविवरदयिता स्रग्धरा नामतस्तु ।

२ कपुस्तके मद्रकलक्षणम्—
भ्रौ चरणे यदा विनियतौ त्रिकौ क्रमवशादथाकृतिविधौ
नौ च ततः परश्च नियतौ तथा तदनु चार्पिता नरनगाः ।
स्याच्च दशाष्टवर्णरचिता यतिः पुनरिह प्रिया च विदुषां
श्रुतिसुखसमर्थसुभगं मद्रकवृत्तमेतदुदितं खलु ॥

उद्यतमेकहस्तचरणं द्वितीयकररेचकं सललितं
वंशमृदङ्गवाद्यमधुरं विचित्रकरणान्वितं बहुविधम् ।
मद्रकमेतदद्य सुभगैर्विदग्धगतिचेष्टितैः सललितै-
र्नृत्यसि विभ्रमाकुलपदं वरोरु ललितक्रियं समरसम् ॥ ९९ ॥

ऐकादशं सप्तदशं सप्तमं सत्रयोदशम् ।
अन्त्यमेकोनविंशं च पञ्चमं च गुरूण्यथ ॥ १०० ॥
शेषाणि तु लघूनि स्युर्विकृतौ चरणेषु च ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥ १०१ ॥

यथा—

रथहयनागयोधपुरुषैः संकुलमलं बलं समुदितं
शरशतशक्तिकुन्तपरिघासियष्टिविवृतं बहुप्रहरणम् ।
रिपुशतमुक्तशस्त्ररवशङ्कितभटं भिन्नहतशत्रुनाशि भयाकुलमिदं
कृतमभिवीक्ष्य संयुगमुखे समीप्सितगुणं तदश्वललितम् ॥१०२॥

षडादावष्टमं चैव एकादशचतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥ १०३ ॥
एतानि तु लघूनि स्युः शेषाणि च गुरूण्यथ ।
चतुर्विंशाक्षरे पादे मेघमालेति सा यथा ॥ १०४ ॥

---

१ उन्नत-ख ।

२ अश्वललितलक्षणं कपुस्तके—
यदि च नकारसंज्ञकगणः पदे विरचितस्तथैव च लगौ
यदि च जसौ जसावपि जभौ क्रमेण न खलूक्तमन्यदपरम् ।
यदि च समाश्रितं हि विकृतिं यश्च दशभिस्तथैकसहितै-
स्तदिह सुकीर्तितं कविगणैर्विशुद्धचरितैस्तदश्वललितम् ॥

३ मेघमालालक्षणं कपुस्तके—
यदि खलु चरणस्थितौ नौ त्रिकौ षट् तु रा व्यास्थितास्तत् परं स्युः क्रमाद्
भवति यदि यतिस्तथा सप्तभिस्सप्तभिश्चाक्षरैः सद्भिरुक्ताक्षरा ।
सततमुपरिविष्टदेहा तथा सङ्कृतौ सूरिभिः सम्मता दृश्यते
त इह परिभाषिता शास्त्रविद्भिस्त्वियं मेघमालाथवा अन्धकः॥

पवनबलसमाहता तीव्रनादा बलाकावलीमेखलाशोभिता
क्षितिधरसदृशोच्चरूपा महानीलधूमायमानाम्बुगर्भोद्वहा ।
सुरपतिधनुरुज्वलाबद्धकक्ष्या तडिद्द्योतसन्नाहपट्टोज्वला
गगनतलविसारिणी प्रावृषेण्योन्नता मेघमालाऽधिकं शोभते॥१०५॥

आद्यं चतुर्थं च तथा पञ्चमं षष्ठमेव च ।
नवमं दशमं चैव अन्त्यं चैव गुरूण्यथ ॥ १०६ ॥
लघून्यन्यानि शेषाणि पादे स्युः पञ्चविंशके ।
वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः ॥ १०७ ॥

यथा—

मा कपिलाक्षीं पिङ्गलकेशीं कलिरुचिरनुदिनमनुनयकठिना
दीर्घकलाभिस्तूलशिराभिः परिवृतवपुरतिशयकुटिला ।
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिवृतहृदया
(जात्वपि चेष्टा) क्रौञ्चपदा स्त्री ध्रुवमिह निरवधिसुखमभिलषता ॥१०८॥

अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशकं ।
एकविंशं तथा चैव चतुर्विंशं सनैधनम् ॥ १०९ ॥
एतानि गुरुसंज्ञानि पादे षड्विंशकाक्षरे ।
यत्र नाम्ना तथा ज्ञेयं तद् भुजङ्गविजृम्भितम् ॥ ११० ॥

यथा--

रूपोपेतां देवैः स्पृष्टां समदगजविलसितगतिं निरीक्ष्य तिलोत्तमां
प्राप्तं द्रष्टुं बहुवदननयनसहितं तिरस्तुतवान् हरः ॥

---

१ क्रौञ्चपदालक्षणं कपुस्तके—
भ्मौ यदि पादे स्नावपि चेष्टावभिकृतिरिह खलु बुधजनविहिता
नाश्च समुद्राः स्युर्विनिविष्टा यदि च खलु गुरुरिह निधनगमितम् ।
पञ्चभिरादौ चेद्यतिरिष्टा पुनरपि यतिरिह खलु दशभिः स्यात्
क्रौञ्चपदेयं वृत्तविधाने सुरगणपितृगणमुनिभिरभिहिता ॥

२ भुजङ्गविजृम्भितस्य कपुस्तके लक्षणं—
यस्मिन् मौ तौ नौ्सौ लगौ च प्रतिचरणमथ निगदितास्त्रिका ह्यनुपूर्वशः
षड्विंशत्यामेकेनायां सपदि खलु युवतिभिरभिहिता चतुर्भिरथाष्टभिः
प······संयोज्येन यदि भवति मनुजदयतिमाश्रितमुक्तौ
नाम्ना वृत्तं लोके ख्यातं कविवदनविकसनपरं भुजङ्गविजृम्भितम् ॥

दीर्घं निश्वस्यान्तर्गूढं स्तनवदनजघनकलितां निरीक्ष्य तथा पुनः
पृष्ठन्यस्तां देवेन्द्रेण प्रवरमणिगणकवलयं भुजङ्गविजृम्भितम् ॥१११॥
दण्डकं नाम विज्ञेयं षड्विंशादाधिकाक्षरम् ।
वृत्तं मालादिकं तस्मान्नोक्तं चादौ गुहादिना ॥ ११२ ॥

यथा—

मुदितजनपदाकुला स्फीतसस्याकरा भूतधात्री भवन्तं समभ्यर्च्यते
द्विरदकरविलुप्तहिन्तालतालीवनास्त्वान्नमस्यन्ति विन्ध्यादयः पर्वताः ।
स्फुटितकलशशुच्चीर्ण(?)मुक्ताफलैरूर्मिहस्तैर्नमस्यान्ति वस्सागरा
मुदितजलचराकुलारूपं प्रकीर्णामलाः कीर्तयन्तीव कीर्तिं महानिम्नगाः ११३

एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः ।
विषमार्धसमानां तु पुनर्वक्ष्यामि लक्षणम् ॥ ११४ ॥
यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः ।
ग्रथिताः पादयोगेन तद्वृत्तं विषमं स्मृतम् ॥ [1]११५ ॥
द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा ।
सर्वपादैस्तु विषमैर्वृत्तं विषममुच्यते ॥ [1]११६ ॥
ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा ।
युग्मौजविषमैः पादैस्तद्वृत्तमसमं स्मृतम् ॥ ११७ ॥
पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम् ।
द्वयोरर्धसमं विद्यादेष भेदस्तु पादशः ॥ ११८ ॥
पादद्वयस्य संसिद्धौ सिद्धमर्धसमं पुनः ।
छेदास्तु ये मया प्रोक्ताः समवृत्तविकल्पिताः ॥
त्रिकैर्विषमवृत्तानां सम्प्रवक्ष्यामि लक्षणम् ॥ [1]११९ ॥
सौ गौ च प्रथमे पादे सौ लगौ चापि द्वितीयके ।
एवं युग्मौजकौ ज्ञेयौ पथ्यावृत्ते त्रिकौ यथा ॥ १२० ॥
प्रियदैवतमित्रासि प्रियदैवतबान्धवा ।
प्रियदानवरा पथ्या यद्यपि त्वं प्रियासि मे ॥ १२१ ॥

---

१ एते त्रयः श्लोकाः कपुस्तके नोपलभ्यन्ते ।

युग्मयोर्लक्षणं ह्येतत् विपरीतन्तु यत्र तु ।
पथ्या हि विपरीता सा विज्ञेया नामतो बुधैः ॥ १२२ ॥

यथा--

कृतेन[1] मरणं यस्य सखिरांषेणतेत्य ।
ज्ञलेकौमोहितापि चरितानपन्यासि ॥ १२३ ॥
चतुर्थादक्षराद्यत्र त्रिलघुस्यादयुक्ततः ।
अनुष्टुब् विपुला सा तु विज्ञेया नामतो यथा ॥ १२४ ॥
न खल्वस्याः प्रियतमे श्रोतव्यं व्याहृतं सदा ।
सा नारदस्य प्रकृतिः श्रूयते विपुलाभिधा ॥ १२५ ॥
विपुला वा युजि ज्ञेया लघुत्वात सप्तमस्य तु ।
सप्तमस्यैव केषाञ्चित् विपुलैव तु सा यथा ॥ १२६ ॥
संक्षिप्ता वज्रमध्ये हे हेमकुम्भनिभस्तनी ।
विपुलासि प्रिये कल्यां शरच्चन्द्रनिभानने ॥ १२७ ॥

यथा वा—

गङ्गेव मेघोपगमे आप्लावितवसुन्धरा ।
कूलवृक्षानारुजती स्रवन्ती विपुला वनात् ॥ १२८ ॥
एवं विपुलयोगास्तु पथ्यापादे भवन्ति हि ।
युग्मौजविषमैः पादैः शेषैरन्यैस्त्रिकैस्तथा ॥ १२९ ॥
गुर्वन्तकः सर्वलघुस्त्रिको नित्यं हि नेष्यते ।
प्रथमादक्षराद्यत्र चतुर्थात् प्राग् लघु स्मृतम् ॥ १३० ॥
पथ्यापादं समास्थाप्य त्रीण्यन्ते तु गुरूण्यथ ।
भवन्ति पादे सततं यत्र तद्वक्त्रमिष्यते ॥ १३१ ॥

यथा—

दन्तक्षताधरं सुभ्रु जागरग्लाननेत्रं च ।
प्रातः सम्भोगखिन्नं ते दर्शनीयतमं वक्त्रम् ॥ १३२ ॥
म्रौ गौ च प्रथमे पादे यसौ ग्लौ चापि द्वितीयके ।
रभौ लगौ तृतीये च चतुर्थे तु जसौ लगौ ॥ १३३ ॥

---

१ इदमुदाहरणं खपुस्तके त्रुटितं, अत्राप्यशुद्धमेव लक्ष्यते ।

यथा—

नैवाचारो न ते मित्रं न सम्बन्धिगुणक्रिया।
सर्वथा सर्वविषमा पथ्या न भवसि प्रिये ॥ १३४ ॥
स्जावादौ च तथा स्लौ च नसजा गश्च युग्मके।
भ्जौ ज्लौ गश्च तृतीये स्युः स्जौ स्जौ गश्च तुरीयके ॥
एते त्रिकाः क्रमप्राप्ता उद्गतायां प्रकीर्तिताः ॥ १३५ ॥

यथा—

तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी
नाभिकमले विवरोत्पतिता भ्रमरावलीव कुसुमे समुद्गता ॥१३६॥
स्जौ जश्च ललितापादे न्सौ जो गश्च द्वितीयके।
नौ सौ चैव तृतीये तु द्विः स्जौ गश्च चतुर्थके ॥ १३७ ॥

यथा—

ललिताकुलभ्रमिवाहवसनकरपल्लवा हि मे।
प्रविकसितकमलकान्तमुखी प्रतिभासि देवि सुरतश्रमातुरा ॥१३८॥
इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते।
द्विधा मतं हि वैषम्यं त्रिकादक्षरस्तथा ॥ १३९ ॥
स्जौ स्गौ च प्रथमे पादे तथा चैव तृतीयके।
केतुमत्यां गणाः प्रोक्ता भ्रौ न्गौ गश्च सदा बुधैः ॥१४०॥

यथा—

स्फुरिताधरं कलितनेत्रं रक्तकपोलमम्बुजदलाक्षम्।
किमिदं रुषापहृतशोभं केतुमतिमुखाकृतिमुखं ते ॥ १४१ ॥
प्रथमे च तृतीये च नौ रेफः ग्लाश्च कीर्तिताः।
गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः ॥ १४२ ॥

यथा—

सुतनु जलपरीतलोचने जलमनिरुद्धमिवेन्दुमण्डलम्।
किमिदमपरवक्त्रमेव ते मम तु तथापि मनोहरं मुखम् ॥ १४३ ॥
नौर्यौ तु पथमे पादे नजौ ज्रौ गस्तथापरे।
पादे तु पुष्पिताग्राया यथैतावपरौ तथा ॥ १४४ ॥

यथा--

पवनरयविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकररवगीयमानवृक्षं
वरतनु पश्य वनं सुपुष्पिताग्रम् ॥ १४५ ॥

पादे षोडश मात्राः स्युस्त्रिकांशकविकल्पिताः ।
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका ॥१४६॥

यथा—

असंस्थितपदा विह्वलाङ्गी
मदस्खलितचेष्टितैर्मनोज्ञा ।
क्व यास्यसि वरोरु सुरतकाले
विषमा किं वानवासिका त्वम् ॥ १४७ ॥

एवमेतानि वृत्तानि समानि विषमाणि च ।
नाटकादिषु काव्येषु प्रयोक्तव्यानि सूरिभिः ॥ १४८ ॥
सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पण्डितैः ।
न च तानि प्रयोज्यानि न शोभां जनयन्ति यत् ॥ १४९ ॥
यान्यतः परमत्र स्युर्गीतकैस्तानि योजयेत् ।
ध्रुवाविधाने व्याख्यास्ये तेषाञ्चैव विकल्पनम् ॥ १५० ॥
वृत्तलक्षणमेतत्तु समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि आर्याणामपि लक्षणम् ॥ १५१ ॥
पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्याः पञ्चविधाः स्मृताः ॥ १५२ ॥
आसाञ्चैव प्रवक्ष्यामि यतिमात्राविकल्पनम् ।
लक्षणैर्नियतांशैश्च विकल्पान् गणसंश्रितान् ॥ १५३ ॥
यतिच्छेदश्च विज्ञेयश्चतुर्मात्रागणस्तथा ।
द्वितीयान्त्यौ युजौ पादौ शेषौ चैवायुजौ स्मृतौ ॥ १५४ ॥
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्ये युग्गणं पञ्च चैव हि ॥ १५५ ॥

षष्ठस्य द्विविकल्पस्य नैधने ह्येकसंश्रितः ।
पश्चार्धे यो गणः षष्ठ एकमात्रः स उच्यते ॥ १५६ ॥
द्विविकल्पस्तु षष्ठोऽत्र गुरुमध्यो भवेत्तु सः ।
तथा सर्वलघुश्चैव यति संज्ञाः समाश्रितः ॥ १५७ ॥
साद्वितीयाद्विलघूनि सप्तमे प्रथमाद्यतिः ।
प्रथमादि तथान्ते च पञ्चमे तु विधीयते ॥ १५८ ॥
[१]गणेषु त्रिषु पादेषु यस्याः पथ्या तु सा भवेत् ।
प्रथमे च द्वितीये च सा त्वार्या विपुला मता ॥ १५९ ॥
रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी ।
कस्य तु पृथुमृदुजघना तनुबाहुंसोदरी पथ्या ॥ १६० ॥
द्वितीयश्च चतुर्थश्च जकारौ गुरुमध्यगौ ।
यस्या स्यात्पादयोगे तु विज्ञेया विपुला च सा ॥ १६१ ॥
मुखेऽस्य मुखचपला स्यादन्यत्र जघने तथा ।
उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि ॥ १६२ ॥
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला तथा ।
त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिः सप्त चापरे ॥ १६३ ॥
[३]उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः ।

---

१ पथ्यालक्षणं खपुस्तके यथा–
प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।

२ एतदनन्तरं खपुस्तके चपलायाः भेदद्वयं दृश्यते । तत्तु त्रुटितत्वान्नात्र प्रदर्शितम् ॥

३ खपुस्तके केऽपि श्लोकाः अधिका दृश्यन्ते । ते ऽत्र पृथगेव दीयन्ते–
उभयोरर्धयोरेव यत्रैव लक्षणं भवेत् ।
महत् पूर्वानुवृत्तज्ञैर्विज्ञेया चपला तु सा ॥
चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं सम्प्रदर्शयेत् ॥
पञ्चपञ्चदशाद्या तु त्रिंशदाद्या तथैव च ।
आर्या त्वक्षरपिण्डेन विज्ञेया प्रयोक्तृभिः ॥
त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् ।
शेषाणि गुरुसंतानि एवं सर्वत्र निर्दिशेत् ॥

अधिकानि यानि त्रिंशद्भ्यस्तानि द्विगुणितानि तु ॥ १६४ ॥
अक्षरत्रययुक्तानिं ज्ञेयान्यत्र लघूनि तु ।
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः ॥ १६५ ॥
सर्वासामेव चार्याणां अक्षराणि यथाक्रमम् ।
सर्वेषां जातिवृत्तानां पूर्वमुत्तरसंख्यया ॥ १६६ ॥
विकल्पं गणयित्वा च संख्यापिण्डेन निर्दिशेत् ।
आर्यागीतिरथार्यैव केवलं त्वष्टभिर्गणैः ॥ १६७ ॥
इतरा चापि षष्ठा स्या(त् स) विकल्पो भवेद् गुणः ।
वृत्तैरेवं तु विविधैर्नानाच्छन्दः समुद्भवैः ॥ १६८ ॥
काव्यबन्धास्तु कर्त्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥ १६९ ॥

इति भारतीये नाट्यशास्त्रे छन्दोविचितिर्नाम षोडशोऽध्यायः ॥

## अथ सप्तदशोऽध्यायः ॥

भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्ताभिप्राय एव च ॥ १ ॥
निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् ।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥ २ ॥
दृष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः ।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥ ३ ॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च क्षोभोऽथ गुणकीर्तनम् ॥ ४ ॥
ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च ।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥ ५ ॥
अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् ॥ ६ ॥
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥ ७ ॥

सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र श्लिष्टं विशिष्टयर्थं सा शोभेत्यभिधीयते ॥ ८ ॥
यत्र त्वल्पार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥ ९ ॥
यत् प्रयोजनसामर्थ्यात् वाक्यमिष्टार्थसाधकम् ।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः ॥ १० ॥
अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां स संशय इति स्मृतः ॥ ११ ॥
सर्वलोकमनोग्राहि पक्षपक्षार्थसाधकः ।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥ १२ ॥
दृष्ट्वैवावयवान् कांश्चिद् भावो यत्रानुमीयते ।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥ १३ ॥
अभूतपूर्वो योऽप्यर्थः सादृश्यात्परिकल्पितः ।
लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः ॥ १४ ॥
यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परापेक्षाप्युदासार्थं तन्निदर्शनमुच्यते ॥ १५ ॥
निरवद्यस्य वाक्यस्य पूर्वोक्ता तु प्रसिद्धये ।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥ १६ ॥
बहूनां च प्रयुक्तानां नाम यत्राभिकीर्त्यते ।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥ १७ ॥
सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ १८ ॥
गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।
गुणातिपातो मधुरो निष्ठुरार्थो भवेदथ ॥ १९ ॥
बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् ।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥ २० ॥
रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोक्तृभिः ।
अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥ २१ ॥

बहूनां च प्रयुक्तानां पादानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ २२ ॥
यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा ॥ २३ ॥
परिगृह्य च शास्त्रार्थं यद्वाक्यमाभिधीयते ।
विद्वन्मनोहरं स्वन्तमुपादिष्टं तदुच्यते ॥ २४ ॥
पूर्वदेशसमानार्थैरप्रत्यक्षार्थसाधनैः ।
अनेकोपोहसंयुक्तो विचारः परिकीर्तितः ॥ २५ ॥
विचारस्यान्यथाभावस्तथा दृष्टोपयोगतः ।
सन्देहात्कल्प्यते यस्तु स विज्ञेयो विपर्ययः ॥ २६ ॥
वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते ॥ २७ ॥
उभयोः प्रीतिजननोर्विरुद्धाभिनिविष्टयोः ।
अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥ २८ ॥
ईप्सितार्थप्रसिध्यर्थं कीर्त्यते यत्र सूरिभिः ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥ २९ ॥
हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्तनम् ।
क्रियते वान्यचेष्टाभिस्तद्दाक्षिण्यमिति स्मृतम् ॥ ३० ॥
यत्र संकीर्तयन् दोषं गुणमर्थेन दर्शयेत् ।
गुणातिपाताद् दोषाद्वा गर्हणं नाम तद्भवेत् ॥ ३१ ॥
अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसंयुक्तं सार्थापत्तिरुदाहृता ॥ ३२ ॥
वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः ।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥ ३३ ॥
यत्राकरोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छ्यते चाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥ ३४ ॥
दृष्टश्रुतानुभूतार्थकथनाभिः समुद्भवम् ।
सादृश्यक्षमजनितं सारूप्यमिति संज्ञितम् ॥ ३५ ॥

हृदयार्थस्य वाक्यस्य गूढार्थस्य विभावकम् ।
अन्यापदेशैः कथनं मनोरथ इति स्मृतः ॥ ३६ ॥
यद्वाक्यं वादकुशलैरुपायेनाभिधीयते ।
सदृशार्थाविनिष्पन्नः स लेश इति कीर्तितः ॥ ३७ ॥
परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते ।
अदृष्टान्योऽपि वा कश्चित् स तु दोष इति स्मृतः ॥ ३८ ॥
लोके गुणातिरिक्तानां गुणानां यत्र नामभिः ।
एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्त्तनम् ॥ ३९ ॥
प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।
वचनेन विजानातु सिद्धिः सा परिकीर्तिता ॥ ४० ॥
यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥ ४१ ॥
एतानि वा काव्यविभूषणानि
षट्त्रिंशदुद्देश्यनिदर्शनानि ।
काव्येषु सोदाहरणानि तज्ज्ञैः
सम्यक् प्रयोज्यानि बलानुरूपम् ॥ ४२ ॥ *

---

* अध्यायारम्भादारभ्य एतावत्पर्यन्तमंशोऽयं खघपुस्तकयोर्भिन्न एव दृश्यते । सोऽप्यत्र सङ्गृह्यते—

विभूषणं चाक्षरसंहितं च
शोभाभिमानौ गुणकीर्तनं च ।
प्रोत्साहनोदाहरणे निरुक्तं
गुणानुवादोऽतिशयश्च हेतुः ॥ १ ॥
सारूप्यमिथ्याध्यवसायसिद्धि-
पदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानयाञ्चा प्रतिषेधपृच्छा-
दृष्टान्तनिर्भासनसंशयाश्च ॥ २ ॥
आशीः प्रियं वै कपटं क्षमा च
प्राप्तिश्च पश्चात्तपनं तथैव ।
अर्थानुवृत्तिर्ह्युपपत्तियुक्ती
कार्यानुनीती परिदेवनं च ॥ ३ ॥

षट्त्रिंशदेतानि हि लक्षणानि
प्रोक्तानि वै भूषणसंमितानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः
सम्यग् प्रयोज्यानि यथारसं तु ॥ ४ ॥

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥ ५ ॥
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥ ६ ॥

सिद्धैरर्थैः समं कृत्वा............... ।
यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते ॥ ७ ॥
वार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः ।
न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥ ८ ॥

कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ॥ ९ ॥
सिद्धान् बहून् प्रधानार्थान् युक्त्या यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ १० ॥

यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
यान्ति सिद्धिमनुक्तादि तदुदाहरणं स्मृतम् ॥ ११ ॥
निरुक्तं द्विविधं प्रोक्तं तथ्यं वाऽतथ्यमेव वा ।
सिद्धिप्रसाधितं तथ्यमतथ्यं चाप्रसाधितम् ॥ १२ ॥

गुणानुवादो हीनानामुत्तमैरुपमाकृतः ।
उत्तमार्थविशेषो यः स चाप्यतिशयः स्मृतः ॥ १३ ॥
बहूनां भाष्यमाणानामनेकार्थविनिर्णयात् ।
सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥ १४ ॥

अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
लक्षणसमानकरणात् सारूप्यं तत्तु निर्देश्यम् ॥ १५ ॥
अभूतपूर्वे यत्रार्थे तुल्यस्यार्थस्य निर्णयः ।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥ १६ ॥

बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते ॥ १७ ॥
गुणैर्बहुभिरेकार्थैः पदैर्यः सम्प्रशस्यते ।
पदोच्चयं तु तं विद्यान्नामार्थं कथनात्मकम् ॥ १८ ॥

आत्मभावेष्वपत्यस्य परसाद्दश्ययुक्तिभिः।
तीव्रार्थभाषणं यत् स्यादाक्रन्दः स तु कीर्तितः॥ १९॥
हृदयस्थस्य भावस्य सुस्पष्टार्थप्रदर्शकम्।
अन्यापदेशकथनं मनोरथ इति स्मृतः॥ २०॥
अपृष्टैरथवा पृष्टैर्निर्णयः क्रियते तु यः।
आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम्॥ २१॥
आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम्।
यत्तु प्रियं पुनर्वाक्यं सा याञ्चा परिकीर्तिता॥ २२॥
कार्येषु विपरीतेषु यदि कश्चित् प्रवर्तते।
........................................ ॥ २३॥
यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम्।
पृच्छत्यभिनयेनार्थे सा पृच्छेत्यभिसंज्ञिता॥ २४॥
सिद्धं पूर्वोपलब्धौ यः समत्वमुपपादयेत्।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः॥ २५॥
अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम्।
अनेकवाक्यसंयुक्तं भासनं नाम तद्भवेत्॥ २६॥
अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते।
अनेकत्वाद्विचाराणां संशयः परिकीर्तितः॥ २७॥
यत्र शास्त्रार्थसम्पन्नां मनोरथसमुद्भवाम्।
अत्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः॥ २८॥
आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम्।
तत प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम्॥ २९॥
छलयुक्त्या त्वन्येषामभिसन्धानाभिभावकण्टकम्।
द्वित्रिप्रयोगयुक्तो विज्ञेयः कपटसङ्घातः॥ ३०॥
दुर्जनोदाहृतै रूक्षैः सभामध्येऽतिताडितः।
अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत्॥ ३१॥
दृष्टैर्वावयवैः कश्चिद्भावो यत्रोपमीयते।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम्॥ ३२॥
अकार्यं सहसा कृत्वा कृत्वा कार्यमथापि वा।
सन्तापो मनसो यस्तु पश्चात्तापः प्रकीर्तितः॥ ३३॥
प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम्।
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता॥ ३४॥
प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः।
सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम्॥ ३५॥

उपमा रूपकं चैव दीपकं यमकं तथा ।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः ॥ ४३ ॥
यत्किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम विज्ञेया गुणाकृतिसमाश्रया ॥ ४४ ॥
एकस्यैकेन सा कार्यानेकेनाप्यथवा पुनः ।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा ॥ ४५ ॥
तुल्यं ते शशिना वक्त्रमिति ह्येककृता भवेत् ।
एकस्य बहुभिः सा स्यादुपमा नाटकाश्रया ॥ ४६ ॥
शशाङ्कवत् प्रकाशन्ते ज्योतिंषीति भवेत्तु या ।
एकस्यानेकविषया सोपमा परिकीर्तिता ॥ ४७ ॥
श्येनबर्हिणभासानां तुल्यार्थ इति या भवेत् ।
एकस्य बहुभिः साम्यादुपमा नाटकाश्रया ॥ ४८ ॥
तुल्यं ते शशिना वक्त्रमित्येकेऽनेकसंश्रया ।
बहूनां बहुभिर्ज्ञेया घना इव गजा इति ॥ ४९ ॥
प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा ।
किञ्चिच्च सदृशी ज्ञेया ह्युपमा पञ्चधा बुधैः ॥ ५० ॥

प्रशंसा यथा—

दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिः साधितां कृच्छ्रात् सिद्धिं मूर्तिमतीमिव ॥ ५१ ॥

---

साध्यते योऽर्थसम्बन्धो महद्भिः समवायतः ।
परस्परानुकूल्येन सा युक्तिः परिकीर्तिता ॥ ३६ ॥
यत्रापसारयन् दोषं गुणमर्थेन योजयेत् ।
गुणातिवादो दोषाद्वा कार्यं तदिह संज्ञितम् ॥ ३७ ॥
अपूर्वक्रोधजनितमपराधं प्रमार्जयेत् ।
सेवार्थं मधुरं वाक्यमनुनीतिः प्रकीर्तिता ॥ ३८ ॥
यद्दोषैरन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजयेत् ।
अन्यत्रार्थेन सम्बन्धो ज्ञेयं तत् परिदेवनम् ॥ ३९ ॥

१ सार्धश्लोकचतुष्टयमिदं कपुस्तके नोपलभ्यते ।

निन्दा यथा—

सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम्।
वने कण्ठगतं वल्ली दावदग्धमिव द्रुमम् ॥ ५२ ॥

कल्पिता यथा—

क्षरन्तो दानसलिलं लीलामन्थरगामिनः।
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः ॥ ५३ ॥

सदृशी यथा—

यत्त्वयाऽद्य कृतं कर्म परचित्तानुरोधिना।
सदृशं तत्तवैव स्यादतिमानुषकर्मणः ॥ ५४ ॥

किञ्चित्सदृशी यथा—

संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥ ५५ ॥
उपमाया बुधैरेते भेदा ज्ञेयाः समासतः।
शेषा ये लक्षणैर्नोक्तास्ते ग्राह्याः काव्यलोकतः ॥ ५६ ॥
[1]नानाद्रव्यानुषङ्गाद्यैर्यदौपम्यं गुणाश्रयम्।
रूपनिर्वर्णनायुक्तं तद्रूपकमिति स्मृतम् ॥ ५७ ॥
स्वविकल्पेन रचितं तुल्यावयवलक्षणम्।
किञ्चित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत् ॥ ५८ ॥

यथा—

पद्माननास्ताः कुमुदप्रहासा विकासिनीलोत्पलचारुनेत्राः।
वापीस्त्रियो हंसकुलैर्नदद्भिर्विरेजुरन्योन्यमिवाह्वयन्त्यः ॥ ५९ ॥
नानाधिकरणस्थानां शब्दानां संप्रदीपतः।
एकवाक्येन संयोगो यस्तद्दीपकमुच्यते ॥ ६० ॥

यथा—

सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि।
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते ॥ ६१ ॥

---

१ रूपकस्य लक्षणमिदं खपुस्तके नास्ति।

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम् ।
विशेषदर्शनञ्चास्य गदतो मे निबोधत ॥ ६२ ॥
पादान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥ ६३ ॥
यमकं चक्रवालं च सन्दष्टयमकं तथा ।
पदादियमकञ्चैव आम्रेडितमथापि च ॥ ६४ ॥
चतुर्व्यवसितञ्चैव मालायमकमेव च ।
एतादृशविधं ज्ञेयं यमकं नाटकाश्रयम् ॥ ६५ ॥
चतुर्णां यत्र पादानामन्ते स्यात्सममक्षरम् ।
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥ ६६ ॥

यथा—

दिनक्षयात् संहृतरश्मिमण्डलं
दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं
यथा तरुण्याः स्तनभारमण्डलम् ॥ ६७ ॥

पादस्यान्ते यथा चादौ स्यातां तत्र समे पदे ।
तत्काञ्चीयमकं चैव विज्ञेयं सूरिभिर्यथा ॥ ६८ ॥

माया मायाचन्द्रवतीनां द्रवतीनां
व्यक्ताव्यक्तासारजनीनां रजनीनाम् ।
फुल्ले फुल्ले सम्भ्रमरेवा भ्रमरेवा
रामा रामा विस्मयते च स्मयते च ॥ ६९ ॥

अर्थेनैकेन यद्वृत्तं सर्वमेव समाप्यते ।
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ॥ ७० ॥

केतकीमुकुलपाण्डरदन्तः
शोभते प्रवरकाननहस्ती ।
केतकीमुकुलपाण्डरदन्तः
शोभते प्रवरकाननहस्ती ॥ ७१ ॥

एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदि ।
विक्रान्तयमकं नाम तद्विज्ञेयमिदं यथा ॥ ७२ ॥
स पूर्वं वानरो भूत्वा द्विशृङ्ग इव पर्वतः ।
अभवद्दन्तवैकल्यात् द्विशृङ्ग इव पर्वतः ॥ ७३ ॥
पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः ।
चक्रवच्चक्रवालं तु विज्ञेयं नामतो यथा ॥ ७४ ॥

शैला यथा शत्रुभिराहता हता
हताश्च बाणैरनुपुङ्खपुङ्खैः ।
खगैश्च सर्वैर्युधि सञ्चिताश्चिता-
श्चिताधिरूढा हि हता हता नराः ॥ ७५ ॥

आदौ द्वौ यत्र पादौ तु भवेतामक्षरैः समौ ।
सन्दष्टयमकं नाम विज्ञेयं तद् बुधैर्यथा ॥ ७६ ॥

यस्य यस्य रमणस्य मे गुणा
येन येन वशगां करोति माम् ।
येन येन हि समेति दर्शनं
तेन तेन वशगां करोति माम् ॥ ७७ ॥

आदौ पादस्य यत्र स्यात् समावेशः समाक्षरः ।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥ ७७ ॥
विष्णुः सृजति भूतानि विष्णुः संहरति प्रजाः ।
विष्णुः प्रसूते त्रैलोक्यं विष्णुर्लोकाधिदैवतम् ॥ ७८ ॥
पादस्यान्तं पदं यच्च द्विर्द्विरेकमिहोच्यते ।
पादन्त्वाम्रेडितं नाम विज्ञेयं निपुणैर्यथा ॥ ७९ ॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः
यथाभिधानं स्मरणं पदे पदे ।
यथा च ते ध्यानमिदं पुनः पुनः
तथागता ते रजनी विना विना ॥ ८० ॥

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः ।
चतुर्व्यवसितं नाम तद्विज्ञेयं बुधैर्यथा ॥ ८१ ॥

यथा—

सावारणानामसमेव कालः
सावारणानामसमेव कालः ।
सावारणानामसमेव कालः
सावारणानामसमेव कालः ॥ ८२ ॥

नानारूपैः स्वैर्यत्र यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं पण्डितैर्यथा ॥ ८३ ॥

[1]हली बली लली माली शूली जाली लली जली ।
बलो बलोच्चलोलाक्षो मुसली त्वाभिरक्षतु ॥ ८४ ॥

[2]असौ हि रामारतिविग्रहः प्रिया
रहः प्रगल्भारमणं रहोगतम् ।
रतेन रात्रिं रमयेत् परेण वा
न चेदुदेष्यत्यरुणः पुरो रिपुः ॥ ८५ ॥

स पुष्कराक्षः क्षतजीक्षिताक्षः
क्षरन्क्षतेभ्यः क्षतजन्दुरीक्षः ।
क्षतैर्गवाक्षैरिव संवृत्ताक्षः
साक्षात् सहस्राक्ष इवावभाति ॥ ८६ ॥

एभिरर्थक्रियापेक्षैः कार्यं काव्यं तु लक्षणैः ।
अत ऊर्ध्वं तु वक्ष्यामि काव्यदोषांस्तथाविधान् ॥ ८७ ॥
अगूढमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषाः ॥८८॥
[3]पर्यायशब्दाभिहितं गूढार्थमभिसंज्ञितम् ।
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ॥ ८९ ॥

---

१ कपुस्तके मालायमकस्योदाहरणं यथा—
हली वली लली माली श्वलीलालसस्सली ।
कली नलोचनोलोढो मुसली त्वाभिरक्षतु ॥
२ श्लोकद्वयमेतत् खपुस्तके नोपलभ्यते ।
३-एते सार्धपञ्चश्लोकाः कपुस्तके नोपलभ्यन्ते ।

  

अर्थहीनं त्वसम्बद्धं सा त्वशेषार्थमेव च ।
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥ ९० ॥

(वि) वक्षितोऽन्य एवार्थो यत्रान्यार्थेन भिद्यते ।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविचक्षणाः ॥ ९१ ॥

एकार्थस्याभिधानं यत् तदेकार्थमिति स्मृतम् ।
अभिप्लुतार्थं विज्ञेयं यत् पादेन समस्यते ॥ ९२ ॥

न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम् ।
वृत्त (दोषो) भवेद्यत्र विषमं नाम तद्भवेत् ॥ ९३ ॥

अनुप्रतिष्ठाशब्दं यत् तद्विसन्धीति काशितम् ।
शब्दहीनं च विज्ञेयमशब्दस्य च योजनात् ॥ ९४ ॥

एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः ।
एत एव विपर्यस्ता गुणाः काव्येषु कीर्त्तिताः ॥ ९५ ॥

श्लेषः प्रसादः समता समाधिः माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते ॥९६॥

विचार्यग्रहणं वृत्या स्फुटश्चैव स्वभावतः
स्वतः सुप्रतिबन्धश्च श्लिष्टं तत्परिकीर्त्यते ॥ ९७ ॥

ईप्सितेनार्थजातेन[1] सम्बद्धानुपरस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥ ९८ ॥

अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसम्बोधात् प्रसादः परिकीर्त्यते ॥ ९९ ॥

अन्योन्यसदृशं यत्र तथा ह्यन्योन्यभूषणम् ।
अलङ्कारगुणाश्चैव समासात् समता यथा ॥ १०० ॥

---

१ कपुस्तके श्लोकोऽयं नोपलभ्यते ।
२ खपुस्तके समतालक्षणं यथा—
नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
न दुर्बोधा तैश्च कृता समत्वात् समता मता ॥

[1]उपमास्वियहिष्टानां (?) अर्थानां यत्नतस्तथा ।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥ १०१ ॥
बहुशो यच्छ्रुतं वाक्यं उक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥ १०२ ॥
अव[2]गीताविहीनोपि स्यादुदात्तावभावकः ।
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम् ॥ १०३ ॥
सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥ १०४ ॥
यस्या[3]र्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरं प्रयोगस्य साऽर्थव्यक्तिरुदाहृता ॥ १०५ ॥
अ[4]नेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः ।
उपेतमतिचित्रार्थैः उदात्तं तच्च कीर्त्यते ॥ १०६ ॥
यो[5] मनश्श्रोत्रविषयः प्रसादजनको भवेत् ।
शब्दबन्धो प्रयोगेण स कान्त इति भण्यते ॥ १०७ ॥
एवमेते ह्यलङ्कारा गुणा दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनः वक्ष्यामि रससंश्रयम् ॥ १०८ ॥

---

१ समाधिलक्षणं खपुस्तके यथा—
अभियुक्तैर्विशेषस्तु योऽर्थस्यैवोपलभ्यते ।
तेन चार्थेन सम्पन्नः समाधिः परिकीर्त्यते ॥
२ खपुस्तके ओजसः लक्षणं यथा—
समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते ॥
३ अर्थव्यक्तेर्लक्षणं खपुस्तके—
सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥
४ उदात्तलक्षणं खपुस्तके—
दिव्यभावपरीतं यच्छृङ्गाद्भुतप्रयोजितम् ।
अनेकभावसंयुक्तमुदारं तत् प्रकीर्तितम् ॥
५ कान्तिलक्षणं खपुस्तके यथा—
यन्मनः श्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ।

लघ्वक्षरप्रायकृतं उपमारूपकाश्रयम् ।
काव्यं कार्यं तु काव्यज्ञैः वीररौद्राद्भुताश्रयम् ॥ १०९ ॥
गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्रौद्रवीराभ्यां यदाधर्षणजं भवेत् ॥ ११० ॥
रूपदीपकसंयुक्तं भार्यावृत्तसमाश्रयम् ।
शृङ्गारे रसकार्यं तु काव्यं स्यान्नाटकाश्रयम् ॥ १११ ॥
उत्तरोत्तरसंयुक्तं वीरे काव्यं तु यद्भवेत् ।
जगत्यातिजगत्यां वा संकृत्यां वापि तद्भवेत् ॥ ११२ ॥
तथैव युद्धसंस्फेटा उत्कृत्यां सम्प्रकीर्तितौ ।
करुणे शक्वरी ज्ञेया तथैवातिधृतिर्भवेत् ॥ ११३ ॥
यद्वीरे कीर्तितं च्छन्दः तद्रौद्रेऽपि प्रयोजयेत् ।
शेषाणामर्थयोगेन च्छन्दः कार्यं प्रयोक्तृभिः ॥ ११४ ॥
त्रिविधं ह्यक्षरं काव्यं विज्ञेयं नाटकाश्रयम् ।
ह्रस्वं दीर्घं प्लुतश्चैव रसभावविभावकम् ॥ ११५ ॥
एकमात्रं भवेद् ह्रस्वं द्विमात्रं दीर्घमिष्यते ।
प्लुतं चैव त्रिमात्रं स्यादक्षरं स्वरयोजनात् ॥ ११६ ॥
स्मृतं चास्रयुते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥ ११७ ॥
अकारस्तु स्मृते कार्ये ऊकारश्चाप्यसूचिते ।
परिदेविते तु हाकार ओङ्कारोऽध्ययने तथा ॥ ११८ ॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
काव्ययोगेषु सर्वेषु ह्यकाराणि कृतो जयेत् ॥ ११९ ॥
ये बन्धा पूर्वमुद्दिष्टा विषमार्धसमाः समाः ।
उदारशब्दैर्मधुरैः कार्यास्तेऽर्थवशानुगाः ॥ १२० ॥

शब्दानुदारमधुरान् प्रमदाभिनेयान्
नाट्याश्रयान् कृतिषु प्रयतेत कर्तुम् ।
तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ १२१ ॥

चेक्रीडितप्रकृतिभिर्विकृतैस्तु शब्दै-
युक्ता न भान्ति ललिता भरतप्रयोगाः ।
कृष्णाजिनाक्षरुरुचर्मधुरैः घृताक्तै-
र्विश्रया द्विजैरिव कमण्डलुदण्डहस्तैः ॥ १२२ ॥
मृदुललितपदार्थं गूढशब्दार्थहीनं
बुधजनसुखयोग्यं बुद्धिमन्नृत्तयोग्यम् ।
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥ १२३ ॥

इति भारतीये नाट्यशास्त्रे वागभिनयो नाम सप्तदशोऽध्यायः ।

---

## अथ अष्टादशोऽध्यायप्रारम्भः ॥

एवं तु संस्कृतं पाठ्यं मया प्रोक्तं द्विजोत्तमाः ।
प्राकृतस्यापि पाठ्यस्य संप्रवक्ष्यामि लक्षणम् ॥ १ ॥
एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ २ ॥
त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः ।
समानशब्दं विभ्रष्टं देशीगतमथापि च ॥ ३ ॥
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसम्पन्नम् ।
प्राकृतबन्धेष्वेवं संस्कृतमिव प्रयोगमुपयाति ॥ ४ ॥
ये वर्णाः संयोगात् स्वरवर्णान्यन्त्वन्यूनतां वापि
गच्छन्ति पदन्यस्तास्ते विभ्रष्टा इति ज्ञेया ॥ ५ ॥

ए[1] ओ आरपराणिअकारपरीचवा अएणायिवसआरमंसिमाइत-
वर्गतवर्गनिगणावंच्छातिकटतदवयवालोत्सवअयचसेवहतिसरा ॥
खप्पतुधळाऊणइहथ्थउषतिअंअमुचंताउच्चउरयरोहे ।
णहुंतोअवअएणंथिमोहूणभ्रभ्रवेभ्रवरुभ्रुद्रुगचन्द्ररांरंसुकगतिदवाण
अणिच्चळोपजमपिओसरोहोलऋषी ॥ ६–८ ॥

---

१ सर्वेष्वादर्शपुस्तकेषु एते श्लोकाः अतीवास्फुटा दृश्यन्ते ।

इति च षकारो नित्यं बोद्धव्यः षट्पदादियोगे तु ।
किलशब्दो रेफान्तो भवति, तथा क्खुत्ति खलुशब्दः ॥ ९ ॥
ड इति भवति टकारो भटकुटकुटितटाद्येषु ।
सत्वञ्च भवति शषयोः सर्वत्र तथाहि सस आदेशः ॥ १० ॥
अस्पष्टश्च दकारो भवति अनादौ तकार इतराद्ये ।
बडवा तडागतुल्यो भवति डकारोऽपि लकारः ॥ ११ ॥
पधमधुशब्दे च तथा धकारवर्णो हकारतां याति ।
सर्वत्र च प्रयोगे भवति नकारोऽपि च णकारः ।
आपाणं आवाणं भवति पकारे वत्वयुक्तेन ॥ १२ ॥
अयथातथादिकेषु थकारवर्णो व्रजति हत्वम् ।
परुषं फरुसं विद्यात् पकारवर्णोऽपि फत्वमुपयाति ॥ १३ ॥
यस्तु मृगः सोऽपि मओ यस्तु मृतः सोऽपि तथैव ।
ओकारत्वं गच्छत्यौकारश्चौषधादिषु नियुक्तः ॥ १४ ॥
प्रचयाचिराचलादिषु चकारवर्णोऽपि च यकारः ।
अपरस्वरनिष्पन्ना ह्येवं प्राकृतसमाश्रया वर्णाः ॥ १५ ॥
संयुक्तानां च पुनर्वक्ष्ये परिवृत्तिसंयोगम् ।
श्चत्सप्सां च्छ इति ध्यह्ययोर्भवति तु ज्झकारः ॥ १६ ॥
ष्टः ट्ठः स्तः त्थः ष्णस्नक्ष्णां ण्हः क्षः खकाररूपो हि ।
आश्चर्यं मात्सर्यं चेत्यनयो र्यस्य रियं च तथा ॥ १७ ॥
उत्साहश्चोच्छाहो पथ्यं पच्छं च विज्ञेयम् ।
तुभ्यं तुज्झं मह्यं मज्झं विन्ध्यश्च भवति विंज्झ इति ॥ १८ ॥
हृष्टो दल्ल इति स्यात् हस्तोऽपि हत्थ इत्येवम् ।
ग्रीष्मो गिम्हो च तथा श्लक्ष्णं लण्हं सदा तु विज्ञेयम् ॥ १९ ॥
कृष्णः कण्हो च भवेत् यक्षो जक्खो च पलङ्क पर्यङ्के ।
विपरीतमयोगेन ब्रह्मादौ स्यात् बृहस्पतौ फत्वम् ॥ २० ॥
यज्ञश्च भवति जह्णो भीष्मो भिम्मोत्ति विज्ञेयः ।
उपरिगते तोऽधस्तात् वा भवेत् ककारादिकस्तु यो वर्णः ॥२१॥
स हि संयोगविहीनः शुद्धं कार्यं प्रयोगेऽस्मिन् ।

एवमेव तु विज्ञेयं प्राकृतं संस्कृतं तथा ॥ २२ ॥
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम् ।
भाषा चतुर्विधा ज्ञेया देशरूपप्रयोगतः ॥ २३ ॥
संस्कृतं प्राकृतञ्चैव यत्र पाठ्यं प्रयुज्यते ।
अतिभाषार्यभाषा च जातिभाषा तथैव च ॥ २४ ॥
तथा जात्यन्तरी चैव भाषा नाट्यप्रकीर्तिता ।
अतिभाषा तु देवानामार्यभाषा तु भूभुजाम् ॥ २५ ॥
संस्कारपाठ्यसंयुक्ता सम्यङ्न्यायप्रतिष्ठिता ।
द्विविधा जातिभाषा च प्रयोगे समुदाहृता ॥ २६ ॥
म्लेशशब्दोपचारा च भारतं वर्षमाश्रिता ।
अथ या जात्यन्तरीभाषा ग्राम्यारण्यपशूद्भवा ॥ २७ ॥
नानाविहगजा चैव नाट्यधर्मी प्रयोगतः ।
जातिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम् ॥ २८ ॥
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम् ।
धीरोद्धते धीरललिते धीरोदात्ते तथैव च ॥ २९ ॥
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ।
एषामेव तु सर्वेषां नायकानां प्रयोगतः ॥ ३० ॥
कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेत् ।
ऐश्वर्येण प्रमत्तस्य दारिद्र्येण प्लुतस्य च ॥ ३१ ॥
उत्तमस्यापि पठतः प्राकृतं सम्प्रयोजयेत् ।
व्याजलिङ्गप्रतिष्ठानां श्रमणानां तपस्विनाम् ॥ ३२ ॥
भिक्षुचाष्टचराणाञ्च प्राकृतं सम्प्रयोजयेत् ।
बाले ग्रहोपसृष्टे स्त्रीणां स्त्रीप्रकृतौ तथा ॥ ३३ ॥
नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते ।
परिव्राण्मुनिशाक्येषु चैक्षषु(?)श्रोत्रियेषु च ॥ ३४ ॥
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ।
राज्ञश्च गणिकायाश्च शिल्पकार्यास्तथैव च ॥ ३५ ॥
कार्यावस्थान्तरकृतं योज्यं पाठ्यन्तु संस्कृतम् ।

सन्धिविग्रहसम्पन्नं तथा चाप्यशुभाशुभम् ॥ २६ ॥
ग्रहनक्षत्रचरितं खगानां रुतमेव च ।
सर्वमेतद्धि विज्ञेयं कार्यबन्धे शुभाशुभम् ॥ २७ ॥
नृपपत्न्या भवेत् पाठ्यं संस्कृतं द्विजसत्तमाः ।
क्रीडार्थं सर्वलोकस्य प्रयोगस्य सुखाश्रयम् ॥ २८ ॥
क्रीडालीलार्थकं[1] चैव पाठ्यं वेश्यासु संस्कृतम् ।
लोकोपचारज्ञानार्थं[2] क्रीडार्थं पार्थिवस्य तु ॥ २९ ॥
निर्दिष्टं शिल्पकार्येषु नाटके संस्कृतं वचः ।
आम्नायसिद्धं सर्वासां शुभं चाप्सरसां वचः ॥ ३० ॥
संसर्गाद्देवतानां वै तद्धि लोकोऽनुवर्तते ।
छन्दतः प्राकृतं वाक्यं स्मृतमप्सरसां भुवि ॥ ३१ ॥
मानुषाणाञ्च कर्त्तव्यं कारणार्थव्यपेक्षया ।
न वर्वरकिरातान्ध्रद्रमिलाद्यासु जातिषु ॥ ३२ ॥
नाट्ययोगे[3] तु कर्तव्यं काव्यं भाषासमाश्रयम् ।
जातिष्वेतासु सर्वासु श्रद्धासु च द्विजोत्तमाः ॥ ३३ ॥
सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः ॥ ३४ ॥
नानादेशसमुत्थं हि काव्यं भवति नाटके ।
मागध्यवन्तिजा प्राच्या सूरशेन्यर्धमागधी ॥ ३५ ॥
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ।
शबराभीरचण्डालसचरद्रविडोद्रजाः ॥ ३६ ॥
हीना वनेचराणाञ्च विभाषा नाटके स्मृता ।
मागधी तु नराणाञ्चैवान्तःपुरनिवासिनाम् ॥ ३७ ॥
चेटानां राजपुत्राणां श्रेष्ठीनाञ्चार्धमागधी ।
प्राच्या विदूषकादीनां योज्या भाषा अवन्तिजा ॥ ३८ ॥
नायिकानां सखीनाञ्च सौरसेन्यविरोधिनी ।

---

१ कलाभ्यासाश्रयं-ख । २ कलो०-ख ।
३ इदं श्लोकचतुष्टयं कपुस्तके नास्ति ।

यौधनागरिकादीनां दाक्षिणात्या च दीव्यताम् ॥ ३९ ॥
बह्लीकभाषोदीच्यानां खसानाञ्च स्वदेशजा ।
शबराणां शकादीनां तत्स्वभावश्च यो गणः ॥ ४० ॥
शकारभाषा योक्तव्या पाञ्चाली पुल्कसादिषु ।
अङ्गारकारव्याधानां काष्ठपत्रोपजीविनाम् ॥ ४१ ॥
योज्या शबरभाषा तु किञ्चिद्वानौकसी तथा ।
गजाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ॥ ४२ ॥
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
नकार बहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ४३ ॥
आभीरोक्तिः शाबरी स्यात् द्राविडी द्रविडादिषु ।
सुरङ्गबनकादीनां औष्ट्रिकानाञ्च रक्षताम् ॥ ४४ ॥
व्यसने नायिकादीनां आत्मरक्षासु मागधी ।
गङ्गासागरमध्ये तु ये देशाः संप्रकीर्त्तिताः ॥ ४५ ॥
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ।
सुराष्ट्रावन्तिदेशेषु वेत्रवत्यन्तरेषु च ॥ ४६ ॥
ये देशास्तेषु कुर्वीत चकारबहुलामिह ।
हिमवत्सिन्धुसौवीरान् येऽन्यदेशान् समाश्रिताः ॥ ४७ ॥
उकारबहुलां तेषु नित्यं भाषां प्रयोजयेत् ।
एवं भाषाविधानन्तु कर्तव्यं नाटकाश्रयम् ॥ ४८ ॥
अथ नोक्तं मया यच्च लोकात् ग्राह्यं बुधैस्तु तत् ॥ ४९ ॥

इति भारतीये नाट्यशास्त्रे भाषाविधानं नाम अष्टादशोऽध्यायः ॥

## एकोनविंशोऽध्यायप्रारम्भः ।

एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः ।
पुनर्वाक्यविचारं तु लौकिकं संनिबोधत ॥ १ ॥
उत्तमैर्मध्यमैर्नीचैर्ये सम्भाष्या यथा नराः ।
समानोत्कृष्टहीनाश्च नाटके तान्निबोधत ॥ २ ॥

---

१ ओं०—क ।

देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥ ३ ॥
देवाश्च लिङ्गिनश्चैव नानाश्रुतिधराश्च ये ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ४ ॥
आर्येति ब्राह्मणं ब्रूयात् महाराजेति पार्थिवम् ।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥ ५ ॥
छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः ।
तत्क्षाम्यं तु महीपालैर्यस्मात् पूज्या द्विजोत्तमाः ॥ ६ ॥
ब्राह्मणैः सचिवो वाच्यो ह्यमात्य सचिवेति वा ।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ७ ॥
समैः संभाषणं कार्यं येन नाम्ना तु संज्ञितः ।
हीनैः सपरिहारं तु नाम्ना संभाष्य उत्तमः ॥ ८ ॥
नियोगाधिकृता ये तु पुरुषा योषितस्तथा ।
कारकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥ ९ ॥
मान्यो भावेति वक्तव्यो किञ्चिदूनस्तु मारिषः ।
समानो हि वयस्येति हो हं वा इति वाऽधमः ॥ १० ॥
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
तपस्वी च प्रशान्तश्च साधो इति हि शब्द्यते ॥ ११ ॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवं हेपूर्वञ्चाधमं वदेत् ॥ १२ ॥
यद्यस्य कर्म शिल्पं वा विद्या वा जातिरेव वा ।
स तेन नाम्ना सम्भाष्यो नाटकादौ प्रयोक्तृभिः ॥ १३ ॥
वत्सपुत्रकतातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वाऽथ पित्रा वा गुरुणाऽथवा ॥ १४ ॥
संभाष्याः शाक्यनिर्ग्रन्था भदन्तेति प्रयोक्तृभिः ।
आमन्त्रणेषु पाषण्डाः शेषास्तु समयाश्रितैः ॥ १५ ॥
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा ।
भट्टेति सार्वभौमस्तु नित्यं परिजनेन हि ॥ १६ ॥

राजन्नित्यृषिभिर्वाच्यः ह्यपत्यप्रत्ययेन वा ।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः ॥ १७ ॥
विदूषकेन राज्ञी च चेट्या च भवतीत्यपि ।
नाम्ना वयस्येत्यपि वा राज्ञा वाच्यो विदूषकः ॥ १८ ॥
सर्वस्त्रीभिः पतिर्वाच्यः आर्यपुत्रेति यौवने ।
अन्यदा पुनरार्येति वाच्यो राज्ञ्यापि भूपतिः ॥ १९ ॥
आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः ।
पुरुषाभाषणं ह्येवं नाट्ये कार्यं प्रयोक्तृभिः ॥ २० ॥
पुनस्त्रीणाञ्च वक्ष्यामि संभाषां नाटकाश्रयाम् ।
तपस्विन्यो देवताश्च वाच्या भगवतीति च ॥ २१ ॥
गुरुभार्या च वक्तव्या स्थानीया भवतीति च ।
गम्या भद्रेति वक्तव्या वृद्धा वाच्येति नाटके ॥ २२ ॥
राजपत्न्यश्च संभाष्या सर्वाः परिजनेन तु ।
भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः ॥ २३ ॥
देवीति महिषी वाच्या राज्ञा परिजनेन च ।
भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः ॥ २४ ॥
स्वसेति भगिनी वाच्या ज्येष्ठा वत्सेति चानुजा ।
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था व्रतिनी च या ॥ २५ ॥
पत्नी चार्येति संभाष्या पितुर्नाम्ना सुतस्य सा ।
समानाभिस्तथा सख्यो हला भाष्याः परस्परम् ॥ २६ ॥
प्रेष्या हञ्जेति वक्तव्या स्त्रियो या तूत्तमा भवेत् ।
अज्जुकेति भवेद्वेश्या वाच्या परिजनेन तु ॥ २७ ॥
या त्वत्र वृद्धा सा त्वत्ता भाष्या नाट्यजनेन च ।
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ॥ २८ ॥
पुरोधस्सार्थवाहानां नार्यस्त्वार्येति सर्वदा ।
तल्लिङ्गस्थानि नामानि कार्याणि कविभिर्द्विजाः ॥ २९ ॥
औत्पत्तिकानि यानि स्युर्न प्रत्याख्यातानि नाटके ।
ब्राह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ॥ ३० ॥

काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च ।
दत्तप्रायाणि नामानि वणिजान्तु प्रयोजयेत् ॥ ३१ ॥
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ।
विजयार्थानि नामानि राज्ञां स्त्रीणाञ्च कारयेत् ॥ ३२ ॥
दत्ता मित्रा च सेनेति वेश्यानामानि कारयेत् ।
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ॥ ३३ ॥
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ।
गम्भीरार्थानि नामानि योजयेदुत्तमेषु च ॥ ३४ ॥
यस्मान्नामानुसदृशं कर्म तेषां भविष्यति ।
जातिचेष्टानुरूपाणि शेषाणामपि कारयेत् ॥ ३५ ॥
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ।
एवं नामाभिधानं तु कर्तव्यं कविभिस्त्वथ ॥ ३६ ॥
एवं भाषाविधानादि ज्ञात्वा सर्वमशेषतः ।
ततः पाठ्यं प्रयुञ्जीत षडलङ्कारसंयुतम् ॥ ३७ ॥

पाठ्यगुणानिदानीं वक्ष्यामः ।

तद्यथा सप्तस्वरा, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलङ्काराः, षडङ्गानि, तेषामिदानीं लक्षणान्यभिव्याख्यास्यामः ।

तत्र सप्त स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषधाः । एते रसेषूपपाद्याः यथा—

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु तु ॥ ३८ ॥
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ।
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ॥ ३९ ॥
त्रीणि स्थानान्युरःकण्ठशिरांसीति भवन्त्यपि ।
शारीर्यामथ वीणायां त्रिभ्य स्थानेभ्य एव च ॥ ४० ॥
उरसः शिरसः कण्ठात् स्वरः काकुः प्रवर्तते ।
आभाषणं तु दूरस्थे शिरसा संप्रयोजयेत् ॥ ४१ ॥
नातिदूरेऽपि कण्ठेनाप्युरसा चापि पार्श्वतः ।

उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः ॥ ४२ ॥
कण्ठेन शमनं कुर्यात्पाठ्यं योगेषु सर्वदा ।
उदात्ताश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥ ४३ ॥

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैः, वीररौद्राद्भुतेषूदात्तकम्पितैः, करुणवात्सल्यभयानकेषूदात्तस्वरितकम्पितैः वर्णैः पाठ्यमुपपादयेदिति ।

द्विविधा काकुः साकांक्षा निराकाक्षा चेति वाक्यस्य साकांक्षनिराकांक्षत्वात् ।

अनियुक्तार्थकं वाक्यं साकाङ्क्षमिति संज्ञितम् ।
नियुक्तार्थंतु यद्वाक्यं निराकाङ्क्षं तदुच्यते ॥ ४४ ॥

अयुक्तं नाम निर्यातितवर्णालङ्कारं कर्णोरःस्थानगतं, निराकाङ्क्षं नाम नियुक्तार्थनिर्यातितवर्णालङ्कारं शिरःस्थानगतं मंद्रादितारागतमिति ।

अथ षडलङ्काराः ॥

उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ ।
पाठ्यस्यैते ह्यलङ्काराः लक्षणञ्च निबोधत ॥ ४५ ॥

उच्चो नाम शिरस्थानगतस्तारस्वरः, स च दूरस्थाभाषण विस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनार्थं वाद्येषु । दीप्तो नाम शिरःस्थानगतस्तारतरः, स चाक्षेपकलहविवादामर्षोत्कुष्टाधर्षणाक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भत्सनादिषु । मन्द्रो नाम उरःस्थानगतो निर्वेदग्लानिशङ्काचिन्तौत्सुक्यदैन्यावेगव्याधिगाढशस्त्रक्षतमूर्च्छामदादिषु । नीचो नाम उरःस्थानगतो मन्द्रतरः स्वभावाभाषणव्यधितपथिश्रान्तत्रस्तपतितमूर्च्छितादिषु । द्रुतो नाम कण्ठगतस्खलितवेल्लनमदनभयशीतज्वरत्रस्तायस्तागूढकार्यवेदनादिषु । विलम्बितो नाम कण्ठस्थानगतः मन्द्रः शृङ्गारवितर्कितविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जनविस्मयदोषानुकीर्तनदीर्घरोषनिपीडनादिषु ।

अत्रानुवंश्याः श्लोका भवन्ति ।

उत्तरोत्तरसंजल्पे परुषाक्षेपणे तथा ।

---

१–ह्रस्व–ख ।

तीक्ष्णरूक्षाभिनयने आवेगे क्रन्दिते तथा ॥ ४६ ॥
परोक्षस्य समाह्वाने तर्जने त्रासने तथा ।
दूरस्थाभाषणे चैव तथा निर्भत्सनेषु च ॥ ४७ ॥
भावेष्वेतेषु नित्यं हि नानारससमश्रयात् ।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः ॥ ४८ ॥
मल्ले च मर्दने चैव भयार्ते चित्तविप्लुते ।
मन्द्रा द्रुता च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥ ४९ ॥
द्दष्टानष्टानुसारेण इष्टानिष्टश्रुतौ तथा ।
इष्टार्थख्यापने चैव चिन्तयाने तथैव च ॥ ५० ॥
विस्मयामर्षयोश्चैव हर्षे च परिदेविते ।
उन्मादेऽसूयने चैव उपालम्भे तथैव च ॥ ५१ ॥
अव्यक्तार्थे प्रदाते च तथालोके तथैव च ।
उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते ॥ ५२ ॥
विक्षते व्याधिते त्वङ्गे दुःखशोके तथैव च ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा च वै भवेत् ॥ ५३ ॥
यानि सौम्यार्थयुक्तानि सुस्वभावकृतानि च ।
मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ॥ ५४ ॥
यानि स्युस्तीक्ष्णरूपाणि दीप्ता चोच्चा च तेष्वऽपि ।
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ॥ ५५ ॥
लघ्वक्षरप्रायकृते गुर्वक्षरकृते तथा ।
गूढार्थवचने चैव.................. ॥ ५६ ॥
उच्चा दीप्ता च कर्तव्या काकुस्तत्र प्रयोक्तृभिः ।
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ॥ ५७ ॥
वीररौद्राद्भुतेषूच्चा दीप्ता चापि प्रशस्यते ।

---

१ हिते–क । २ द्द०–ख । ३ ०ताग्रस्ते–ख ।
४ सार्धोऽयं श्लोकः खपुस्तके नोपलभ्यते ।
५ श्लोकद्वयमिदं कपुस्तके न दृश्यते ।
६ अयं त्रुटित श्लोकः खपुस्तके नास्ति ।

भयानके सबीभत्से द्रुता नीचा च कीर्तिता ।
एवं भावरसोपेता काकुर्योज्या प्रयोक्तृभिः ॥ ५८ ॥

अथाङ्गानि ।

विच्छेदोऽर्पणे विसर्गोऽनुबन्धो दीपनं प्रशमनमिति षडङ्गानि। तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलावर्णस्वरेणापूरयदिव रङ्गं यत्पष्यते। विसर्गो नाम वाक्यन्यासः। अनुबन्धो नाम पदान्तरेष्वविच्छेदा-नुच्छ्वासनं वा । दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरञ्च । प्रशमनं नाम तारं गतानां स्वराणामवैस्वर्येणावतरणमिति। एषाञ्च रसगतः प्रयोगः । तत्र हास्यशृङ्गारयोरर्पणविच्छेदनदीपनप्रशमनयुक्तं वाक्यं कार्यं, करुणवीराद्भुतेषु समाकाङ्क्षाविच्छेदप्रशमनार्पणदीपनानुबन्धनबहुलं पाठ्यं प्रयोज्यं, बीभत्सभयानकयोर्विच्छेदार्पणयुक्तमिति सर्वेषाञ्चैतेषां मन्द्रमध्यतार व्यवस्थायां स्थानगतः प्रयोगः । तत्र दूरस्थाभाषणे तारशिरसो नातिदूरे मध्यं कण्ठेन पार्श्वतो मन्द्रमुरसा प्रयोजयेत् पाठ्यमिति । मन्द्रात्तारंगच्छात्ताराद्वा(?) मन्द्रमिति । एषाञ्च द्रुतमध्यविलंबितासु ये वर्णा रसेषूपपाद्या तत्र हास्यशृङ्गारयोर्मध्यलयः करुणे विलंवितो वीररौद्राद्भुतबीभत्सभयानकेषु द्रुत इति ।

अथ विरामः। अर्थसमाप्तौ कार्यवशान्न च्छन्दोवशात् दृश्यन्ते हि एकद्वित्रिचतुरक्षरा विरामाः । यथा --

किं गच्छ मा विश सुदुर्जनवारितोऽसि
कार्यं त्वया न मम सर्वजनोपभुक्तः ।
सुचासुचाङ्कुरगतेऽत्र तथोपचारे
स्वल्पाक्षराणि हि पदानि भवन्ति काव्ये ॥ ५९ ॥

एवं विरामः प्रयत्नतोऽनुष्ठेयः । कस्माद्विरामार्थानुदर्शकः भवति अपि च श्लोकः ।

विरामे तु प्रयत्नस्तु नित्यं कार्यः प्रयोक्तृभिः ।
तस्मादभिनये ह्यस्मादर्थापेक्षी यतः स्थितः ॥ ६० ॥

यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टिसमन्वितः ।

वाचिकाभिनयः कार्यो विरामैरर्थदर्शिभिः ॥ ६१ ॥
प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ ।
बीभत्से कुत्सितत्त्वाच्च भवतः कुञ्चितौ करौ ॥ ६२ ॥
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ ।
अद्भुते विस्मयस्तब्धौ भयाच्चैव भयानके ॥ ६३ ॥
एवमादिषु सर्वेषु अधिकारेषु हस्तयोः ।
अलङ्कारविरामाभ्यां साध्यन्ते ह्यर्थनिश्चयाः ॥ ६४ ॥
ये विरामाः स्मृता एते तेष्वलङ्कार इष्यते ।
समाप्तेऽर्थे पदे वापि तथा प्राणवशेन च ॥ ६५ ॥
पदवर्णसमासे च द्रुते बह्वर्थसङ्कटे ।
कार्यो विरामः पादान्ते तथा प्राणवशेन वा ॥ ६६ ॥
शेषमर्थवशेनैव विरामं सम्प्रयोजयेत् ॥ ६७ ॥

अत्रानुगतानि चत्वार्यक्षराणि रसभावानुगतानि निकृष्टाण्यक्षराणि चोद्बोध्यानि । तद्यथा—

आकारे करसंयुक्तमेकारे कारसंयुत्तम् ।
व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु भवेदिह ॥ ६८ ॥
विषादे च वितर्के च प्रश्ने वाऽमर्षणे तथा ।
कलाकालप्रमाणेन[1] कार्यं पाठ्यं प्रयोक्तृभिः ॥ ६९ ॥
शेषाणामर्थयोगेन विरामो विरमेदिह ।
एकद्वित्रिचतुष्पञ्च षट्कलञ्च विलम्बितम् ॥ ७० ॥
विरामे च विलम्बे च यदा गुर्वक्षरं भवेत् ।
षण्णां पदानां परतो लम्बनं[2] न विधीयते ।
अथवा करणोपेतं प्रयोगं कार्यमेव च ॥ ७१ ॥
समीक्ष्य वृत्ते कर्त्तव्यो विरामो रसभावतः ।
ते विरामाः स्मृताः काव्ये वृत्तपादसमुद्भवाः ॥ ७२ ॥
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशास्तदा ।

---

१ कलानां—ख । २ ङ्ग०—क ।

नापशब्दं पठेत् तज्ज्ञो भिन्नवृत्तेन चैव हि ॥ ७३ ॥
विश्रमेणाविरामेषु न काकुरसहीनकम् ।
एवमेतत् स्वरकृतं कलाताललयान्वितम् ॥ ७४ ॥
व्यपेतं वाक्यशेषैस्तु लक्षणाढ्यं गुणान्वितम् ।
स्वरालङ्कारसंयुक्तं पठेत् काव्यं यथाविधि ॥ ७५ ॥
अलङ्कारविशेषा ये पाठ्यसंस्कृतसंश्रया ।
ते सर्वे सम्प्रकर्त्तव्याः स्त्रीणां पाठ्ये तु संस्कृते ॥ ७६ ॥
एवमेतत् स्वरयुतं कलाताललयान्वितम् ।
दशरूपविधाने तु योज्यं पाठ्यं प्रयोक्तृभिः ॥ ७७ ॥
उक्तं काकुविधानं तु यथावदनुपूर्वशः ।
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥ ७८ ॥

इति भारतीये नाट्यशास्त्रे वागङ्गाभिनये काकुस्वरव्यञ्जनो नाम एकोनविंशोऽध्यायः ।

## अथ विंशोऽध्यायः ।

कथयिष्याम्यहं विप्राः दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥
नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥ २ ॥
ईहामृगश्च विज्ञेयं दशमं नाट्यलक्षणम् ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३ ॥
सर्वेषामेव काव्यानां[२] मातृकावृत्तयः स्मृताः ।
आभ्यो विनिस्सृता ह्येतद्दशरूपं प्रयोगतः ॥ ४ ॥
जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः ।
यथा यथा वृत्तिभेदैः[३] काव्यबन्धा भवन्ति हि ॥ ५ ॥
ग्रामौ पूर्णस्वरौ द्वौ तु तथा वै षड्जमध्यमौ ।

१ श्लोकत्रयमेतत् खपुस्तके न दृश्यते ।
२ म्या०—ङ ।    ३ ०भेदा—ङ ।

सर्ववृत्तिविनिष्पन्नौ काव्यवन्धे तथा त्विमौ ॥ ६ ॥
ज्ञेयं प्रकरणञ्चैव तथा नाटकमेव च ।
सर्ववृत्तिविनिष्पन्नं नाट्यावस्थासमाश्रयम् ॥ ७ ॥
भाणःसमवकारश्च वीथी चेहामृगस्तथा ।
उत्सृष्टिकाङ्को व्यायोगो डिमः प्रहसनं तथा ॥ ८ ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥ ९ ॥
प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकञ्चैव ।
राजर्षिवंशचरितं तथा च दिव्याश्रयोपेतम् ॥ १० ॥
नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैश्चापि ।
अङ्कप्रवेशकाव्यं भवति हि तन्नाटकं नाम ॥ ११ ॥
नृपतीनां यच्चरितं नानारसभावचेष्टितैर्बहुधा ।
सुखदुःखोत्पत्तिकृतं तज्ज्ञेयं नाटकं नाम ॥ १२ ॥
नानावस्थान्तरितो बिन्दोः संहारमात्रमाधिकृत्य ।
कर्तव्याङ्केऽप्येवं स तु सम्यङ् नाटके तज्ज्ञैः ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैरसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्मात् भवेदङ्कः ॥ १४ ॥
अङ्कसमाप्तिः काव्यच्छेदो न बीजसंहारः ।
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् ॥ १५ ॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नविंदुः सोऽङ्क इति सदाऽवगन्तव्यः ॥ १६ ॥
ये नायका निगदितास्तेषां प्रत्यक्षचारिसंयोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥ १७ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्कः खलु वेदितव्यः सः ॥ १८ ॥

---

१ नानाबन्धसमाश्रयम्—ख, नानावस्थान्तराश्रयम्—ङ ।
२ ङपुस्तकेऽत्र एतदर्था आर्या दृश्यते । ३ तोटकं—ङ ।
४ अयं श्लोकः खपुस्तके नास्ति । ५ विकृष्टस्तु—ख ।

पञ्चावरा दशपरा ह्यङ्का स्युर्नाटके प्रकरणे च ।
निष्कामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः ॥ १९ ॥
क्रोधप्रसाद[2]शोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ[3] ।
अद्भुतसंश्रयदर्शनमङ्कप्रत्यक्षजानि स्युः ॥ २० ॥
युद्धं राज्यभ्रंशो मरणं नगररोधनञ्चैव ।
अप्रत्यक्षकृतानि प्रवेशकैः संविधेयानि ॥ २१ ॥
अङ्कप्रवेशके वा प्रकरणमाश्रित्य नाटकं वापि ।
न वधः तस्य स्यात् यत्र तु नायकः ख्यातः ॥ २२ ॥
अपसरणमेव कार्यं सन्धिर्वाग्रहणमेव वा नित्यम् ।
तैस्तैः कार्यविशेषैः प्रवेशकैः सूचकैश्चैव ॥ २३ ॥
एकादिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २४ ॥
एकाङ्केन कदाचित् वहूनि कार्याणि योजयेद्धीमान् ।
आवश्यकाविरोधेन तत्र काव्यानि कार्याणि ॥ २५ ॥
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्कामः ।
बीजार्थयुक्तियुक्तं कृत्वा काव्यं यथार्थरसम् ॥ २६ ॥
ज्ञात्वा दिवसांस्तान् क्षणयाममुहूर्तलक्षणोपेतान् ।
विभजेत् सर्वमशेषं पृथक् पृथक् काव्यमङ्केषु ॥ २७ ॥
दिवसावसानकार्यं यद्यङ्केनोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैः तद्विधातव्यम् ॥ २७ ॥
अङ्कच्छेदं कुर्यात् मासकृतं वर्षसाञ्चितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥ २९ ॥
यः कश्चित् कार्यवशात् गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्त्तव्यः पूर्ववत् तज्ज्ञैः ॥ ३० ॥
सन्निहितनायकोऽङ्कः कर्त्तव्यो नाटके प्रकरणे च ।

---

१ अयं श्लोकः खपुस्तके नास्ति । २ प्रमाद—ख । ३ ०त्साहौ—क । ४ ०वत०—ख ।

परिजनकथानुबन्धः प्रवेशके वापि कर्तव्यः ॥ ३१ ॥
अङ्कान्तरानुसारी[1] सङ्क्षेपमथाधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको भवति काव्येषु ॥ ३२ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रयोगमासाद्य कर्तव्यः[2] ॥ ३३ ॥
कालार्थान्तरसङ्गव्यत्यासारम्भकार्यविषयाणाम् ।
अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः ॥ ३४ ॥
बह्वाश्रयमप्यर्थं प्रवेशकैः सङ्क्षिपेच्च सन्धिषु च ।
बहुपूर्णपद्यवृत्तं जनयति खेदं प्रयोगस्य ॥ ३५ ॥
यत्रार्थस्य समाप्तिर्न भवेदङ्के प्रयोगबाहुल्यात् ।
बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः संविधातव्यः ॥ ३६ ॥
मध्यमपात्रैः कार्यो नित्यं विष्कम्भकस्तु विज्ञेयः ।
संस्कृतवचनानुगतः सङ्क्षिप्तार्थः प्रवेशकवत् ॥ ३७ ॥
शुद्धः सङ्कीर्णो वा द्विविधः खलु नाटके प्रयोगज्ञैः ।
मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यमकृतः ॥ ३८ ॥
अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटके वाऽपि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः ॥ ३९ ॥
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
ये तत्र कार्याः पुरुषाश्चत्वारः पञ्च वा ते स्युः ॥ ४० ॥
व्यायोगेहामृगसमवकारडिमसंज्ञितानि[3] काव्यानि ।
दशभिर्द्वादशभिर्वा कार्याणि न त्ववतरणम् ॥ ४१ ॥
कार्यं रङ्गे रथगजवाजिविमानानाम् ।
तेषामाकृतिवेषैर्विधानमुक्तं गतिनिचारैः ॥ ४२ ॥
अथवा पुस्तकृतानि तु गजवाजिविमानशैलयानानि ।
कर्तव्यानि विधिज्ञैस्तथा चाद्रव्यप्रहराणि ॥ ४३ ॥
यदि करुणोपपन्ना स्कन्धावारप्रवेशनं कुर्यात् ।

---

१ ०धिकारी—क। २ प्रवेशको नाम विज्ञेयः—ख।
३ एते पञ्च श्लोकाः खपुस्तके नोपलभ्यन्ते ।

कर्तव्यमन्त्रगमनं पुरुषैः षड्भिश्चतुर्भिर्वा ॥ ४४ ॥
अल्पपुरुषार्थवाहनमल्पपरिच्छेदमल्पसञ्चारम् ।
कार्यं दर्शनरूपं क्षतेन नटानां हि राज्यविधिः ॥ ४५ ॥
कार्यं गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ४६ ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ४७ ॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ४८ ॥
यत्र कविरात्मबुध्या वस्तु शरीरञ्च नाटकञ्चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमेतद् बुधैर्ज्ञेयम् ॥ ४९ ॥
यदनायकहार्यकार्यं[1] काव्यं प्रकरोत्यद्भुतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ ५० ॥
यन्नाटके मयोक्तं वस्तु शरीरं [2]रसाश्रयोपेतम् ।
तत् प्रकरणेऽपि योज्यं केवलमुत्पाद्यवस्तु स्यात् ॥ ५१ ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यदनेकविधं तज्ज्ञेयं प्रकरणं नाम ॥ ५२ ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् ।
बाह्यजनसम्प्रयुक्तं विज्ञेयं प्रकरणं तज्ज्ञैः ॥ ५३ ॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं कार्यं काव्यं प्रकरणे तु ॥ ५४ ॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेत न तत्र वेश्याङ्गना कार्या ॥ ५५ ॥
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमो भवेत्तत्र ।
अथ कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ ५६ ॥
यदि वा कारणयुक्त्या वेशकुलस्त्रीसङ्गमो न स्यात् ।

---

१ यदनर्थमपाहार्य—ख, यदनार्षमहार्यं—क ।
२ च वस्तुभेदाश्च—ख ।

अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥ ५७ ॥
प्रकरणनाटकविषये कविभिः पञ्चाद्या दशपराश्च ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ ५८ ॥
अङ्कान्तरालविहितः प्रवेशिकार्थक्रियामभिवीक्ष्य ।
सङ्क्षेपार्थः सन्धिष्वर्थानां संविधातव्यः ॥ ५९ ॥
अनयोश्च बन्धयोगादेको भेदः प्रयोक्तृभिर्ज्ञेयः ।
[1]प्रकरणनायकभेदादुत्पन्नं वस्तु नायको नृपतिः ॥ ६० ॥
अन्तःपुरसङ्गीतकवार्तामधिकृत्य कर्त्तव्या ।
प्रत्याख्यातस्त्वितरो वा [2]नाटकयोगे प्रकरणे च ॥ ६१ ॥
स्त्रीप्रायाचतुरङ्का ललिताभिनयात्मिका विहितार्था ।
प्रनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव ॥ ६२ ॥
[3]कामोपचारयुक्ता प्रसाधनक्रोधसंयुता चापि ।
नायकदूती चापि देवीसम्बन्धा नाटिका ज्ञेया ॥ ६३ ॥
अन्तर्भावगता ह्येषा भावयोरुभयोरपि ।
अथ दशैतानि रूपाणि इत्युदितानि तु ॥ ६४ ॥
प्रकरणनाटकनाटीलक्षणमुक्तं मया समासेन ।
वक्ष्याम्यतःपरमहं लक्षणयुक्तं समवकारम् ॥ ६५ ॥
देवासुरबीजकृतं प्रख्यातोदात्तनायकञ्चैव ।
त्र्यङ्कस्तदा त्रिकपटस्त्रिविद्रवः स्यात् त्रिशृङ्गारः ॥ ६६ ॥
द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च ।
वक्ष्याम्यस्यां विधिं यत्रान्या नाडिका कार्या ॥ ६७ ॥
अङ्कस्तु सप्रहसनः कालस्य यन्मुहूर्तमिति ।
तन्नाडिकाप्रमाणं यथोत्तमाङ्केषु संयोज्यम् ॥ ६८ ॥
या नाडिकेति संज्ञा कालविभागे क्रियाभिसम्पन्ना ।
कार्या च सा प्रयत्नाद्यथाक्रमेणैव शास्त्रोक्ता ॥ ६९ ॥
अङ्कस्तु सप्रहसनः सविद्रवः सकपटः सवीथ्यङ्गः ।

---

१ श्लोकोऽयं खपुस्तके नोपलभ्यते ।
२ नाटीसंज्ञाश्रिते काव्ये—ख । ३ राजो०—ख ।

द्वादशनाडिकयुक्तं प्रथमः कार्यो यथाक्षस्तु ॥ ७० ॥
कार्यस्तदा द्वितीयः समाश्रितो नाडिकाश्चतस्रस्तु ।
वस्तुप्रमाणविहितो द्विनाडिकः स्यात् तृतीयस्तु ॥ ७१ ॥
ज्ञेयन्तु नाडिकाख्यं मानं कालस्य यन्मुहूर्तार्धम्[१] ।
अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य ॥ ७२ ॥
अर्थं हि समवकारे ह्यप्रतिसन्धानमिच्छन्ति ॥ ७३ ॥
युद्धजलसम्भवो वा वाय्वग्निजलेन्द्रसम्भवो वाऽपि ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥ ७४ ॥
यस्तु गतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटाश्रयो ज्ञेयः ॥ ७५ ॥
त्रिविधश्चात्र विधिज्ञैः पृथक् पृथक् कार्ययोगविहितार्थः ।
त्रिविधाकृतिशृङ्गारो ज्ञेयो धर्मार्थकामकृतः ॥ ७६ ॥
यत्र तु धर्मे प्रार्थितमात्रं हितं भवति साधितं वहुधा ।
प्रतिनियमतपोयुक्तं ज्ञेयोऽसौ धर्मशृङ्गारः ॥ ७७ ॥
अर्थस्येच्छायोगात् बहुधा चैवार्थतोऽर्थशृङ्गारः ।
स्त्रीसम्प्रयोगविषयेष्वयथार्थमपीष्यतेऽभिरतिः ॥ ७८ ॥
कन्याविलोभनं वा प्राप्तं स्त्रीपुंसयोस्तु रम्यं वा ।
निभृतं वा सावेगं जानीयात् कामशृङ्गारम् ॥ ७९ ॥
उष्णिग्गायत्री वा यानि तथान्यानि बन्धकुटिलानि ।
वृत्तानि समवकारे कविभिर्नैव[२] प्रयोज्यानि ॥ ८० ॥
एवं कार्यस्तज्ज्ञैः सुखदुःखसमाश्रयः समवकारः ।
वक्ष्याम्यतःपरमहं लक्षणमीहामृगस्यापि ॥ ८१ ॥
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ।
सुविहितवस्तुनिबन्धो विप्रात्ययकारकश्चैव ॥ ८२ ॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च ।
सङ्क्षोभविद्रवकृतः सम्फेटकृतस्तथा चैव ॥ ८३ ॥
स्त्रीभेदनापहरणापमर्दसम्प्राप्तवस्तुशृङ्गारः ।

---

१ श्लोकार्द्धमिदं कपुस्तके नास्ति । २ सम्यक्—ख ।

यत्र[1] तु वधेप्सितानां वधोऽप्युदश्रयो भवेत्तु पुरुषाणाम् ॥८४॥
ईहामृगस्तु कार्यः ससमाहितकाव्यबन्धश्च ।
यद्वा योगे कार्यं ये पुरुषा ये रसाश्च निर्दिष्टाः ॥ ८५ ॥
ईहामृगेऽपि ते स्युः केवलममरस्त्रियो ह्यस्मिन् ।
किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ॥ ८६ ॥
ईहामृगस्य लक्षणमिदमित्युक्तं मया समासेन ।
डिमलक्षणं च भूयो लक्षणयुक्त्या प्रवक्ष्यामि ॥ ८७ ॥
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकोपेतः ।
षड्सलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥ ८८ ॥
शृङ्गारहास्यवर्जः शेषैरन्यैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्नानाभावान्वितश्चैव ॥ ८९ ॥
निर्घातचन्द्रसूर्योपरागसोल्कावपातसंयुक्तः ।
युद्धनियुद्धप्रहरणसंफेटकृतश्च कर्तव्यः ॥ ९० ॥
मायेन्द्रजालबहुलो बहुपुरुषोत्थानभेदसंयुक्तः ।
देवासुरराक्षसभूतयक्षनागाश्च पुरुषाः स्युः ॥ ९१ ॥
षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंयुक्तः ।
कार्यो डिमः प्रयत्नात्तज्ज्ञैर्नानाश्रयविशेषेण ॥ ९२ ॥
डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम् ।
व्यायोगस्य तु लक्षणमतःपरं सम्प्रवक्ष्यामि ॥ ९३ ॥
व्यायोगस्तु विधिज्ञैः कर्त्तव्यः ख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥ ९४ ॥
बहवस्तत्र च पुरुषाः कविभिः कार्या यथा समवकारे ।
न च तत्प्रमाणस्तु तदेकाङ्कः संविधातव्यः ॥ ९५ ॥
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धनियुद्धाघर्षणसङ्घर्षश्चापि कर्त्तव्यः ॥ ९६ ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतःपरमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ ९७ ॥

---

१ यत्र तु बन्धे नानावधो हि उदयो भवेद्धि पुरुषाणाम्–ख ।

प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत्पुंभिः ॥ ९८ ॥
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवनबहुलो निर्वेदिभाषितश्चैव ॥ ९९ ॥
नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकिहीनः ।
कर्त्तव्योऽभ्युदयान्तस्तज्ज्ञैरुत्सृष्टिकाङ्कस्तु ॥ १०० ॥
यद् दिव्यनायककृतं काव्यं सङ्ग्रामबन्धवधयुक्तम् ।
तद्भारते तु वर्षे कर्त्तव्यं काव्यबन्धेषु ॥ १०१ ॥
तस्माद् भारतमिष्टं वर्षेष्वन्येषु नित्यकालं हि ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् ॥ १०
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न भवति दुःखं न वा शोकम् ॥ १०३
ये तेषामपि वासाः पुराणवादे च पर्वता गदिताः ।
सम्भोगस्तेषु भवेत् कर्मारम्भो भवेदस्मिन् ॥ १०४ ॥
अङ्कस्य लक्षणगतं व्याख्यातं शेषमात्रगतम् ।
प्रहसनमतःपरमहं सलक्षणं सम्प्रवक्ष्यामि ॥ १०५ ॥
प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथैव सङ्कीर्णम् ।
तस्य व्याख्यास्येऽहं पृथक् पृथक् लक्षणविशेषान् ॥ १०६ ॥
भगवत्तापसभिक्षुश्रोत्रियविप्रातिहाससंयुक्तम् ।
नीचजनसम्प्रयुक्तं परिहासाभाषणप्रायम् ॥ १०७ ॥
अविकृतभाषाचारं विशेषहासोपहासरचितपदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ १०८ ॥
वेश्याचेटनपुंसकधूर्तविटा बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छदचेष्टाकरणात्तु सङ्कीर्णम् ॥ १०९ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ।
तत्प्रहसने प्रयोज्यं धूर्तविटविवादसम्पन्नम् ॥ ११० ॥
उद्घात्यकादिभिरिदं वीथ्यङ्गे मिश्रितं भवेन्मिश्रम् ।

१ नाति०—क ।

भाणस्यापि हि लक्षणमतः परं सम्प्रवक्ष्यामि ॥ १११ ॥
आत्मानुभूतशंसी परसंश्रितवर्णनाविशेषश्च ।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥ ११२ ॥
परवचनमात्मसंस्थं परवचनैरुत्तरोत्तरैर्ग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयेत्तत् ॥ ११३ ॥
धूर्तविटसम्प्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ ११४ ॥
भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।
वीथ्याः सम्प्रति निखिलं कथयामि यथाक्रमं विप्राः ॥ ११५ ॥
वीथी स्यादेकाङ्का द्विपात्रहार्या तथैकहार्या वा ।
अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः ॥ ११६ ॥
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।
अङ्गानां वक्ष्येऽहं लक्षणमखिलं यथादेशम् ॥ ११७ ॥
उद्घात्यकावलगिते त्ववस्यन्दितमेव च ।
असत्प्रलापश्च तथा प्रपञ्चो नालिकापि च ॥ ११८ ॥
वाक्केल्यधिबलं चैव च्छलं व्याहार एव च ।
मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ॥ ११९ ॥
त्रयोदश सदाङ्गानि वीथ्यामेतानि योजयेत् ।
लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ॥ १२० ॥
पदानि त्वगतार्थानि यैर्नराः पुनरादरात् ।
योजयन्ति पदैरन्यैस्तदुद्धात्यकमुच्यते ॥ १२१ ॥
यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रशस्यते ।
तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥ १२२ ॥
आक्षिप्य कञ्चिदर्थन्तु शुभाशुभसमुत्थितम् ।
यत्सृजेद् बुद्धिवैशद्यात् तदवस्यन्दितं भवेत् ॥ १२३ ॥
असम्बद्धन्तु यद्वाक्यं असम्बद्धमथोत्तरम् ।
असत्प्रलपितञ्चैव वीथ्यां सम्यक् प्रयोजयेत ॥ १२४ ॥

१ एतदारभ्य श्लोकत्रयं खपुस्तके आर्यारूपेण परिवर्तितं दृश्यते ।

मूर्खजनसन्निकर्षे विद्वानन्यत्र भाषते सम्यक् ।
वचनन्न गृह्यतेऽस्य संज्ञेयोऽसत्प्रलापस्तु ॥ १२५ ॥
यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परतः ।
एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चस्तु ॥ १२६ ॥
हास्येनावगतार्था प्रहेलिका नालिकेति विज्ञेया ।
एकद्विप्रतिवचनात् वाक्केलिकां नाम तामाह ॥ १२७ ॥
परवचनमात्मसंस्थं चोत्तरोत्तरसमुद्भवो द्वयोर्यत्र ।
अन्योन्यार्थविशेषणमतिबलमिति तद् बुधैर्ज्ञेयम् ॥ १२८ ॥
यत्रादौ प्रतिवचनैर्विलोभयित्वा परं पराकारैः ।
तैरेवार्थविहीनैर्विपरीतस्याच्छलं नाम ॥ १२९ ॥
प्रत्यक्षनायकस्यैव यद्वै दृष्टवदुच्यते ।
अशङ्कितं तथायोगाद् व्याहारः सोऽभिधीयते ॥ १३० ॥
यत्कारणाद् गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम् ॥ १३१ ॥
यदुदात्तवचनमिह च त्रिधा विभक्तं भवेत्प्रयोगेषु ।
हास्यरससम्प्रयुक्तं तद् त्रिगतं नाम विज्ञेयम् ॥ १३२ ॥
संरम्भसम्भ्रमकृतं बन्धविवादं तथापवादकृतम् ।
बहुवचनाक्षेपकृतं गण्डमिति वदन्ति तत्त्वज्ञाः ॥ १३३ ॥
एतान्यङ्गानि यत्र स्युः स्पष्टार्थानि त्रयोदश ।
तथागमसमुद्दिष्टैर्युक्तप्रकृतिभिस्तथा ॥ १३४ ॥
रसैर्भावैश्च निखिलैर्युक्ता वीथी प्रकीर्तिता ।
एकहार्या द्विहार्या वा कर्त्तव्या कविभिः सदा ॥ १३५ ॥
अन्यानि च लास्यविधावङ्गानि तु नाटके प्रयुक्तानि ।
अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥ १३६ ॥
भाणाकृतिवल्लास्यं विज्ञेयं त्वेकपात्रहार्यं च ।
प्रकरणवदूह्यकार्यासंस्तवयुक्तं विविधभवं ज्ञेयम् ॥ १३७ ॥
गेयपदं स्थितिपाठ्यमासीनं पुष्पगन्धिका ।
प्रच्छेदकस्त्रिमूढश्च सैन्धवाख्यद्विमूढकम् ॥ १३८ ॥

उत्तमोत्तमकं चैव विचित्रपदमेव च ।
उक्तप्रयुक्तभावं च लास्याङ्गानि विदुर्बुधाः ॥ १३९ ॥
आसने चोपविष्टायां तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥ १४० ॥
या नृत्यन्यासना नारी गेयं प्रियगुणान्वितम् ।
साङ्गोपाङ्गविधानेन तद् गेयं पादमुच्यते ॥ १४१ ॥
प्राकृतं या वियुक्ता तु पठेदासनसांस्थिता ।
मदनानलतप्ताङ्गी स्थितिपाठ्यं तदुच्यते ॥ १४२ ॥
आसीनमास्यते यत्र चिन्ताशोकसमन्वितम् ।
अप्रसारितगात्रं च जिह्मदृष्टिनिरीक्षितम् ॥
यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत् ॥
सखीनां तु विनोदाय सा ज्ञेया पुष्पगन्धिका ॥ १४४ ॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहता ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ १४५ ॥
अनिष्ठुरस्वल्पपदं समवृत्तैरलङ्कृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ १४६ ॥
पात्रविस्मृतसङ्केतं सुव्यक्तकरुणान्वितम् ।
प्रकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥ १४७ ॥
शुभार्थगीताभिनयं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं व्याजचेष्टं द्विमूढकम् ॥ १४८ ॥
उत्तमोत्तमकं विद्यादनेकरससंश्रयम् ।
विचित्रैश्लोकबन्धैश्च हेलाभावविभूषितम् ॥
यदि प्रतिकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्तं तु विचित्रपदमुच्यते ॥ १५० ॥
कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।
उक्तप्रत्युक्तमेव स्यात् किन्तु गीतार्थयोजितम् ॥ १५१ ॥
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावान् तद्धि भावितमुच्यते ॥ १५२ ॥

कोपप्रसादजनितं एतद्वै लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तिहेतोस्तु ॥ १५३ ॥
इति दशरूपविधानं सर्वं प्रोक्तं मयाऽतिलक्षणतः ।
इति वृत्तद्विविधानसन्धिविलक्षणं वक्ष्ये ॥ १५४ ॥

इति भारतीये नाट्यशास्त्रे दशरूपविधानं नाम विंशोऽध्यायः ।

## अथैकविंशोऽध्यायः ।

इति वृत्तं तु काव्यस्य शरीरं परिकीर्तितम् ।
पञ्चभिः सन्धिभिस्तस्य विभागाः परिकीर्तिताः ॥ १ ॥
इति वृत्तं द्विधा चैव बुधस्तु परिवर्जयेत् ।
आधिकारिकमेकं तु प्रासङ्गिकमथापरम् ॥ २ ॥
यत्कार्यं तु फलप्राप्त्या सामर्थ्यात्परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः ॥ ३ ॥
कवेः प्रयत्नान्नेतॄणां युक्तानां विध्यपाश्रयात् ।
कल्प्यते यत्फलप्राप्तिः समुत्कर्षात्फलस्य तु ॥ ४ ॥
कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम् ।
परोपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥ ५ ॥
[1]लौकिकसुखदुःखाख्या यथावस्था रसोद्भवा ।
दशधा मन्मथावस्था व्यवस्था त्रिविधा मता ॥ ६ ॥
संसाध्ये फलयोगे तु व्यापारः साधकस्य यः ।
तस्यानुपूर्व्याविज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥ ७ ॥
नाट्यप्रकरणाभावा अवस्थास्ता मता इह ।
धर्मकामार्थसम्बन्धः फलयोगस्तु कथ्यते ॥ ८ ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ ९ ॥

---

१ श्लोकोऽयं खपुस्तके नास्ति ।

औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते।
महतः फलयोगस्य स खल्वारम्भ इष्यते ॥ १० ॥
अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति।
परश्चौत्सुक्यगमनं स प्रयत्नः प्रकीर्त्तितः ॥ ११ ॥
ईषत्प्राप्तिश्च या काचित् अर्थस्य परिकल्पते।
भावमात्रेण संज्ञेयो विधिज्ञैः प्राप्तिसम्भवः ॥ १२ ॥
नियतां च फलप्राप्तिं यत्र भावेन पश्यति।
नियतां तां फलप्राप्तिं सगुणस्तु विनिर्दिशेत् ॥ १३ ॥
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्।
यद् दृश्यते निवृत्ते तु फलयोगः स उच्यते ॥ १४ ॥
सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः।
यथानुक्रमशो ह्येताः पञ्चावस्था भवन्ति हि ॥ १५ ॥
आसां स्वभावभिन्नानां परस्परसमागमात्।
विन्यासः फलभावेन फलाय परिकल्प्यते ॥ १६ ॥
इति वृत्तं यथाख्यातं पुरस्तादाधिकारिकम्।
तदारम्भादि कर्त्तव्यं फलन्ति च यथा भवेत् ॥ १७ ॥
पूर्णसन्ध्यपि यत्कार्यं हीनसन्ध्यपि वा पुनः।
नियमात्पूर्णसन्धिः स्याद्धीनसन्धिस्तु कारणात् ॥ १८ ॥
एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥ १९ ॥
प्रासङ्गिके परार्थत्वात् न ह्येष नियमो भवेत्।
यद्वृत्तं तु भवेत्तत्र संयोज्यमविरोधतः ॥ २० ॥
इति वृत्ते यदावस्था पञ्चारम्भादिका स्मृताः।
अर्थप्रकृतयश्चासां पञ्चबीजादिका अपि ॥ २१ ॥
बीजबिन्दुपताकाश्च प्रकरी कार्यमेव च।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥ २२ ॥
अल्पमात्रं समुत्सृष्टं बहुधा यत्प्रसर्पति।

---

१ पद–क।

फलावसानं यच्चैव बीजं तदभिधीयते ॥ २३ ॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स बिन्दुरिति संज्ञितः ॥ २४ ॥
यद्वृत्तं हि परार्थं स्यात् प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ २५ ॥
फलं सकल्प्यते सद्भिः परार्थं यस्य केवलम् ।
अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत् ॥ २६ ॥
यदाधिकारिकं यस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं समुदाहृतम् ॥ २७ ॥
एतेषां यस्य येनार्थो यतश्च गुण इष्यते ।
प्रधानं तत्प्रकर्तव्यं गुणभूतान्यतः परम् ॥ २८ ॥
एको नैकोपि वा सन्धिः पताकायाश्च योजयेत् ।
प्रधानार्थानुयायित्वादनुबन्धः स कीर्त्यते ॥ २९ ॥
आगर्भाद्वाविमर्शाद्वा पताका विनिवर्तते ।
तस्माद्यस्मात्तु बन्धोऽस्याः परार्थायोपकल्प्यते ॥ ३० ॥
यत्रार्थे चिन्त्यमानेऽपि तल्लिङ्गार्थः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ३१ ॥
सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्यते ॥ ३२ ॥
वचसाऽतिशयश्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥ ३३ ॥
अर्थोपक्षेपणं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥ ३४ ॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
उपन्यासः संयुतश्च तच्चतुर्थमुदाहृतम् ॥ ३५ ॥
चतुःपताकापरमं नाटके काव्यमिष्यते ।
पञ्चभिः सन्धिभिर्युक्तं तांश्च वक्ष्याम्यतः परम् ॥ ३६ ॥
मुखं प्रतिमुखं गर्भोऽविमर्शस्तथा हि ।

तथा निर्वहणं चैव सन्धयो नाटके स्मृताः ॥ ३७ ॥
पञ्चभिः सन्धिभिर्युक्तं प्रधानमनुकीर्त्यते ।
शेषाः प्रधानसन्धीनामनुग्राह्यास्तु सन्धयः ॥ ३८ ॥
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितम् ॥ ३९ ॥
बीजस्योद्घाटनं यत्तु दृष्टनष्टमिव क्वचित् ।
मुखे न्यस्तस्य सर्वत्र तद्वै प्रतिमुखं भवेत् ॥ ४० ॥
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ ४१ ॥
गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
किञ्चिदाश्लेषसंयुक्तो विमर्शः स इति स्मृतः ॥ ४२ ॥
समानञ्च समार्थानां मुख्यार्थानां सबीजिनाम् ।
फलोपसङ्गतानाञ्च ज्ञेयं निर्वहणं तु तत् ॥ ४३ ॥
एते हि सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः ।
तथा प्रकरणस्यापि शेषाणां च निबोधत ॥ ४४ ॥
[1]व्यायोगेहामृगौ चापि त्रिसन्धी परिकीर्तितौ ।
न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ॥ ४५ ॥
डिमः समवकारश्च चतुःसन्धी प्रकीर्तितौ ।
गर्भावमर्शौ न स्यातां न च वृत्तिस्तु कैशिकी ॥ ४६ ॥
द्विसन्धि तु प्रहसनं वीथ्यङ्को भाण एव च ।
मुखनिर्वहणे स्यातां तेषां वृत्तिश्च भारती ॥ ४७ ॥
एवं च सन्धयः कार्या दशरूपे प्रयोक्तृभिः ।
पुनः सन्ध्यन्तरं तेषामङ्गकल्पं निबोधत ॥ ४८ ॥
साम भेदः प्रदानं च दण्डश्च वध एव च ।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ ४९ ॥
साहसं च वधश्चैव धीर्माया क्रोध एव च ।
ओजः संवरणं भ्रान्तिस्तथा हि त्ववधारणम् ॥ ५० ॥

---

१ एते त्रयः श्लोकाः खपुस्तकेऽत्र नोपलभ्यन्ते ।

दूतो लेखा तथा स्वप्नश्चित्रं मद इति द्विजाः ।
सन्ध्यन्तराणि सन्धीनां विशेषस्त्वेकविंशतिः ॥ ५१ ॥
सन्धीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः ।
स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥ ५२ ॥
इष्टस्यार्थस्य रचना[1] वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥ ५३ ॥
आश्चर्यवदभिख्यातं प्रकाश्यानां प्रकाशनम् ।
अङ्गानां षड्विधं ह्येतदुक्तं शास्त्रे प्रयोजनम् ॥ ५४ ॥
अङ्गहीनो नरो यद्वद्युद्धारम्भेऽक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् ॥ ५५ ॥
काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम् ।
दीप्ताङ्गत्वात्प्रयोगस्य शोभामेति न संशयः ॥ ५६ ॥
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम् ।
हीनत्वात्तु प्रयोगस्य न सतां रञ्जयेन्मनः ॥ ५७ ॥
तस्मात्सन्धिप्रयोगेषु यथादेशं यथारसम् ।
कविनाऽङ्गानि कार्याणि सम्यक्तानि निबोधत ॥ ५८ ॥
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ ५९ ॥
उद्भेदः करणं भेदो ह्येतान्यङ्गानि वै मुखे ।
तथा प्रतिमुखे चैव शृणुताङ्गान्यतःपरम् ॥ ६० ॥
विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म नर्मद्युतिश्चैव तथा प्रशमनं पुनः ॥ ६१ ॥
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
वज्रं पुष्पमुपन्यासो वर्णसंहार एव च ॥ ६२ ।
एतानि वै प्रतिमुखे गर्भाङ्गानि निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ६३ ॥
सङ्ग्रहश्चानुमानं च प्रार्थनाक्षिप्तमेव च ।

१ वचनं—क ।

तोटकाधिबले चैव चोद्वेदो विद्रवस्तथा ॥ ६४ ॥
अङ्गान्येतानि वै गर्भे विमर्शे च निबोधत।
अपवादोऽथ सम्फेटो विद्रवः शक्तिरेव च ॥ ६५ ॥
व्यवसायः प्रसङ्गश्च द्युतिः खेदो निषेधनम्।
विरोधनमथादानं छादनं च प्ररोचना ॥ ६६ ॥
एतान्यवमृशेऽङ्गानि भूयो निर्वहणे शृणु।
सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ॥ ६७ ॥
द्युतिः प्रसादश्चानन्दः समयो ह्यपगूहनम्।
भाषणं पूर्ववाक्यं च कार्यसंहार एव च ॥ ६८ ॥
प्रशस्तिरिति चाङ्गानि कुर्यान्निर्वहणे बुधः।
चतुष्पष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु ॥ ६९ ॥
[1]सम्पादनार्थं बीजस्य सम्यक्सन्धिकराणि तु।
कार्याण्येतानि कविभिः विस्पष्टार्थानि नाटके ॥ ७० ॥
पुनरेषां प्रवक्ष्यामि लक्षणानि यथाक्रमम्।
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥ ७१ ॥
समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः।
तन्निष्पत्या तु कथनं परिन्यासः प्रकीर्तितः ॥ ७२ ॥
गुणनिर्वर्णनं यत्तु विलोभनमिति स्मृतम्।
सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते ॥ ७३ ॥
सुखार्थस्योपगमनं प्राप्तिरित्यभिसंज्ञितम्।
बीजार्थस्योपगमनं समाधानमपीष्यते ॥ ७४ ॥
सुखदुःखकृतो योऽर्थस्तद्विधानमिहोच्यते।
कौतूहलोत्तरावेशो भवेत्तु परिभावना ॥ ७५ ॥
बीजार्थस्य प्ररोहो य उद्भेदः स तु कीर्तितः।
प्रकृतार्थसमारम्भः करणं परिचक्षते ॥ ७६ ॥
सङ्घातभेदनार्थो यः स भेद इति संज्ञितः।
एतानि तु मुखाङ्गानि वक्ष्ये प्रतिमुखे पुनः ॥ ७७ ॥

---

१ श्लोकोऽयं खपुस्तके नास्ति।

समीहा रतिभोगार्थो विलास इति कीर्तितः ।
दृष्टनष्टानुसरणं परिसर्पस्तु वर्ण्यते ॥ ७८ ॥
कृतस्यानुनयस्यादौ विधूतमपरिग्रहः ।
अपायदर्शनं यत्तु तापनं नाम तद्भवेत् ॥ ७९ ॥
क्रीडार्थं विहितं यत्तु हास्यं नर्म तु संज्ञितम् ।
दोषप्रच्छादनार्थं तु हास्यं नर्मद्युति स्मृतम् ॥ ८० ॥
उत्तरोत्तरवाक्यं तु भवेत्[1]प्रशमनं बुधाः ।
या तु व्यसनसम्प्राप्तिर्निरोधः सः प्रकीर्तितः ॥ ८१ ॥
क्रुद्धस्यानुनयो यत्तु भवेत्तत्पर्युपासनम् ।
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥ ८२ ॥
प्रत्यक्षरूपं यद्वाक्यं तद्वज्रमिति संज्ञितम् ।
उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः ॥ ८३ ॥
चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।
एतानि तु प्रतिमुखे गर्भे चापि निबोधत ॥ ८४ ॥
कपटापाश्रयं यत्तदभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ ८५ ॥
चित्रार्थसमवाये तु वितर्को रूपमिष्यते ।
यत्तु सातिशयं वाक्यं तदुदाहरणमिष्यते ॥ ८६ ॥
भावकृत्वोपलब्धिस्तु क्रम इत्यभिधीयते ।
सामदानार्थसंयोगः सङ्ग्रहः स तु कीर्तितः ॥ ८७ ॥
रूपानुरूपगमनमनुमानमिति स्मृतम् ।
रतिहर्षोत्सवाद्यर्थप्रार्थना प्रार्थना भवेत् ॥ ८८ ॥
गर्भस्योद्भेदनं यत्तु तदाक्षिप्तमिति स्मृतम् ।
संरम्भवचनं चैव तोटकं नाम संज्ञितम् ॥ ८९ ॥
कपटेनातिसन्धानं ज्ञेयं त्वधिबलं बुधैः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ॥ ९० ॥
[2]नृपाग्निभयसंयुक्तः सम्भवो विद्रवः स्मृतः ।

---

१ प्रगणनं-ङ । २ शङ्काभयत्रासकृतो विद्रवः समुदाहृतः-ख ।

एतान्यङ्गानि गर्भे स्युरवमर्शे निबोधत ॥ ९१ ॥
दोषप्रख्यापनं यत् स्यात् सोऽपवादः प्रकीर्तितः।
रोषग्रथितवाक्यं तु सम्फेटः स उदाहृतः ॥ ९२ ॥
गुरुव्यतिक्रमो यस्तु विज्ञेयो विद्रवस्तु सः।
विरोधोपगमो यस्तु सा शक्तिः परिकीर्तिता ॥ ९३ ॥
व्यवसायस्तु विज्ञेयः प्रतिज्ञादोषसम्भवः।
प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्तनम् ॥ ९४ ॥
वाक्यमाधर्षणकृतं द्युतिस्तज्ज्ञैरुदाहृतम्।
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ॥ ९५ ॥
ईप्सितार्थप्रतीघातो निषेधः स तु कीर्तितः।
विरोधनं तु सरम्भादुत्तरोत्तरभाषणम् ॥ ९६ ॥
बीजकार्योपगमनमादानमिति संज्ञितम्।
अवमानात्कृतं वाक्यं कार्यार्थं छादनं भवेत् ॥ ९७ ॥
प्ररोचना च विज्ञेया संहारार्थप्रकाशिनी।
एतान्यवमृशङ्गानि संहारे तु निबोधत ॥ ९८ ॥
सुखबीजोपगमनं सन्धिरित्यभिधीयते।
कार्यस्यान्वेषणं युक्त्या विरोध इति कीर्तितः ॥ ९९ ॥
उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम्।
अनुभूतस्य कथनं निर्णयः समुदाहृतः ॥ १०० ॥
परिवादकृतं यत् स्यात् तदाहुः परिभाषणम्।
लब्धस्यार्थस्य शमनं द्युतिरित्यभिधीयते ॥ १०१ ॥
शुश्रूषाद्युपसम्पन्नः प्रसाद इति भण्यते।
समागमस्तु योऽर्थानामानन्दः स तु कीर्तितः ॥ १०२ ॥
दुःखस्यापगमो यस्तु स शमः सन्निगद्यते।
अद्भुतस्य च सम्प्राप्तिर्भवेत्तदुपगूहनम् ॥ १०३ ॥
सामदानादिसंयुक्तं भाषणं तूच्यते बुधैः।
पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शकम् ॥ १०४ ॥

---

१ वाक्यरामर्षयोजितैः-ख। २ या कार्या-ख।

वरप्रदानं सम्प्राप्तिः काव्यसंहार इष्यते ।
नृपदेवप्रशान्तिश्च प्रशस्तिरभिधीयते ॥ १८५ ॥
इत्येतानि यथासन्धि कार्याण्यङ्गानि रूपके ।
कविभिः कार्यकुशलै रसभावानवेक्ष्य तु ॥ १०६ ॥
सर्वाङ्गानि कदाचित्तु द्वित्रियोगेन वा पुनः ।
ज्ञात्वा कार्यमवस्थां च योज्यान्यङ्गानि सन्धिषु ॥ १०७ ॥
विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ १०८ ॥
मध्यमपुरुषनियोज्यो नाटकमुखसन्धिवस्तुसञ्चारः ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०९ ॥
शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यमैः कृतः ॥ ११० ॥
अन्तर्यवनिकासंस्थैरुत्तमाधममध्यमैः ।
अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥ १११ ॥
अङ्कान्तराधिकारी सङ्क्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ ११२ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ११३ ॥
प्राकृतभाषाग्रथितः संस्कृते प्राकृतस्य लोकस्य ।
नीचस्याचरणकृतः प्रवेशको नाम विज्ञेयः ॥ ११४ ॥
अङ्कान्तरेऽथवाऽङ्के निपतति यस्मात् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो विज्ञेयोऽङ्कावतारोऽसौ ॥ ११५ ॥
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यत्र सङ्क्षिप्यते पूर्वं तदङ्कमुखमिष्यते ॥ ११६ ॥
वृत्तिप्रत्यङ्गसम्पन्नं पताकार्थप्रातिक्रियम् ।
पञ्चावस्थासमुत्पन्नं पञ्चभिः सन्धिभिर्युतम् ॥ ११७ ॥
सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसंयुतम् ।

---

१ श्लोकोऽयं खपुस्तके न दृश्यते । २ पदार्थप्रकृतिक्षमम्–ख ।

षट्त्रिंशल्लक्षणोपेतं गुणाऽलङ्कारभूषितम् ॥ ११८ ॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारजनप्रियम् ॥ ११९ ॥
सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥ १२० ॥
अवस्था या तु लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसञ्चारा नाटके सम्भवेदिह ॥ १२१ ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न योगोऽसौ नाटके यन्न दृश्यते ॥ १२२ ॥
यो यः स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
साङ्गाभिनयसंयुक्तो नाट्यमित्यभिधीयते ॥ १२३ ॥
देवतानामृषीणां च राज्ञां लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् ॥ १२४ ॥
यस्मात् स्वभावं संहृत्य साङ्गोपाङ्गगतिक्रमैः ।
अभिनीयते गम्यते च तस्माद्वै नाटकं स्मृतम् ॥ १२५ ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥ १२६ ॥
यान्येव शिल्पजातानि ह्येककर्मकृतानि च ।
तानि शेषाणि रूपाणि कर्त्तव्यानि प्रयोक्तृभिः ॥ १२७ ॥
लोकस्वभावं सम्प्रेक्ष्य नराणां च बलाबलम् ।
सम्भोगं चैव युक्तिं च ततः कार्यं तु नाटकम् ॥ १२८ ॥
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि भविष्यन्ति तेऽस्त्यल्पश्रुतबुद्धयः ॥ १२९ ॥
बुद्धयः कर्म शिल्पानि वैचक्षण्यं कलासु च ।
सर्वाणि पुंसां नश्यन्ति यदा लोकः प्रणश्यति ॥ १३० ॥
तदेवं लोकभावानां प्रसमीक्ष्य बलाबलम् ।
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् ॥ १३१ ॥
चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।

वेश्या इव न शोभन्ते कमण्डलुधरैर्द्विजैः ॥ १३२ ॥
इति वृत्तं ससन्ध्यङ्गं मया प्रोक्तं द्विजोत्तमाः ।
अत ऊर्ध्वं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥ १३३ ॥

इति भारतीये नाट्यशास्त्रे सन्ध्यङ्गविकल्पो नाम एकविंशोऽध्यायः ॥

## अथ द्वाविंशोऽध्यायः ॥

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथावस्तूद्भवं चैव का१व्यानां च विकल्पनम् ॥ १ ॥
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकं सङ्क्षिप्य मायया ॥ २ ॥
अथ वीर्यमदोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षिणौ ॥ ३ ॥
बाहू विमर्दमानौ तावक्षयं भूतभावनम् ।
मुष्टिभिर्जानुभिश्चैव योधयामासतुः प्रभुम् ॥ ४ ॥
अभिद्रवन्तावन्योन्यं वाक्यैश्च परुषैस्तदा ।
नानाविक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥ ५ ॥
तयोर्नैकप्रकाराणि श्रुत्वा वाक्यानि गर्जतोः ।
किञ्चिदाकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥ ६ ॥
किमिदं भारती वृत्तिर्वाग्भिरेव प्रवर्तते ।
उत्तरोत्तरसंवृद्धा नन्विमौ निधनं नय ॥ ७ ॥
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
बाढं कार्यक्रियाहेतोर्भारतीयं विनिर्मिता ॥ ८ ॥
भाषतो वाक्यभूयिष्ठा भारतीयं भविष्यति ।
अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥ ९ ॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
योधयामास तौ दैत्यौ युद्धमार्गविशारदौ ॥ १० ॥

---

१ काम्यानां-ङ ।

भूमिसंस्थानसंयोगैः पदन्यासैस्तदा हरेः ।
अतिभारोऽभवद्भूमेर्भारती तत्र निर्मिता ॥ ११ ॥
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्तिकरैरथ ।
सत्त्वाधिकैरसम्भ्रान्तैः सात्त्वती तत्र निर्मिता ॥ १२ ॥
विचित्रैरङ्गहारैस्तु देवो लीलासमुद्भवैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १३ ॥
संरम्भावेगबहुलैर्नानाचारीसमुत्थितैः ।
नियुद्धकरणैश्चित्रैर्निर्मिताऽऽरभटी ततः ॥ १४ ॥
यां यां देवः समाचष्टे क्रियां वृत्तिसमुत्थिताम् ।
तां तदर्थानुगैर्वाक्यैः द्रुहिणः प्रत्यपूजयत् ॥ १५ ॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
उक्तवांस्तु तदा ब्रह्मा नारायणमरिन्दमम् ॥ १६ ॥
अहो विचित्रैर्विशदैः स्फुटैः सुललितैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥ १७ ॥
तस्मादयं सर्वलोके नियुद्धसमयक्रमः ।
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥ १८ ॥
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्युद्धं कृतं ह्येतत्तस्मान् न्यायः प्रकीर्तितः ॥ १९ ॥
ततो देवेषु निक्षिप्तो द्रुहिणेन महात्मना ।
पुनर्नाट्यप्रयोगे च नानाभावरसान्विता ॥ २० ॥
वृत्तिसंज्ञा कृता ह्येषा नानाभावरसाश्रया ।
चरितैस्तस्य देवस्य द्रव्यं यद् यादृशं कृतम् ॥ २१ ॥
ऋषिभिस्तादृशी वृत्तिः कृता वाक्याङ्गसम्भवा ।
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका ॥ २२ ॥
पुनरिष्टसुजातेन नानाचारी समाकुले ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २३ ॥

---

१ याद्य०–ख ।
२ एतेऽष्टाविंशतिः श्लोकाः कपुस्तके नोपलभ्यन्ते ।

ऋग्वेदाद् भारती वृत्तिर्यजुर्वेदात्तु सात्त्वती ।
कैशिकी सामवेदाच्च शेषा चाथर्वणात्तथा ॥ २४ ॥

या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ॥ २५ ॥

भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः ।
प्ररोचना मुखं चैव वीथी प्रहसनं तथा ॥ २६ ॥
जयन्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥ २७ ॥
नटी विदूषको वापि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ २८ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ।
आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ॥ २९ ॥
उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवृत्तिकावलगिते आमुखाङ्गानि पञ्च वै ॥ ३० ॥
उद्घात्यकावलगितयोर्लक्षणं कथितं मया ।
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३१ ॥
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स कीर्तितः ॥ ३२ ॥
प्रयोगेऽत्र प्रयोगं तु सूत्रधारः प्रयोजयेत् ।
ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः ॥ ३३ ॥
प्रवृत्तं कार्यमाश्रित्य सूत्रभृद्यत्र वर्णयेत् ।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् ॥ ३४ ॥
एषामन्यतमं श्लिष्टं योजयित्वा तु युक्तिभिः ।
पात्रग्रन्थैरसम्बाधं प्रकुर्यादामुखं बुधः ॥ ३५ ॥
एवमेतद् बुधैर्ज्ञेयमामुखं विबुधाश्रयम् ।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥ ३६ ॥

इत्यष्टार्थविकल्पा वृत्तिरियं भारती मया प्रोक्ता ।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ३७ ॥

या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ ३८ ॥

वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ ३९ ॥
वीराद्भुतरौद्ररसा विज्ञेया ह्यल्पकरुणशृङ्गारा ।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥ ४० ॥
उत्थापकश्च परिवर्तकश्च संलापकः ससङ्घातः ॥
चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥ ४१ ॥
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति सङ्घर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ ४२ ॥
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ॥ ४३ ॥
साधर्षजो निराधर्षजो वापि विविधवचनसंयुक्तः ।
साधिक्षेपालापो ज्ञेयः संलापकः सोऽपि ॥ ४४ ॥
मित्रार्थवाक्ययुक्त्या दैववशादात्मदोषयोगाद्वा ।
सङ्घातभेदजननस्तज्ज्ञैः सङ्घातको ज्ञेयः ॥ ४५ ॥
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मयाऽभिहिता ।
कैशिक्यास्त्विह लक्षणमतः परं सम्प्रवक्ष्यामि ॥ ४६ ॥

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसंयुता या बहु नृत्तगीता ।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥ ४७ ॥

नर्म च नर्मस्फुर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥ ४८ ॥

आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥ ४९ ॥
ईर्ष्याक्रोधप्रयासोपालम्भवचनानुविद्धं च ।
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ॥ ५० ॥
नवसङ्गमसम्भोगो रतिसमुदयवाक्यवेषसंयुक्तैः ।
ज्ञेयो नर्मस्फुर्जो ह्यवसानभयानकश्चैव ॥ ५१ ॥
विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषः ।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥ ५२ ॥
विज्ञानरूपसम्भावनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥ ५३ ॥
[1]पूर्वस्थितानिपद्येत यत्र चान्यतमनायकस्तिष्ठेत् ।
तमपीह नर्मगर्भं वदन्ति नाट्यप्रयोगेऽस्मिन् ॥ ५४ ॥
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मया प्रोक्ता ।
अत ऊर्ध्वमुद्धतरसामारभटीं सम्प्रवक्ष्यामि ॥ ५५ ॥
आरभटप्रायगुणा तथैव बहुवचनकपटा च ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥ ५६ ॥
प्रस्तावपातप्लुतलङ्घितानि चान्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युक्तानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥ ५७ ॥
[2]या षड्गुणसंरब्धा परातिसन्धानविद्रवोपेता ।
लाभालाभार्थकृता विज्ञेया वृत्तिरारभटी ॥ ५८ ॥
सङ्क्षिप्तकावपातौ वस्तूत्थापनमथापि सम्फेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ॥ ५९ ॥
अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः ।
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम ॥ ६० ॥
भयहर्षसमुत्थानं विद्रुतसंभ्रान्तविविधवचनं च ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानन्ति ॥ ६१ ॥

---

१ श्लोकोऽयं खपुस्तके न दृश्यते  २ श्लोकोऽयं खपुस्तके नास्ति ।

सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वाऽपि ।
नाट्यं विभाव्यते यत् यत्तद्वस्तूत्थापनं ज्ञेयम् ॥ ६२ ॥
संरम्भसमायुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः सम्फेटो नाम विज्ञेयः ॥ ६३ ॥
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रयाः ।
रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥ ६४ ॥
शृङ्गारे चैव हास्ये च वृत्तिः स्याद् कैशिकीति सा ।
सात्त्वती नाम सा ज्ञेया वीररौद्राद्भुताश्रया ॥ ६५ ॥
भयानके च बीभत्से रौद्रे चारभटी भवेत् ।
भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥ ६६ ॥
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः ।
भावोऽपि रसो वापि प्रवृत्तिरेव वा ॥ ६७ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥ ६८ ॥
वृत्त्यन्त एषोऽभिनयो मयोक्तो
वागङ्गसत्त्वप्रभवो यथावत् ।
आहार्यमेवाभिनयं प्रयोगे
वक्ष्यामि नेपथ्यकृतं पुनश्च ॥ ६९ ॥

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम द्वाविंशोऽध्यायः ॥

---

# अथ त्रयोविंशोऽध्यायः ।

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः ।
एवमेव प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ॥ १ ॥
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥ २ ॥

---

१ मातरः—ख।

तस्मिन् यत्नस्तु कर्तव्यो नेपथ्ये शुभमिच्छता ।
नाट्यस्येह त्वलङ्कारो नेपथ्यं सम्प्रकीर्तितम् ॥ ३ ॥
नानावस्थाः प्रकृतयः पूर्वंनेपथ्यसूचिकाः ।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः ॥ ४ ॥
चतुर्विधं तु नेपथ्यं पुस्तोऽलङ्कार एव च ।
तथाङ्गरचना चैव ज्ञेयः सञ्जीव एव च ॥ ५ ॥
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
सन्धिमो व्याजिमश्चैव चेष्टिमश्च प्रकीर्तितः ॥ ६ ॥
किलिञ्चवस्त्रचर्माद्यैर्यद्रूपं क्रियते बुधैः ।
सन्धिमो नाम विज्ञेयो पुस्तो नाटकसंश्रयः ॥ ७ ॥
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।
चेष्ट्यते चैव यद्रूपं चेष्टिमः स तु संज्ञितः ॥ ८ ॥
शैलयानविमानानि चर्मवर्मध्वजा नगाः ।
यानि क्रियन्ते नाट्ये हि स पुस्त इति संज्ञितः ॥ ९ ॥
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससा ।
नानाविधसमायोगोऽङ्गो पाङ्गविनिर्मितः ॥ १० ॥
चेष्टितं विततं चैव सङ्घात्यं ग्रन्थिमं तथा ।
प्रलम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११ ॥
चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च प्रक्षेप्यारोपके तथा ॥ १२ ॥
आवेध्यं कुण्डलादीह तथा श्रवणभूषणम् ।
श्रोणिसूत्राङ्गदैर्मुक्ता बन्धनीयानि निर्दिशेत् ॥ १३ ॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः ॥ १४ ॥
भूषणानां विकल्पं च पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥ १५ ॥
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् ।

---

१ साधिताः—ख ।  २ तपितं—ख ।

कुण्डलं मोचकं कीलः कर्णाभरणमिष्यते ॥ १६ ॥
मुक्तावली हर्षकं च सत्सूत्रं कण्ठभूषणम् ।
कटकोऽङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥ १७ ॥
हस्तवी[1] वलयं चैव बहुनालीविभूषणम् ।
रुचिको।चितिकैश्चैव मणिबन्धविभूषणम् ॥ १८ ॥
केयूरमङ्गदं चैव कूर्परोपरि भूषणम् ।
त्रिरसं चैव हारं च भवेद्वक्षोविभूषणम् ॥ १९ ॥
व्यालम्बिमौक्तिका हारा माल्याद्या देहभूषणम् ।
तरलं सूत्रकं चैव भवेत् कटिविभूषणम् ॥ २० ॥
अयं पुरुषनिर्योगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥ २१ ॥
शिखापाशः शिखाजालं पिण्डपात्रं तथैव च ।
चूडामणिर्मकरिका मुक्ताजालं गवाक्षकम् ॥ २२ ॥
शिरसो भूषणं चैव विचित्रं शीर्षजालकम् ।
कुण्डलं शिखिपात्रं च वेणीकञ्जसरोचकम् ॥ २३ ॥
ललाटतिलकश्चैव नानाशिल्पप्रयोजितः ।
भ्रूकक्षोपरि गुच्छश्च कुसुमानुकृतिर्भवेत् ॥ २४ ॥
कर्णिका कर्णवलयं तथा स्यात् पत्रकर्णिका ।
आवेष्टितः कर्णमुद्रा कर्णोत्कीलक एव च ॥ २५ ॥
नानाचित्रविचित्राणि रत्नपात्राणि चैव हि ।
कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च ॥ २६ ॥
तिलकः पत्ररेखा च भवेद्गण्डविभूषणम् ।
त्रिवेणी[2] चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥ २७ ॥
नेत्रयोरञ्जनं कार्यमधरस्य च रञ्जनम् ।
दन्तानां विविधा रागाश्चतुर्णां शुक्लता तथा ॥ २८ ॥
रागान्तरविकल्पाथ शोभनेनाधिकोज्ज्वलः ।

---

१ श्लोकोऽयं खपुस्तके नास्ति ।
२ एते चत्वारः श्लोकाः खपुस्तके नोपलभ्यन्ते ।

मुग्धानां सुन्दरीणां च मुक्ताभाः सितशोभनाः ॥ २९ ॥
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ।
अश्मरागो द्योतितः स्यादधरः पल्लवप्रभः ॥ ३० ॥
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् ।
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ॥ ३१ ॥
रत्नावली च सूत्रं च ज्ञेयं कण्ठविभूषणम् ।
द्विरसस्त्रिरसश्चैव चतूरसकमेव च ॥ ३२ ॥
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ।
नानाशिल्पकृताश्चैव हारा वक्षोविभूषणम् ॥ ३३ ॥
मणिजालावनद्धं च भवेत् स्तनविभूषणम् ।
अङ्गदं वलयं चैव बाहुमूलविभूषणम् ॥ ३४ ॥
बर्जुरं स्वेच्छितीकश्च बाहुनालीविभूषणम् ।
कटकं कलशाखा च हस्तपत्रं सुपूरकम् ॥ ३५ ॥
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम् ।
काञ्ची मौक्तिकजालाढ्या कुलकं मेखलं तथा ॥
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ॥ ३६ ॥
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥ ३७ ॥
द्वात्रिंशच्चतुष्षष्टिः शतमष्टोत्तरं तथा ।
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ॥ ३८ ॥
नूपुरः किङ्किणीकं च रत्नजालकमेव च ।
सङ्घोषकटकं चैव गुल्फोपरि विभूषणम् ॥ ३९ ॥
जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ।
अङ्गुष्ठे तिलकं चैव पादयोस्तु विभूषणम् ॥ ४०. ॥
[1]तथैवालक्तरागश्च नानाभक्तिनिवेशितः ।
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव वा ॥ ४१ ॥
एतद्विभूषणं नार्या आकेशादानखादपि ।

---

१ श्लोकोऽयं खपुस्तके न दृश्यते ।

यथाभावरसावस्थं विज्ञायैवं प्रयोजयेत् ॥ ४२ ॥
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा ।
विश्वकर्मोद्भवं कार्यं बुध्वा चापि प्रयोजयेत् ॥ ४३ ॥
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ।
स्वाधीनं चेच्छया चैव कर्तुमङ्गस्य भूषणम् ॥ ४४ ॥
विभावतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ।
यथास्थानान्तरगतं भूषणं रत्नसंयुतम् ॥ ४५ ॥
न तु नाट्यप्रयोगेषु कर्तव्यं भूषणं बहु ।
खेदं जनयते तद्धि सव्यायतविचेष्टनात् ॥ ४६ ॥
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ।
गुरुभारावसन्नस्य स्वेदो मूर्च्छा प्रजायते ॥ ४७ ॥
तस्मात् न सम्यक् च कृतं सौवर्णं भूषणं भवेत् ।
जतुपूर्णाल्परत्नं तु न खेदजननं भवेत् ॥ ४८ ॥
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते ।
यद्भावाद्विनिष्पन्ना मानुषाणां विभूषणम् ॥ ४९ ॥
भूषणं चापि वेषस्तु नानावस्थासमाश्रयम् ।
दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा ॥ ५० ॥
विद्याधरीणां यक्षीणां अप्सरोनागयोषिताम् ।
ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते ॥ ५१ ॥
तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् ।
दिव्यानां नरनारीणां मानुषीणां तथैव च ॥ ५२ ॥
शिखापुटशिखण्डा तु मुक्ताभूयिष्ठभूषणम् ।
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः ॥ ५३ ॥
यक्षिण्यप्सरसां चैव कार्यं रत्नैर्विभूषणम् ।
यस्त्वासां तु भवेद्वेषो यक्षीणां केवलं शिखा ॥ ५४ ॥
दिव्यवत् सम्प्रकर्तव्यं नागीनां तु विभूषणम् ।
मुक्तामणिलताप्रायं फलं तासां तु केवलम् ॥ ५५ ॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ।

न चापि भूषणं कार्यं तासामत्यर्थतो भवेत् ॥ ५६ ॥
मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम् ।
तासां चैव तु कर्तव्यं पीतवस्त्रपरिच्छदम् ॥ ५७ ॥
पद्ममणिप्रायं गन्धर्वीणां विभूषणम् ।
वीणाहस्ता च कर्तव्याः कौसुम्भवसनास्तथा ॥ ५८ ॥
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम् ।
सिता दंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदः ॥ ५९ ॥
वैदूर्यमुक्ताभरणाः कर्तव्यः सुरयोषितः ।
शुकपिच्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ॥ ६० ॥
पुष्परागैश्च मणिभिः क्वचिद्वैदूर्यभूषितम् ।
दिव्यवानरनारीणां कार्या नीलपरिच्छदाः ॥ ६१ ॥
एवं शृङ्गारिणः कार्यो वेषो दिव्याङ्गनाश्रयः ।
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा ॥ ६२ ॥
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
वेषास्त्वाभरणोपेतास्तांश्च सम्यङ् निबोधत ॥ ६३ ॥
अवन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं सशिखापाशवेणिकम् ॥ ६४ ॥
आभीरयुवतीनां तु द्विवेणीधरमेव च ।
शिरः परिगमप्रायो नीलप्रायमथाम्बरम् ॥ ६५ ॥
तथा पूर्वोत्तरस्त्रीणां समुद्धृतशिखण्डकम् ।
आकेशं छादनं तासां वेषकर्मणि कीर्तितम् ॥ ६६ ॥
तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंज्ञितम् ।
कुम्भीपदकसंयुक्तं तथा वर्तललाटिकम् ॥ ६७ ॥
गणिकानां तु कर्त्तव्यमिच्छाविच्छित्तिमण्डनम् ।
देशजातिविशेषेण देशानामपि कारयेत् ॥ ६८ ॥
वेषं तथा चाभरणं क्षुरकर्मपरिच्छदम् ।
अदेशजो हि वेषस्तु न शोभां जनयिष्यति ॥ ६९ ॥
मेखलोरसि बन्धे च हास्यायैवोपजायते ।

तथा प्रोषितकान्तायां व्यसनाभिहताश्च याः ॥ ७० ॥
वेषः स्यान्मलिनस्तासामेकवेणीधरं शिरः ।
विप्रलम्भे हि नार्यास्तु शुद्धो वेषो भवेदिह ॥ ७१ ॥
नानाभरणसंयुक्तो न चापि मृजयान्वितः ।
एवं स्त्रीणां प्रयोक्तव्या देशावस्थासमुद्भवाः ॥ ७२ ॥
पुरुषाणां पुनश्चैव वेषान् वक्ष्यामि तत्त्वतः ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ॥ ७३ ॥
सितनीलसमायोगात् पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगात् पद्मवर्ण इति स्मृतः ॥ ७४ ॥
पीतनीलसमायोगाद्धरितो नाम जायते ।
नीलरक्तसमायोगात् कषायो नाम जायते ॥ ७५ ॥
रक्तपीतसमायोगात् गौर इत्यभिधीयते ।
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ॥ ७६ ॥
त्रिचतुर्वर्णसंयुक्ता बहवः परिकीर्तिताः ।
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ॥ ७७ ॥
दुर्बलस्य च भागौ द्वौ नीलमुक्तं प्रपादयेत् ।
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके ॥ ७८ ॥
बलवान् सर्ववर्णानां नील एव प्रकीर्तितः ।
एवं वर्णविधिं ज्ञात्वा नानासंयोगसम्भवम् ॥ ७९ ॥
ततस्तु वर्तना कार्या नानारूपसमाश्रया ।
वर्तनाच्छादितं रूपं स्ववेषपरिवर्जितम् ॥ ८० ॥
नाट्यधर्मप्रवृत्तेन ज्ञेयं तत् प्रकृतिस्थितम् ।
सवर्णमात्मनश्चान्यं वर्णजैर्वेषसंश्रयैः ॥ ८१ ॥
प्रकृतिर्वाऽस्य कर्तव्या तस्य प्रकृतिमास्थिता ।
यथा नरः स्वभावं स्वं परित्यज्यान्यदेहजम् ॥ ८२ ॥
पराभवं प्रकुरुते भूतदेहसमाश्रयम् ।
वर्णकैश्चैव वेषैश्च छादितः पुरुषस्तथा ॥ ८३ ॥
परप्रभावं कुरुते यस्य वेषसमाश्रयम् ।

देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ ८४ ॥
ते प्राणिन इति प्रोक्ता जीवबन्धाश्च ये त्विह ।
स्त्रीभावाः पर्वताभार्याः समुद्रा वाहनानि च ॥ ८५ ॥
नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंश्रयाः ।
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ॥ ८६ ॥
नानाप्रहरणाद्याश्च ते प्राणिन इति स्मृताः ।
अथवा कारणोपेता भवन्त्येते शरीरिणः ॥ ८७ ॥
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ।
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च ॥ ८८ ॥
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ।
देवा गौरास्तु कर्त्तव्या यक्षाश्चाप्सरसस्तथा ॥ ८९ ॥
रुद्राः सद्रुहिणस्कन्दास्तपनीयसमप्रभाः ।
सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणः ॥ ९० ॥
समुद्रो हिमवान् गङ्गा श्वेताः कार्यास्तु वर्णतः ।
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ॥ ९१ ॥
नारायणो नरश्चैव श्यामवर्णोऽथ वासुकिः ।
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ॥ ९२ ॥
पिशाचा यम आकाशं श्यामवर्णास्तु वर्णतः ।
नानावर्णा स्मृता यक्षा गन्धर्वा भूतपन्नगाः ॥ ९३ ॥
विद्याधराः सपितरो वानराश्च तथैव हि ।
वसन्ति सप्तद्वीपेषु ये नरा वर्णतस्तु ते ॥ ९४ ॥
कर्तव्या नाट्यतत्त्वज्ञैर्निष्टप्तकनकप्रभाः ।
जम्बूद्वीपस्य वर्षे ये नानावर्णाश्रया नराः ॥ ९५ ॥
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः ।
भद्राश्च वपुषा श्वेताः कर्तव्या वर्णतो बुधैः ॥ ९६ ॥
केतुमालास्तथा श्वेता गौराः शेषेषु कीर्तिताः ।
नानावर्णा स्मृता भूता वामना विकृताननाः ॥ ९७ ॥
वराहमेषमहिषमृगवक्त्रास्तथैव च ।

पुनश्च भारते वर्षे तांस्तान् वर्णान् निबोधत ॥ ९८ ॥
राजानः पञ्चवर्णाः स्युः श्यामो गौरास्तथैव च।
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः ॥ ९९ ॥
कारणव्यपदेशेन न तथाऽऽत्मेच्छया पुनः।
वर्णस्त्वन्यः प्रयोक्तव्यो देशजातिवयःश्रितः ॥ १०० ॥
देशं कालं च जातिं च पृथिव्युद्देशमेव च।
विज्ञाय वर्तनां कुर्यात् पुरुषाणां प्रयोगवित् ॥ १०१ ॥
किरातबर्बरान्ध्राश्च द्रमिलाः काशिकोसलाः।
पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिता स्मृताः ॥ १०२ ॥
शकाश्च यवनाश्चैव पह्लवा वाह्लिकादयः।
प्रायेण गौराः कर्त्तव्या उत्तरां ये श्रिता दिशम् ॥ १०३ ॥
पाञ्चालाः शूरसेनाश्च तथा चैवोढ्रमागधाः।
अङ्गवङ्गकलिङ्गास्तु श्यामाः कार्यास्तु वर्णतः ॥ १०४ ॥
ब्राह्मणाः क्षत्रियाश्चैव रक्ताः कार्याः सदैव हि।
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः ॥ १०५ ॥
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्णनम्।
श्मश्रुकर्म प्रयुञ्जीत देशकर्मक्रियानुगम् ॥ १०६ ॥
शुक्लं श्यामं विचित्रं च तथा रोमशमेव च।
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ॥ १०७ ॥
शुद्धस्तु लिङ्गिनः कार्यस्तथामात्यपुरोधसाम्।
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥ १०८ ॥
दिव्या ये पुरुषाः केचित् सिद्धविद्याधरादयः।
नृपतीनां कुमाराणां ये च राजोपजीविनः ॥ १०९ ॥
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये।
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः ॥ ११० ॥
अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम्।
व्यसनाभिहतानां च श्यामं श्मश्रु भवेत्तदा ॥ १११ ॥
ऋषीणां तापसानां च ये च दीर्घव्रता नराः।

सिद्धविद्याधराणां च रोमशस्तु विधीयते ॥ ११२ ॥
एवं नानाप्रकारं तु श्मश्रुकर्म प्रयोजयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि वेषान्नानाप्रयोगजान् ॥ ११३ ॥
वेष्टिमं विततं चैव सङ्घात्यं ग्रथितं तथा ।
प्रालम्बकं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११४ ॥
अच्छादनं बहुविधं नानावर्तनसम्भवम् ।
ज्ञेयं तत् त्रिप्रकारं तु शुद्धं रक्तं विचित्रकम् ॥ ११५ ॥
शुद्धो विचित्रो मलिनः त्रिविधो वेष उच्यते ।
तेषां विभागं व्याख्यास्ये यथाकार्यं प्रयोक्तृभिः ॥ ११६ ॥
देवाभिगमने चैव माङ्गल्ये नियमस्थिते ।
तिथिनक्षत्रयोगे च विवाहकरणे तथा ॥ ११७ ॥
धर्मप्रवृत्तं यत्कार्यं स्त्रीणां च पुरुषस्य वा ।
वेषस्तत्र भवेच्छुद्धो ये च प्रापलिका नराः ॥ ११८ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
नृपाणां कर्कशानां च चित्रो वेषो भवेत्तदा ॥ ११९ ॥
कञ्चुकीनाममात्यानां श्रेष्ठीनां पुररोधसाम् ।
सिद्धविद्याधराणां च वणिक्शास्त्रविदामपि ॥ १२० ॥
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ।
शुद्धो वस्त्रविधि स्तेषां कर्तव्यो नाटकाश्रयः ॥ १२१ ॥
उन्मत्तानां प्रमत्तानां जनानामध्वगामिनाम् ।
व्यसनोपगतानां च मलिनो वेष इष्यते ॥ १२२ ॥
मुनिनिर्ग्रन्थशाक्येषु त्रिदण्डिश्रोत्रियेषु च ।
वृत्तानुगस्तु कर्तव्यो वेषोऽलङ्कारभावनः ॥ १२३ ॥
परिव्राण्मुनिमुख्येषु तापसेषु तथैव च ।
काषायवसनो वेषः कार्यस्त्वर्थवशानुगः ॥ १२४ ॥
नानाचित्राणि कार्याणि कुर्यात् पाशुपतेष्वथ ।
कुलजाश्चैव ये प्रोक्तास्तेषां चापि यथोचितम् ॥ १२५ ॥
अन्तःपुरस्य रक्षार्थे विनियुक्ता हि ये नराः ।

काषायकञ्चुकपटाः कार्यास्त्वेषां यथाविधि ॥ १२६ ॥
चीरवल्कलचर्माणि तापसानां तु कारयेत् ।
अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेदथ ॥ १२७ ॥
वेषः साङ्ग्रामिकश्चैव शूराणां संप्रकीर्तितः ।
विचित्रशस्त्रकवचो बद्धत्राणो धनुर्धरः ॥ १२८ ॥
विचित्रवेषः कर्त्तव्यो नृपाणां नित्यमेव च ।
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पादमङ्गले ॥ १२९ ॥
एवमेष भवेद्वेषो वयोजातिगुणान्वितः ।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ॥ १३० ॥
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये ।
नानावस्थां समासाद्य शुभाशुभकृतस्तथा ॥ १३१ ॥
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् ।
देवानां मानुषाणां च देशजातिवयःश्रितः ॥ १३२ ॥
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः ।
मध्यमा मौलिनश्चैव कनिष्ठा शीर्षमौलिनः ॥ १३३ ॥
नराधिपानां कर्तव्यास्तथा मस्तकिनो बुधैः ।
विद्याधराणां सिद्धानां चारणानां तथैव च ॥ १३४ ॥
ग्रन्थितः केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ।
उदात्ताश्चापि ये तत्र कार्यास्ते पार्श्वमौलिनः ॥ १३५ ॥
तस्मात्तु मुकुटाश्लिष्टाः प्रयोगे दिव्यपार्थिवे ।
केशानां छेदनं नेष्टं वेदवेदे यथाश्रुतिः ॥ १३६ ॥
भद्रीकृतस्य वा यज्ञे शिरसश्छेदनेप्सया ।
केशानां चातिदीर्घत्वात् स्मृतं मुकुटधारिणः ॥ १३७ ॥
विद्याधराणां सिद्धानां चारणानां तथैव च ।
ग्रन्थितः केशमुकुटः कर्त्तव्यस्तु प्रयोक्तृभिः ॥ १३८ ॥
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ।
वेष्टनं बन्धपट्टादि प्रतिशीर्षाणि कारयेत् ॥ १३९ ॥
सेनापतेः पुनश्चापि युवराजस्य चैव हि ।

मस्तकेष्वर्धमुकुटं प्रयोगे सम्प्रयोजयेत् ॥ १४० ॥
शेषाणामर्धयोगेन देशजातिवयःश्रुतम् ।
शिरः प्रयोक्तृभिः कार्यं प्रयोगस्य वशानुगम् ॥ १४१ ॥
बालानामपि कर्तव्यं न शिखण्डविभूषितम् ।
जटामुकुटलम्बं च मुनीनां तु भवेच्छिरः ॥ १४२ ॥
रक्षोदानवदैत्यानां पिङ्गकेशकृतानि तु ।
हरिश्मश्रूणि च तथा मुखशीर्षाणि कारयेत् ॥ १४३ ॥
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् ।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं तु शीर्षकम् ॥ १४४ ॥
शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राट्दीक्षितेषु च ।
शिरोमुण्डं तु कर्त्तव्यं यज्ञदीक्षान्वितेषु च ॥ १४५ ॥
तथावृत्तानुषङ्गेण शेषाणां लिङ्गिनां शिरः ।
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा ॥ १४६ ॥
वधूनां चापि कर्तव्यं ये च राजोपजीविनः ।
ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्द्धजम् ॥ १४७ ॥
चेटानामपि कर्त्तव्यं त्रिशिखं मुण्डमेव वा ।
विदूषकस्य कर्त्तव्यं खल्लि काकपदं तथा ॥ १४८ ॥
एवं नानाप्रकारेण बुध्या चैषां विभज्य च ।
अतस्तैर्भूषणैश्चित्रैर्वस्त्रैर्माल्यैरथापि वा ॥ १४९ ॥
अवस्थाप्य कृतिः स्थाप्या प्रयोगरससम्भवा ।
स्त्रीणां वा पुरुषाणां वा व्यवस्थां प्राप्य तादृशीम् ॥ १५० ॥
एवं ज्ञेयाऽङ्गरचना नानाप्रकृतिसम्भवा ।
सञ्जीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ॥ १५१ ॥
यः प्राणिनां प्रवेशो वै स सञ्जीव इति स्मृतः ।
चतुष्पदोऽथ द्विपदस्तथाचैवापदः स्मृतः ॥ १५२ ॥
उरगा ह्यपदा ज्ञेया द्विपदाः खगमानुषाः ।
ग्राम्यारण्याश्च पशवो विज्ञेयास्ते चतुष्पदाः ॥ १५३ ॥
एते तु युद्धसम्भेदो त्ववरोधे तथैव च ।

नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः ॥ १५४ ॥
आयुधानि च वर्माणि पुरुषाणां प्रमाणतः ।
तान्यहं सम्प्रवक्ष्यामि यथायुक्ति प्रमाणतः ॥ १५५ ॥
भिण्डिर्द्वादशतालः स्यात् दश कुन्तो भवेदथ ।
अष्टौ शतघ्नी शूलश्च तोमरो शक्तिरेव च ॥ १५६ ॥
अष्टतालं धनुर्ज्ञेयमायामस्तु द्विहस्ततः ।
शरो गदा च वज्रं च चतुस्तालो भवेदथ ॥ १५७ ॥
अङ्गुलानि त्वसिः कार्या चत्वारिंशत्प्रमाणतः ।
द्वादशाङ्गुलकं चक्रं ततोऽर्द्धं प्रास उच्यते ॥ १५८ ॥
प्रासवत् पट्टिसं विद्याद्दण्डं चैव हि विंशतिः ।
कणयं च विवेद्वंशं द्यङ्गुलैः परिमाणतः ॥ १५९ ॥
षोडशाङ्गुलिविस्तीर्णं चर्म कार्यं द्विहस्ततः ।
षोडशाङ्गुलिविस्तीर्णं सवाल्यं सप्रघण्डिकम् ॥ १६० ॥
त्रिंशदङ्गुलमानेन कर्त्तव्यं खेटकं बुधैः ।
जर्जरोदण्डकाष्ठं च तथैव प्रतिशीर्षकम् ॥ १६१ ॥
छत्रं च चामरं चैव ध्वजो भृङ्गार एव च ।
यत्किञ्चित् मानुषे लोके द्रव्यं पुंसां प्रयोगजम् ॥ १६२ ॥
तत्सर्वं तूपकरणं नान्यस्मिन् संविधीयते ।
यद्यस्य विषयप्राप्तं तेनोक्तं तस्य लक्षणम् ॥ १६३ ॥
जर्जरे दन्तकाष्ठे च सम्प्रवक्ष्यामि लक्षणम् ।
श्वेतभूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ॥ १६४ ॥
माहेन्द्रे तु ध्वजे कार्यं लक्षणं विश्वकर्मणा ।
तेषामन्यतमे कार्यं जर्जरं दारुकर्मतः ॥ १६५ ॥
अथवा वृक्षजातस्य प्ररोहो वाऽपि जर्जरः ।
वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १६६ ॥
प्रमाणतोऽङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
पञ्चपर्व चतुर्ग्रन्थिस्तालमात्रस्तथैव च ॥ १६७ ॥
स्थूलग्रन्थिर्न कर्त्तव्यो न शाखी न च कीटवान् ।

न क्रिमिक्षतपर्वा च न हीनस्त्वन्यवेणुभिः ॥ १६८ ॥
अक्तं तु मधुसर्पिर्भ्यां माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥ १६९ ॥
यो विधिर्यः क्रमश्चैव माहेन्द्रे यो विधिः स्मृतः ।
स जर्जरस्य कर्त्तव्यः पुण्यवेणुसमाश्रयः ॥ १७० ॥
भवेद्वै दीर्घपर्वा तु तनुपर्वा तथैव च ।
पर्वानुमण्डलं चैव पुण्यवेणुः प्रकीर्त्तितः ॥ १७१ ॥
विधिरेष मया प्रोक्तो जर्जरस्य तु लक्षणं ।
अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १७२ ॥
बिल्वं कापित्थं वंशो वा दण्डकाष्ठं भवेत्सदा ।
चक्रं चैव च तत्कार्यं त्रिभागे लक्षणान्वितम् ॥ १७३ ॥
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् ।
मन्दशालं भवेद्यश्च दण्डकाष्ठं च तद्भवेत् ॥ १७४ ॥
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत् स त्वपचयं महान्तं प्राप्नुयाद्ध्रुवम् ॥ १७५ ॥
तथा शीर्षविधानार्थं पटी कार्या तु मानतः ।
सप्रमाणविनिर्दिष्टा द्वात्रिंशच्चाङ्गुलानि वा ॥ १७६ ॥
बिल्वकल्केन कर्त्तव्या पटी चीरसमाश्रया ।
स्विन्नेन बिल्वकल्केन द्रवेण च समागता ॥ १७७ ॥
भस्मना वा तुषैर्वापि प्रतिशीर्षाणि कारयेत् ।
संछाद्य कृतको वस्त्रैर्बिल्वदिग्धैर्घनाश्रयैः ॥ १७८ ॥
बिल्वकल्केन चीरं तु दिग्धाङ्गं योजयेत् पटीम् ।
न स्थूलां न तनुं चैव न मृद्वीं चैव कारयेत् ॥ १७९ ॥
शुष्कायास्तु ततस्तस्या मलिना तपयोगतः ।
छेद्यं बुधस्तु कुर्वीत विधिदृष्टेन कर्मणा ॥ १८० ॥
सुतीक्ष्ण तु शस्त्रेण अर्द्धार्धं प्रविभज्य च ।
स्वप्रमाणं विनिर्दिष्टं ललाटाकृति कोणजम् ॥ १८१ ॥
अर्धाङ्गुलललाटं तु छेद्यं कार्यं षडङ्गुलम् ।

अर्धाऽर्धमङ्गुलच्छेद्यं कटयोस्त्र्यङ्गुलं भवेत् ॥ १८२ ॥
कटान्ते कर्णतालस्य छेद्यन्त्वधिकमङ्गलम् ।
त्र्यङ्गुलं कर्णविवरं तथास्य च्छेद्यमेव च ॥ १८३ ॥
ततश्च वावट्ठः कार्या ससमा द्वादशाङ्गुला ।
पटीछेद्यकृतं ह्येतद्विधानं विहितं मया ॥ १८४ ॥
तस्योपरि ततः कार्या मुकुटा विविधाश्रयाः ।
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिताः ॥ १८५ ॥
तत्रोपकरणानीह नाट्ययुक्तिकृतानि च ।
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥ १८६ ॥
यत्किञ्चिदस्मिन् लोके तु सचराचरसंहिते ।
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् ॥ १८७ ॥
यद्यस्य विषयं प्राप्यं स तस्मिंस्त्वधिगच्छति ।
नान्यतः पुरुषाणां हि नान्योपकरणाश्रयम् ॥ १८८ ॥
यद्येनोत्पादितं कर्म शिल्पयोगक्रियापि वा ।
तस्य तेन कृता सृष्टिः प्रमाणं लक्षणं तथा ॥ १८९ ॥
या कार्ष्णायसभूयिष्ठा कृता सृष्टिर्महत्तरा ।
नास्माकं सम्मता नाट्ये गुरुत्वात् खेददा हि सा ॥ १९० ॥
यद्द्रव्यं जीवलोके तु नानालक्षणलक्षितम् ।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत् ॥ १९१ ॥
प्रासादगृहयानानि नाट्योपकरणानि च ।
न शक्यानि तथा कर्त्तुं यथोक्तानीह लक्षणैः ॥ १९२ ॥
लोकधर्मी भवेत्वन्या नाट्यधर्मी तथापरा ।
स्वभावो लोकधर्मी तु नाट्यधर्मी विकारतः ॥ १९३ ॥
लोहादिभिर्न कर्तव्यं नगसारमयं न च ।
नाट्योपकरणं तज्ज्ञैर्गुरुत्वात् खेदकृद्धि तत् ॥ १९४ ॥
जतु काष्ठं चर्मवस्त्रप्रभावेणुदलैस्तथा ।
नाट्योपकरणानीह लघुकर्माणि कारयेत् ॥ १९५ ॥
अथवा यदि वस्त्राणां तद्विधानामसम्भवः ।

तालीयजैः कीलजैर्वा श्लक्ष्णैर्वस्त्रैः क्रिया भवेत् ॥ १९६ ॥
तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः ।
जतुभाण्डक्रियाभिश्च नानारूपाणि कारयेत् ॥ १९७ ॥
प्रतिपादौ प्रतिशिरः प्रतिहस्तौ प्रतित्वचम् ।
तृणजैः कीलजैर्भाण्डैः सरूपाणीह कारयेत् ॥ १९८ ॥
यद्यस्य यादृशं रूपं सारूप्यगुणसम्भवम् ।
मृन्मयं तत्र कृत्स्नं तु नानारूपांस्तु कारयेत् ॥ १९९ ॥
भाण्डवस्त्रमधूच्छिष्टैः लाक्षयाभ्रदलेन च ।
नगास्तु विविधाः कार्याः चर्मवर्मध्वजास्तथा ॥ २०० ॥
नानाकुसुमजातानि फलानि कुसुमानि च ।
विविधानि च भाण्डानि लाक्षया वेह कारयेत् ॥ २०१ ॥
भाण्डवस्त्रमधूच्छिष्टैः ताम्रवर्णैस्तथैव च ।
तत्साम्यं नीलरागेण अभ्रपत्रेण चैव हि ॥ २०२ ॥
रञ्जितेनाभ्रपत्रेण भर्षाश्चैवात्र कारयेत् ।
उपाश्रयस्तथाऽप्येषा शुल्वभ्रष्टैर्न कारयेत् ॥ २०३ ॥
विविधा मुकुटा दिव्या पूर्वं ये गदिता मया ।
तेऽभ्रपत्रोज्वलाः कार्या माणिक्यालोकशोभिताः ॥ २०४ ॥
न शास्त्रप्रभवं कर्म तेषां हि समुदाहृतम् ।
विचार्य बुद्ध्या कर्तव्यमन्यापोहप्रयोजितम् ॥ २०५ ॥
एवं मर्त्यक्रियायोगो भविष्यन् कथितो मया ।
यस्मादल्पबलत्वं हि मानुषेषु भविष्यति ॥ २०६ ॥
मर्त्यानामल्पशक्तीनां न भवेदङ्गचेष्टितम् ।
नेष्टाः सुवर्णरत्नैस्तु मुकुटा भूषणानि वा ॥ २०७ ॥
युद्धे नियुद्धे नृत्ते वा दृष्टिव्यापारकर्मणि ।
गुरुभारावसन्नस्य स्वेदो मूर्च्छापि जायते ॥ २०८ ॥
स्वेदमूर्च्छाश्रमात्तस्य प्रयोगस्तु विनश्यति ।
प्राणात्ययः कदाचित्तु भवेद्व्यायतचेष्टनात् ॥ २०९ ॥
तस्मात्ताम्रमयैः पत्रैर्मुकुटानीह कारयेत् ।

रक्तस्थनीलहारेण अभ्रपत्रेण वेदितम् ॥ २१० ॥
भाण्डैरथ मधूच्छिष्टैः कार्याण्याभरणानि तु ।
एवं लोकोपचारेण स्वबुद्धिविभवेन वा ॥ २११ ॥
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ।
भोक्तव्यं नायुधं रङ्गे न छेद्यं न च ताड़नम् ॥ २१२ ॥
प्रादेशमात्र गृह्णीयात् संज्ञास्त्रं शस्त्रमेव हि ।
शिक्षायोगेन नाट्येऽस्मिन् शिक्षामायाकृतेन वा ॥ २१४ ॥
शस्त्रमोक्षस्तु कर्त्तव्यो रङ्गमध्ये प्रयोक्तृभिः ।
एवं नानाप्रकारैस्तु आयुधाभरणानि च ।
नोक्तानि च मया यानि लोकग्राह्याणि तान्यपि ॥ २१४ ॥
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति ॥ २१५ ॥

इति नाट्यशास्त्रे आहार्याभिनयो नाम त्रयोविंशोऽध्यायः ॥

---

## अथ चतुर्विंशोऽध्यायः ।

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।
सत्त्वे कार्यः प्रयत्नस्तु नाट्यं सत्त्वे प्रतिष्ठितम् ॥ १ ॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः ॥ २ ॥
अव्यक्तरूपं सत्त्वं हि ज्ञेयं भावरसाश्रयम् ।
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः ॥ ३ ॥
अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया नाट्यरसाश्रयाः ।
यौवने ह्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः ॥ ४ ॥
आदौ त्रयोऽङ्गजाः प्रोक्ता दश स्वाभाविकाः परे ।
अयत्नजास्तथा सप्त रसभावोपबृंहिताः ॥ ५ ॥
भावो हावश्च हेला च परस्परसमुत्थिताः ।
सत्त्वभेदा भवन्त्येते शरीरप्रकृतिस्थिताः ॥ ६ ॥

  

देहात्मकं भवेत् सत्त्वं सत्त्वात् भावः समुत्थितः ।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता ॥ ७ ॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥ ८ ॥
भावातिरिक्तं सत्त्वं हि व्यतिरिक्तं सयोनिषु ।
नैकावस्थान्तरगतं हावं तमिह निर्दिशेत् ॥ ९ ॥
तत्राक्षिभ्रूविकाराढ्यशृङ्गाररससूचकः ।
सग्रीवारेचको ज्ञेयो भावश्चित्तसमुत्थितः ॥ १० ॥
य एव भावाः सर्वेषां शृङ्गाररससंश्रयाः ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ ११ ॥
लीलाविलासोविच्छित्तिर्विक्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिव्वोको ललितं तथा ॥ १२ ॥
विहृतं चेति विज्ञेया दश स्त्रीणां स्वभावजाः ।
अलङ्कारास्तथैतेषां लक्षणं शृणुत द्विजाः ॥ १३ ॥
वागङ्गालङ्कारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥ १४ ॥
स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥ १५ ॥
माल्याच्छादनभूषणविलेपनानामनादरन्यासः ।
स्वल्पोऽप्यधिकां शोभां जनयति या सा तु विच्छित्तिः ॥ १६ ॥
विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो व्यत्यासो विभ्रमो नाम ॥ १७ ॥
स्मितरुदितहसितभयरोगमोहदुःखश्रमाभिषङ्गाणाम् ।
सङ्करकरणं हर्षादसकृत् किलकिञ्चितं ज्ञेयम् ॥ १८ ॥
इष्टजनस्य कथायां लीलाहेलादिदर्शनेनापि ।
तद्भावभावनकृतं मोट्टायितमित्यभिख्यातम् ॥ १९ ॥
केशस्तनाधरादिग्रहणेष्वतिहर्षसम्भ्रमोत्पन्नम् ।

---

१ हाव०—ख । २ स्थित—क । ३ सङ्कट—ख ।

कुट्टमितं विज्ञेयं सुखमपि दुःखोपचारेण ॥ २० ॥
इष्टानां भावानां प्राप्तावभिमानगर्वसम्भूतः ।
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः ॥ २१ ॥
करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसंप्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रिभिरिदं स्मृतं ललितम् ॥ २२ ॥
प्राप्तानामपि वचनं क्रियते यदभाषणं ह्रिया स्त्रीभिः ।
व्याजात् स्वभावतो वा ह्येतत् समुदाहृतं विहृतम् ॥ २३ ॥
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च ।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥ २४ ॥
रूपयौवनलावण्यरूपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां यत् सा शोभेति भण्यते ॥ २५ ॥
विज्ञेया च तथा कान्तिः शोभैवा पूर्णमन्मथा ।
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ २६ ॥
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्बणत्वं चेष्टायां माधुर्यमिति कीर्त्तितम् ॥ २७ ॥
चापलेनानुपहता सर्वार्थेष्वविकत्थना ।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते ॥ २८ ॥
प्रयोगनिःसाध्वसता प्रागल्भ्यं समुदाहृतम् ।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः ॥ २९ ॥
सुकुमारा भवन्त्येते प्रयोगे ललितालकं ।
विलासललिते हित्वा दीप्ता ह्येते भवन्ति हि ॥ ३० ॥
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ ३१ ॥
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सनम् ।
उत्तमैश्च गुणैः स्पर्धा यत्र शोभेति सा स्मृता ॥ ३२ ॥
स्थिरसञ्चारिणो दृष्टिर्गतिर्गोवृषभाञ्चिता ।
स्मृतपूर्वं तथा वाचो विलास इति कीर्त्तितः ॥ ३३ ॥
अभ्यासात् करणानां तु श्लिष्टत्वं यत्र जायते ।

महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥ ३४ ॥
धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसायादचलनं स्थैर्यमित्यभिधीयते ॥ ३५ ॥
यस्य प्रभावादाकारा रोषहर्षभयादिषु ।
भावेषु नोपलभ्यन्ते गाम्भीर्यमिति शंसितम् ॥ ३६ ॥
अबुद्धिपूर्वकं यत्तु सुकुमारस्वभावजम् ।
शृङ्गाराकारचेष्टत्वं ललितं तत् प्रकीर्त्तितम् ॥ ३७ ॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
स्वजने वा परे वापि तदौदार्यमिति स्मृतम् ॥ ३८ ॥
अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ३९ ॥
सत्त्वजोऽभिनयः पूर्वं मया प्रोक्तो द्विजोत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥ ४० ॥
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
शाखो नाट्यायितं चैव निवृत्यङ्कुर एव च ॥ ४१ ॥
नानारसार्थयुक्तैर्वृत्तनिबद्धैः सचूर्णकृतैः ।
प्राकृतसंस्कृतपाठ्यो वाक्याभिनयो बुधैर्ज्ञेयः ॥ ४२ ॥
वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्वाच्याभिनयः सा सूचा सूरिभिर्ज्ञेया ॥ ४३ ॥
हृदयस्थैर्निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः ।
सूचेवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः ॥ ४४ ॥
यस्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।
शाखादर्शितमार्गः शाखाभिनयो बुधैर्ज्ञेयः ॥ ४५ ॥
नाट्यायितमुपचारैर्यत्क्रियतेऽभिनयसूचना नाट्ये ।
कालप्रहर्षहेतोः प्रवेशने सङ्गमं यावत् ॥ ४६ ॥
स्थाने ध्रुवास्वभिनयोः यत् क्रियते हर्षरोषशोकाद्यैः ।
भावरससंप्रयुक्तो ज्ञेयो नाट्यायितं तच्च ॥ ४७ ॥

---

१ कल्पं यत्—क।   २ भु०-क।

यस्त्वन्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्सम्बन्धार्थकृतं निवृत्तमेवाङ्कुरं विद्यात् ॥ ४८ ॥
एते मार्गास्तु निर्दिष्टा यथाभावरसान्विताः ।
काव्यवस्तुषु निर्दिष्टा द्वादशाभिनयात्मकाः ॥ ४९ ॥
आलापश्च प्रलापश्च विलापोऽन्यस्तथैव च ।
अनुलापोऽथ संलापो ह्यपलापस्तथैव च ॥ ५१ ॥
सन्देशश्चातिदेशश्च निर्देशश्च तथैव च ।
व्यवदेशोपदेशौ च अपदेशस्तथैव च ॥ ५१ ॥
आभाषणे तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यच्च प्रलापः स तु संज्ञितः ॥ ५२ ॥
करुणप्रभवो यस्तु विलाप इति स स्मृतः ।
बहुशोऽभिहितं वाक्यमनुलापः प्रकीर्त्तितः ॥ ५३ ॥
उक्तिप्रत्युक्तिसंयुक्तः संलाप इति स स्मृतः ।
पूर्वोक्तस्यान्यथाभावो ह्यपलाप इति स्मृतः ॥ ५४ ॥
तदिदं वचनं ब्रूहीत्येष सन्देश इष्यते ।
अतिदेशस्त्वयोक्तं तन्मयोक्तमिति स स्मृतः ॥ ५५ ॥
स एकोऽहं ब्रवीमीति निर्देशः स तु संज्ञितः ।
व्याजान्तरेण कथनं व्यपदेशो भवेत्तु सः ॥ ५६ ॥
इदं कुरु गृहाणेदमुपदेश इति स्मृतः ।
एते मार्गा हि विज्ञेया वाक्याभिनययोजकाः ।
सप्तप्रकारमेतेषां पुनर्वक्ष्यामि लक्षणम् ॥ ५७ ॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः ।
आत्मस्थश्च परस्थश्च प्रकाराः सप्त चैव तु ॥ ५८ ॥
एष ब्रवीति नाहं भो वदामीति च यद्वचः ।
प्रत्यक्षश्च परस्थश्च वर्त्तमानश्च तद्भवेत् ॥ ५९ ॥
अहं करोमि गच्छामि वदामि वचनं तव ।
आत्मस्थो वर्त्तमानश्च प्रत्यक्षश्चैव स स्मृतः ॥ ६० ॥
करिष्यामि गमिष्यामि वदिष्यामीति यद्वचः ।

आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥ ६१ ॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः ।
आत्मस्थश्च परस्थश्च वृत्तकालस्तु स स्मृतः ॥ ६२ ॥
त्वया हता जिताश्चेति यो वदेन्नाट्यकर्मणि ।
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ॥ ६३ ॥
ममाद्यैव च सम्पाद्यं तत्कार्यं भवता सह ।
आत्मस्थश्च परस्थश्च वर्त्तमानश्च स स्मृतः ॥ ६४ ॥
हस्तमन्तरितं कृत्वा यद्वदेन्नाट्यकर्मणि ।
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ॥ ६५ ॥
परेषामात्मनश्चैव कालस्यैव विशेषणात् ।
सप्तप्रकारकस्यैव भेदा ज्ञेया ह्यनेकशः ॥ ६६ ॥
एते प्रयोक्तृभिर्ज्ञेया मार्गा ह्यभिनये स्मृताः ।
एभिरेव विनिष्पन्नो विविधोऽभिनयो मतः ॥ ६७ ॥
शिरोवदनपादोरुजङ्घोदरकटीकृतः ।
समकर्मविभागो यः सामान्याभिनयस्तु सः ॥ ६८ ॥
ललितैर्हस्तसञ्चारैस्तथा मृद्वङ्गचेष्टितैः ।
अभिनेयस्तु नाट्यज्ञै रसभावसमन्वितैः ॥ ६९ ॥
अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितैः ।
लयतालकलापादिप्रमाणनियतात्मजम् ॥ ७० ॥
सुविभक्तकथालापमनिष्ठुरमनाकुलम् ।
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं तु तत् ॥ ७१ ॥
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ।
अनिबद्धं गीतवाद्यै नाट्यं बाह्यमिति स्मृतम् ॥ ७२ ॥
लक्षणाभ्यन्तरत्वादि तदभ्यन्तरमिष्यते ।
शास्त्रबाह्यं भवेद्यस्तु तद्बाह्यमिति संज्ञितम् ॥ ७३ ॥
अनेन लक्ष्यते यस्माद् प्रयोगः कर्म चैव हि ।
तस्माल्लक्षणमेतद्धि नाट्ये तस्मिन्नियोजितम् ॥ ७४ ॥
अनाचार्योदिता ये च ये च शास्त्रबहिष्कृताः ।

बाह्यं ते तु प्रयोक्ष्यन्ते क्रियामन्त्रैः प्रयोजितम् ॥ ७५ ॥
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च।
इन्द्रियैरिन्द्रियार्थैश्च भावैरभिनयेद् बुधः ॥ ७६ ॥
कृत्वा साचीकृतां[1] दृष्टिं शिरः पार्श्वानतं तथा।
तर्जनी कर्णदेशे तु शब्दं त्वभिनयेद् बुधः ॥ ७७ ॥
किञ्चिदाकुञ्चिते नेत्रे भ्रुवोरुत्क्षेपणेन च।
तथाङ्गगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ॥ ७८ ॥
कृत्वा पताके मूर्ध्निस्थे किञ्चित् प्रचलिताङ्गुलिः।
निर्वर्णयन्त्या दृष्ट्या तु रूपं त्वभिनयेद्बुधः ॥ ७९ ॥
किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम्।
एकोल्लासेन[2] हृष्टेष्टौ[3] रसगन्धौ विनिर्दिशेत् ॥ ८० ॥
पञ्चानामिन्द्रियाणां च भावा ह्येतेऽनुभावजाः।
त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य च तथैव च ॥ ८१ ॥
इन्द्रियार्थश्च मनसा भाव्यते ह्यनुभावितः।
न वेत्ति ह्यमनाः किञ्चिद्विषयं पञ्चहेतुकम् ॥ ८२ ॥
मनसस्त्रिविधो भावो विज्ञेयोऽभिनयं प्रति।
इष्टोऽनिष्टस्तथा चैव मध्यस्थश्च तथैव च ॥ ८३ ॥
गात्रप्रह्लादनेनेह तथा पुलकितेन च।
आननप्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् ॥ ८४ ॥
इष्टे शब्दे तथा रूपे स्पर्शे गन्धे रसेऽपि वा।
इन्द्रियैर्मनसा प्राप्तैः सौमुख्यं सम्प्रदर्शयेत् ॥ ८५ ॥
परावृत्तेन शिरसाऽप्रदानेन च चक्षुषः।
नेत्रनासाश्रितया ह्यनिष्टमभिनिर्दिशेत् ॥ ८६ ॥
न चातिमात्रहृष्टस्तु न चात्यन्तजुगुप्सया।
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ॥ ८७ ॥
तेनेदं तस्य वापीदं स एव प्रकरोति वा।
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः ॥ ८८ ॥

---

१ ०क्षी—क। २० च्छ्वा०—ख। ३ चोद्दिष्टौ—ख।

आत्मानुभावी योऽर्थः स्यात् स आत्मस्थ इति स्मृतः ।
परस्य वर्णनीयश्च परस्थः स तु संज्ञितः ।। ८९ ।।
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ।
स चेच्छागुणसम्पन्नो बहुधा काम इष्यते ।। ९० ।।
धर्मकामोऽर्थकामश्च मोक्षकामस्तथैव च ।
स्त्रीपुंसयोस्तु संयोगो यः कामः स तु संस्मृतः ।। ९१ ।।
यः स्त्रीपुरुषसंयोगे रतिसंयोगकारकः ।
स शृङ्गार इति ज्ञेय उपकारकृतः शुभः ।। ९२ ।।
इह प्रायेण लोकोऽयं शुभमिच्छति नित्यशः ।
सुखस्य च स्त्रियो मूलं नानाशीलाश्च ताः पुनः ।। ९३ ।।
देवतासुरगन्धर्वरक्षोनागपतत्त्रिणाम् ।
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ।। ९४ ।।
मृगमीनोष्ट्रमकरवनसूकरवाजिनाम् ।
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ।। ९५ ।।
स्निग्धा चाङ्गैरपाङ्गैश्च स्थिरमन्दनिमेषिणी ।
अरोगा दीप्त्युपेता च दानशक्त्यार्जवान्विता ।। ९६ ।।
अल्पस्वेदा समरता स्वल्पभुक् सुरभिप्रिया ।
गान्धर्ववाद्याभिरता हृद्या देवाङ्गना स्मृता ।। ९७ ।।
अधर्मशाठ्याभिरता स्थिरक्रोधाऽतिनिष्ठुरा ।
मद्यमांसप्रिया नित्यं कोपना चातिमानिनी ।। ९८ ।।
चपला चातिलुब्धा च परुषा कलहप्रिया ।
इर्ष्याशीला चलस्नेहा चासुरं शीलमास्थिताः ।। ९९ ।।
अनेकारामभोग्या च नखदन्तैः सुपुष्पितैः ।
स्मिताभिभाषिणी तन्वी मन्दचारा रतिप्रिया ।। १०० ।।
गीते वाद्ये च नृत्ते च नित्यं हृष्टा मृजावती ।
गान्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ।। १०१ ।।
बृहद्भायतसर्वाङ्गी रक्तविस्तीर्णलोचना ।

---

१ परार्थवर्णनायां—ख ।

खररोमा दिवास्वप्ननिवृतात्युच्चभाषिणी ॥ १०२ ॥
नखदन्तक्षतकरी क्रोधेर्ष्या[1] कलहप्रिया ।
निशाविहारशीला च राक्षसं सत्त्वमाश्रिता ॥ १०३ ॥
तीक्ष्णनासाऽग्ररदना सुतनुस्ताम्रलोचना ।
नीलोत्पलसवर्णा च स्वप्नोद्देशाऽतिकोपना ॥ १०४ ॥
तिर्यग्गतिश्चलारम्भा बहुसत्त्वाभिनन्दिनी ।
गन्धमाल्यादिनिरता नागसत्त्वाङ्गना स्मृता ॥ १०५ ॥
अत्यन्तव्यावृतास्या च तीक्ष्णशीला सरित्प्रिया ।
सुरासवक्षीररसा बह्वपत्या फलप्रिया ॥ १०६ ॥
नित्यं श्वसनशीला च सदोद्यानवनप्रिया ।
स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया ॥ १०७ ॥
चिरदृष्टे तु हर्षेच्च कृतज्ञत्वादुपैति या ।
अदीर्घशायिनी चैव ज्ञेया यक्षाङ्गनान्वया ॥ १०८ ॥
तुल्यमानावमाना या परुषत्वक् खरस्वना ।
शठाऽनृतोद्धतकथा व्यालसत्त्वाथ पिङ्गदृक् ॥ १०९ ॥
आर्जवाभिरता नित्यं दक्षात्यन्तगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च गुरुदेवार्चने रता ॥ ११० ॥
धर्मकामार्थनित्या च अहङ्कारविवर्जिता ॥
सुहृत्प्रिया सुशीला च मानुषं सत्वमाश्रिता ॥ १११ ॥
संहताल्पतनुर्धृष्टा पिङ्गरोमा फलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षारामवनप्रिया ॥ ११२ ॥
स्वल्पमप्युपकारं तु नित्यं या बहु मन्यते ।
प्रसह्य रतिशीला च वानरं सत्त्वमाश्रिता ॥ ११३ ॥
महाहनुललाटा च मांसलोपचयान्विता ।
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यासवप्रिया ॥ ११४ ॥
कोपना स्थिरसत्त्वा च जलोद्यानवनप्रिया ।
मधुराभिरता चैव हस्तिसत्त्वा रतिप्रिया ॥ ११५ ॥

---

१ स्वभावोत्फुल्ल—ख ।

स्वल्पोदरी मग्ननासा तनुजङ्घा वनप्रिया ।
रक्तविस्तीर्णनयना चपला शीघ्रगामिनी ॥ ११६ ॥
परित्रासपरा भीरुर्गीतवादा रतिप्रिया ।
कोपना स्थिरसत्त्वा च मृगसत्त्वाङ्गना स्मृता ॥ ११७ ॥
दीर्घपीनोन्नतोरस्का चपला निर्निमेषिणी ।
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया ॥ ११८ ॥
लम्बोष्ठी स्वेदबहुला किञ्चिद्विकटगामिनी ।
कृशोदरी फुल्लफललवणाम्लकटुप्रिया ॥ ११९ ॥
उद्बद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी ।
अभ्युन्नतखरग्रीवा उष्ट्रसत्त्वाऽटवीप्रिया ॥ १२० ॥
स्थूलशीर्षा स्थिरग्रीवा दारितास्या महास्वना ।
ज्ञेया मकरसत्त्वा च क्रूरा मत्स्यगुणैर्युता ॥ १२१ ॥
स्थूलजिह्वोष्ठरसना रूक्षत्वक्कटुभाषिणी ।
रतियुद्धकरी हृष्टा नखदन्तक्षतप्रिया ॥ १२२ ॥
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी ।
सरोषा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥ १२३ ॥
[1]दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता ।
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥ १२४ ॥
कृष्णदन्तोत्कटमुखी पीवरोरुशिरोरुहा ।
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता ॥ १२५ ॥
स्थिरा विभक्तपार्श्वोरुकटिपृष्ठशिरोधरा ।
शुभगा दानशीला च ऋजुस्थूलशिरोरुहा ॥ १२६ ॥
गूढा चपलचित्ता च तीक्ष्णवाक् शीघ्रगामिनी ।
कामक्रोधपरा चैव हयसत्त्वाङ्गना स्मृता ॥ १२७ ॥
स्थूलपृष्ठास्थिदशना तनुपार्श्वोदरस्थिरा ।
खररोमाञ्चिता रौद्रा लोकद्विष्टा रतिप्रिया ॥ १२८ ॥

---

१. एतौ श्लोकौ कपुस्तके नोपलभ्येते ।

किञ्चिदुन्नतवक्त्रा च जलक्रीडा वनप्रिया ।
बृहल्ललाटसुश्रोणी माहिषं सत्त्वमाश्रिता ॥ १२९ ॥
कृशा तनुभुजोरस्का विष्टब्धेतरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता ॥ १३० ॥
भयशीला जडोन्मत्ता बह्वपत्या वनप्रिया ।
चञ्चला शीघ्रगमना ह्यजाशीलाङ्गना स्मृता ॥ १३१ ॥
[1]उद्बुद्धगात्रनयना विजृम्भणपरायणा ।
दीर्घाल्पवदना स्वल्पपाणिपादविभूषणा ॥ १३२ ॥
उच्चैःस्वना स्वल्पनिद्रा क्रोधना बहुभाषिणी ।
हीनाचारा कृतज्ञा च साऽश्वशीला प्रकीर्तिता ॥ १३३ ॥
पृथुपीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया ।
संक्षिप्तपाणिपादा च दृढारम्भा प्रजाहिता ॥ १३४ ॥
पितृदेवार्चनरता नित्यशौचा गुरुप्रिया ।
स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता ॥ १३५ ॥
विज्ञाय च यथासत्त्वं उपसर्पेत्ततो बुधः ।
उपचारो यथासत्त्वं स्त्रीणामल्पोऽपि हर्षदः ॥ १३६ ॥
महानप्यन्यथा युक्तो नैव तुष्टिकरो भवेत् ।
यथा सम्प्रार्थितायां बाह्यरतिः समुपजायते ॥ १३७ ॥
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते ।
धर्मार्थं हि तपश्चर्या सुखार्थं धर्म इष्यते ॥ १३८ ॥
सुखस्य मूलं प्रमदास्तासु सम्भोग इष्यते ।
कामोपचारो द्विविधो नाट्यधर्मे विधीयते ॥ १३९ ॥
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसम्भवः ।
आभ्यन्तरः पार्थिवानां स च कार्यस्तु नाटके ॥ १४० ॥
बाह्यो वेश्याकृतश्चैव स तु प्रकरणे भवेत् ।
तत्र राजोपभोगं तु व्याख्यास्यामनुपूर्वशः ॥ १४१ ॥
उपचारविधिं सम्यक् कामसूत्रसमुत्थितम् ।

---

१ उन्नद्ध—ख ।

विविधा प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ॥ १४२ ॥
बाह्या चाभ्यन्तरा चैव स्याद्बाह्याभ्यन्तरा परा ।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता ॥ १४३ ॥
कृतशौचा च या नारी सा बाह्याभ्यन्तरा स्मृता ।
अन्तःपुरोपचारेषु कुलजा कन्यकापि वा ॥ १४४ ॥
नहि राजोपचारेषु कुलजा कन्यकापि वा ।
नहि राजोपचारेषु बाह्यस्त्रीभोग इष्यते ॥ १४५ ॥
आभ्यन्तरो भवेद्राज्ञो बाह्ये बाह्यजनस्य वा ।
दिव्यवेश्याङ्गनानां हि राज्ञा भवति सङ्गमः ॥ १४६ ॥
कुलजानां मतं यच्च तज्ज्ञेयं कन्यकास्वपि ।
या चापि वेश्या साप्यत्र यथैव कुलजास्तथा ॥ १४७ ॥
इह कामसमुत्पत्तिर्नानाबीजसमुद्भवा ।
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ॥ १४८ ॥
श्रवणाद्दर्शनाद्रूपादङ्गलीलाविचेष्टितैः ।
मधुरैः सम्प्रलापैश्च कामः समुपजायते ॥ १४९ ॥
ततः कामयमानानां नृणां स्त्रीणामथापि च ।
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥ १५० ॥
रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम् ।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥ १५१ ॥
ललिता चलपक्ष्मा च सास्रा मुकुलितक्षणा ।
स्रस्तोत्तरपदा चैव काम्या दृष्टिर्भवेदिह ॥ १५२ ॥
पलितान्ता सलालित्यसम्मितैर्व्यञ्जितैः सदा ।
दृष्टिः सा ललिता नाम स्त्रीणामर्धविलोकने ॥ १५३ ॥
इषत्संरक्तकण्ठश्च स्वेदविन्दुविचित्रितः ।
प्रस्यन्दमानरोमाञ्चो मुखरागस्तु कामजः ॥ १५४ ॥
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाऽऽभरणसंस्पर्शात् कर्णकण्डूयनादपि ॥ १५५ ॥
अङ्गुष्ठाग्रेण लिखनात् स्तननाभिप्रदर्शनात् ।

नखनिस्तोदनाच्चापि केशसंयमनादपि ॥ १५६ ॥
वेश्यामेवंविधैर्भावैर्लक्षयेन्मदनातुराम् ।
कुलजायास्तथा चैव विज्ञेयानीङ्गितानि वै ॥ १५७ ॥
प्रहसन्तीव नेत्राभ्यां प्रततं च निरीक्षते ।
स्मयते च निगूढं च वाक्यञ्चाधोमुखी वदेत् ॥ १५८ ॥
[1]स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहना ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥ १५८ क ॥
एवं विधैः कामलिङ्गैरप्राप्तसुरतोत्सवा ।
दशावस्थागतं कामं नानाभावैः प्रकाशयेत् ॥ १५९ ॥
प्रथमे त्वभिलाषः स्यात् द्वितीये चिन्तनं भवेत् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्त्तनम् ॥ १६० ॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमो ज्ञेयो भवेद् व्याधिस्तथाष्टमः ॥ १६१ ॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत् ।
स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत ॥ १६२ ॥
व्यवसायात् समारब्धः सङ्कल्पेच्छासमुद्भवः ।
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ॥ १६३ ॥
निर्गच्छति प्रविशति करोति चाकारमेव मदनस्य ।
तिष्ठति च दर्शनपथे प्रथमस्थानस्थिते कामे ॥ १६४ ॥
केनोपायेन सम्प्राप्तिः कथं वा सम्भवेन्मम ।
दूतीनिवेदितैर्वाक्यैरिति चिन्तां विनिर्दिशेत् ॥ १६५ ॥
आकेकराक्षिविप्रेक्षितानि वलयरशनापरामर्शः ।
नीवीनाभ्यूरूणां स्पर्शः कार्यो द्वितीये तु ॥ १६६ ॥
मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषस्त्वन्यकार्याणामनुस्मृतिरुदाहृता ॥ १६७ ॥
[2]नैवासने न शयने धृतिमुपलभते स्वकर्मणि ।
विहस्ता न चिन्तोपगतत्वात्तृतीयमेव प्रयुञ्जीत ॥ १६८ ॥

---

१ श्लोकोऽयं कपुस्तक एव दृश्यते ।
२ इत आरभ्य शतं श्लोकाः कपुस्तके न सन्ति ।

अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहासितेक्षणैः ।
नास्त्यन्यः सदृशस्ते(ने)त्येतत्स्याद्गुणकीर्तनम् ॥ १६९ ॥
गुणकीर्तनो लु (ने तु) कुशलैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्या विरहविशुम्भै(?)रभिनययोगश्चतुर्थे तु ॥ १७० ॥
आसने शयने वापि न कुप्यति न हृष्यति ।
नित्यमेवोत्सुका यस्मादुद्वेगस्थानमेव तु ॥ १७१ ॥
चिन्तानिःश्वासस्वेदेन हृद्दाहाभिनयेन च ।
तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥ १७२ ॥
इह स्थित इहासीन इहायापगते (?) मया ।
इति तैस्तैर्विलापेऽपि तैर्विलापं प्रयोजयेत् ॥ १७३ ॥
उद्विग्नात्यर्थमौत्सुक्यादरत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमापि हि (?) ॥ १७४ ॥
.................................................... ।
प्रद्वेष्टि चापरान्पुंसो यत्रोन्मादः स उच्यते ॥ १७५ ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥ १७६ ॥
सामघनादि (?) साभोगैः काम्यैः संप्रेक्षणैरपि ।
सर्वैरवशीकरणाद्व्याधिः समुपजायते ॥ १७७ ॥
युध्यति (?) हृदयं क्वापि प्रयाति शिरसस्त्ववेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं त्वभिनयेत् ॥ १७८ ॥
पृष्टा न किंचित्प्रब्रूते न शृणोति न पश्यति ।
हा कष्टाष्टमतूष्णीका जडतायां गतस्मृतिः ॥ १७९ ॥
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासाग्रे स्थाननासेव जडताभिनये भवेत् ॥ १८० ॥
सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥ १८१ ॥
एवं स्थानानि कार्याणि कामतन्त्रसमीक्षया ।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥ १८२ ॥

विविधैः पुरुषोऽप्येवं विप्रलम्भसमुद्भवैः ।
भावैरेतानि कामस्य नानारूपाणि योजयेत् ॥ १८३ ॥
एवं कामयमानानां स्त्रीणां नृणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ १८४ ॥
ललिता चलपक्ष्मा च साश्रुमुकुलितेक्षणा ।
स्रस्तोत्तरेमुपक्रान्ता काम्या इष्टिर्भवेदिदम् (?) ॥ १८५ ॥
ईषत्संरक्तगण्डस्तु सस्वेदलयचित्रितः ।
प्रस्पन्दमानरोमाञ्चौ युग राग इहेष्यते ॥ १८६ ॥
चिन्तातित्रासखेदेन हृद्दाहाभिनयेन च ।
तथानुगुणनाया(?)पि तथैवार्ध्वनिरीक्षणात् ॥ १८७ ॥
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ।
स्पर्शनान्मोटनाच्चापि तथा पापासमाश्रयेत् ॥ १८८ ॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत् ॥ १८९ ॥
स्रजो भूषणगन्धान्य(?)गृहाण्युपय(व)नानि वै ।
कामाग्निना दह्यमाना(:) शीतलानि निषवेते ॥ १९० ॥
प्रदह्यमानकामार्तो बहुस्थानसमन्वितः ।
प्रेषयेत्कामदूतीं तु स्वावस्थादर्शनं प्रति ॥ १९१ ॥
संदेशये (?) मे दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।
तस्येयं समयस्थेति कथयेद्दित(न)येन सा ॥ १९२ ॥
अथ वेदितभावार्थै रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिभिः ॥ १९३ ॥
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तरगतं सम्यक्कामतन्त्रे समुपस्थिताम् ॥ १९४ ॥
सुखदः स्वकृतान्भावान्नानाशीलसमुत्थितान् ।
यान्यान्प्रकुरुते राजा तांस्तांल्लोकोऽनुवर्तते ॥ १९५ ॥
न दुर्लभः पार्थिवानां स्त्र्यर्थ(?)माज्ञाकृतो गुणः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥ १९६ ॥

बहुमानेन देवानां वल्लभानां भयेन च ।
प्रच्छन्नकामिनां राज्ञां कार्यं परिजनं प्रति ॥ १९७ ॥
यद्यप्यस्ति नृपाणां तु कामतन्त्रमनेकधा ।
प्रच्छन्ने कामिनं वक्तुं तद्धै रमि(ति)करं भवेत् ॥ १९८ ॥
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ।
दुर्लभत्वं च यन्नार्या सा कामस्य रतिः परा ॥ १९९ ॥
राज्ञानन्तःपुरजने दिवसांभोग (?) इष्यते ।
वासोपचारो यच्चैव स रात्रौ परिकीर्तितः ॥ २०० ॥
परिपाट्या फलार्थे वा न च प्रमद एव च ।
दुःखे चैव प्रमादे च षडेते वासकाः स्मृताः ॥ २०१ ॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपः ।
वेश्यानामपि कर्तव्यमिष्टानां योगसर्पणम् ॥ २०२ ॥
तत्र वासकसज्जा वा विरहोत्कण्ठितापि वा ।
स्वाधीनपतिका वापि कलहान्तरितापि वा ॥ २०३ ॥
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ॥ २०४ ॥
उचिते वासके या तु रतिसम्भोगलालसा ।
मङ्गलं कुरुते हृष्टा सा वै वासकसज्जिता ॥ २०५ ॥
अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रिया ।
तस्यानुगमदुःखार्ता विरहोत्कण्ठिता मता ॥ २०६ ॥
सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सामोदे गुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥ २०७ ॥
ईर्ष्याकलहविक्रान्तौ(तो) यस्या नागच्छति प्रियः ।
आमर्षवेषसंतप्ता कलाहान्तरिता भवेत् ॥ २०८ ॥
व्यासङ्गादुचिते यस्याः वासके नाग(तः) प्रियः ।
तदनागमनार्ता तु खण्डितेत्यभिधीयते ॥ २०९ ॥
तस्माद्भूतां प्रियः प्राप्य गत्वा सङ्केतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा मता ॥ २१० ॥

गुरुकार्यान्तरवशाद्यस्या विप्रोषितः प्रियः।
सारूढालकके शान्ता भवेत्प्रोषितभर्तृका ॥ २११ ॥
हित्वा लज्जां समाकृष्टा मदेन मदनेन या।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ २१२ ॥
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया(:)।
एतासां ये च (यच्च) वक्ष्यामि कामतन्त्रमनेकधा ॥ २१३ ॥
चिन्तानिःश्वासखेदैश्च हृदयाभिनयेन च।
सखिना(?) सम्प्रलापैश्च आत्मावस्थावलोकनैः ॥ २१४ ॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च।
निर्भूषणाङ्गी विमृजा दुःखेन रुदितेन च ॥ २१५ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा।
तथा प्रोषितकान्ता च भावैरेव(वं) प्रयोजयेत् ॥ २१६ ॥
विचित्रोज्ज्वलवेषा च प्रमोदोद्द्योतिताननाः।
उदीर्णशोभातिशया कार्या स्वाधीनभर्तृका ॥ २१७ ॥
वेश्यायां कुलजा(टा)यां वा प्रेष्यायां वा प्रयोक्तृभिः।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥ २१८ ॥
सामदानाद्युपेष्टा(?) च तथा परिजनावृता।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ॥ २१९ ॥
सलीवा(?) स्वेदगात्रेषु त्रस्ता विप्रेक्षिताननाः।
अवगुण्ठनसंवीता गच्छेच्च कुलजाङ्गना ॥ २२० ॥
मदस्त्वभिनयालापा विभ्रमोत्फुल्ललोचना।
आविद्धगतिसंचारा गच्छेत्प्रेष्याङ्गनानया ॥ २२१ ॥
स्यादयं शषितो[?) व्यक्तं पश्येत्सुप्तं प्रियंवदा।
प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुनः ॥ २२२ ॥
अलंकारेण कुलजा वेश्या गन्धैस्तु शीतलैः।
प्रेष्या नु(तु) वस्त्रव्यजनैर्बोधये(त्) स्थायिनं प्रियम् ॥२२३॥
कुलाङ्गनानामेवायं प्रोक्तः कामाश्रयो विधिः।
सर्वावस्थानुभावं तु यस्माद्भवति नाटकम् ॥ २२४ ॥

भयकामप्रयेता(?) या क्रुद्धा वा वामनागमे ।
सत्यादेशैरुपायैस्तु ना(वा) सकं सम्प्रकल्पयेत ॥ २२५ ॥
नानालङ्कारमाभ्या(ल्या)भिधूपगन्धाम्बराणि च ।
नित्यं सुखान्युदात्तानि सेवेत मदनान्वितः ॥ २२६ ॥
न तथा भवति विशेषो मदनवशः कामिनीमलभमानः ।
द्विगुणोपजातहर्षो भवति यथा सङ्गतः प्रियया ॥ २२७ ॥
विलासभावेभङ्गभ(?)वाक्यलीलाविशेषमाधुर्यगुणोपपन्नः ।
परस्परप्रेमनिरीक्ष(क्षि)तेन समागमः कामकृतस्तु कार्यः ॥२२८॥
तत प्रवृत्ते मदने उपचारसमुद्भवे ।
वासोपचारः कर्तव्यो नायकागमनं प्रति ॥ २२९ ॥
गन्धमाल्यं गृहीत्वा तु चूर्णद्वार(?)स्तथैव च ।
स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ॥ २३० ॥
वासोपचारे नात्यर्थः(र्थं) भूषणग्रहणं भवेत् ।
रसनानूपुरप्रायं स्वनवच्च प्रशस्यते ॥ २३१ ॥
नास्वरग्रहणं रङ्गे नानुरङ्गे विलेपनम् ।
नाञ्जनं नानुरागं च न केशोपसङ्ग्रहम् ॥ २३२ ॥
नानावृतानेकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि प्रकुर्यात् प्रमदा क्वचित् ॥ २३३ ॥
अधमानां भवदेवं विधिः प्रकृतिसम्भवः ।
तासामपि ह्यसभ्यं यत्तत्तत्कार्यं प्रयोक्तृभिः ॥ २३४ ॥
प्रमदाभिर्नरैर्वापि नानाभावं तु नाय(ट)के ।
भूषणग्रहणं कार्यं पुष्पाणां ग्रहणं तथा ॥ २३५ ॥
गृहीतमण्डना किञ्चित्प्रतीच्छेत प्रियागमम् ।
लीलया मण्डनं शेष कुर्यायत्र विरुध्यते ॥ २३६ ॥
वीक्ष्य(क्ष)माणा प्रियापत्य(?) सृणुयान्नालिकाध्वनि(म्) ।
श्रुत्वा तु नालिकानादं नायकागमविक्लवा ॥ २३७ ॥
वेपन्ती(?) त्रस्तहृदया तोरणाभिमुखी व्रजेत् ।
वामेन तोरणं ग्राह्यं कवाटं दक्षिणेन तु ॥ २३८ ॥

हस्तेन संमुखीभूय उदीक्षेत प्रियागमम् ।
वेभा(?) शङ्कां भये चैव कुर्यात्तोरणसंस्थितम् ॥ २३९ ॥
अइन्द्रारमणं(?) सूर्यविषस्यां(?) तु क्षणे भवेत् ।
दीर्घं चैव विनिश्वस्य नयनाम्बु निपातयेत् ॥ २४० ॥
सत्र(न्न) च हृदयं कृत्वा विसृजेदङ्गमासने ।
व्याक्षेप्याद्विमृशेच्चापि नायकागमनं प्रति ॥ २४१ ॥
तैस्तैर्विचारणैश्चापि शुभाशुभसमुत्थितैः ।
गुरुकार्येण मित्रैर्वा मन्त्रिणां राज्यचिन्तया ॥ २४२ ॥
अनुबद्धः प्रियः किन्तु धृतो वल्लभयापि वा ।
उत्पातान्निर्दिशेच्चैव शुभाशुभसमुत्थितान् ॥ २४३ ॥
निमित्तै राज्यसंस्थैस्तु स्फुरितैर्भेदितैस्तथा ।
शोभनेषु तु कार्येषु निमित्तं वा मतः प्रिया(यम्) ॥ २४४ ॥
दुरुक्तेषु तु कार्येषु निमित्तं दक्षिणं भवेत् ।
सव्यं नेत्रं ललाटं भ्रूरधरोष्ठस्तथैव च ॥ २४५ ॥
ऊरुर्बाहुः स्तनश्चैव स्फुरेद्यदि समागमम् (:) ।
अतोऽन्यथा स्पन्यमाने दुरितं दक्षिणे भवेत् ॥ २४६ ॥
दर्शने दुर्निमित्तस्य मोहं गच्छेत्क्षणं ततः ।
अप्राप्तेऽथैव कर्तव्यः(?) प्रिये गण्डार्पितं करः(म्) ॥२४७॥
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ।
ततश्च शोभनं पश्यन्निमित्तं वै प्रियागमे ॥ २४८ ॥
सूच्यो नायिकयासन्नो गत्वा घ्राणेन नायकः ।
दृष्ट्वा चात्थाय हृष्टाङ्गी प्रत्युद्गच्छेद्धि नायकम् ॥ २४९ ॥
यदि स्यादपराद्धस्तु ततस्तैस्तैरुपक्रमैः ।
उपालम्भकृतैर्वाक्यैरभिभाष्यस्तु नायकः ॥ २५० ॥
मानापमानसंमोहैरवहित्थैर्यथाक्रमम् ।
वचनस्य समुत्पत्तिः स्त्रीणां गाथाकृता भवेत् ॥ २५१ ॥
विश्रम्भस्नेहरागेषु संदेहे प्रणये तथा ।
परितोषे च हर्षे च दाक्षिण्याक्षेपपातने ॥ २५२ ॥

धर्मार्थकामयोगेषु प्रच्छन्नवचनेषु च ।
हास्ये कुतूहले चैव सम्भ्रमव्यसने तथा ॥ २५३ ॥
हास्योपस्थानसम्प्राप्तौ दोषोपक्षेपनिह्नवे ।
अनाभाष्योऽपि सम्भाष्यः प्रिययेतितु कारणैः ॥ २५४ ॥
यत्र स्नेहो भयं तत्र यत्रेष्यति च मन्मथः ।
चतस्रो योनयस्तस्याः कीर्त्यमाना न(नि)बोधत ॥ २४९ ॥
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ।
एतेषां च समुत्पत्तिः प्रयोगं च निबोधत ॥ २५६ ॥
निद्राखेदालसगतिं सचिह्नं सरसव्रणम् ।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत्स्त्रियाः ॥ २५७ ॥
तीव्रा सूचितवचनाद्रोषा(द्) बहुशः प्रकम्पमानोष्ठी ।
साध्विति सुष्ठिति वाक्यैः शोभनमित्यभिनयं युज्यात ॥ २५८ ॥
बहुशो वार्यमाणोऽपि प्रत्यस्मिन्नेव इष्यते ।
संहर्षात्तत्र मात्सर्याद्व्यलीकं तु भवेत्स्त्रियाः ॥ २५९ ॥
कृत्वोरसि बामकरं दक्षिणहस्तं रुषा विधुन्वाना ।
चरणविनिक्षेपणरस्मिन्नकुर्वीत साभिनयम्(?) ॥ २६० ॥
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात्तद्विप्रियमिति स्त्रियाः ॥ २६१ ॥
दूतीलेखप्रतिवचनभेदनक्रोधहसितरुदिते च ।
विप्रियकरणेऽभिनयः सशिरःकम्पः प्रयोक्तव्यः ॥ २६२ ॥
प्रतिपक्षविकाशात्तु यः सौभाग्यविकत्थनः ।
उपसर्पेत्सुचिह्नस्य पत्युस्तत्र भवेत्स्त्रियाः ॥ २६३ ॥
वलयपरिवर्तनेन च साशिथिलमुपक्षेपणेन रसनयोः ।
मधुस्यभिनेतव्यः (?) सशङ्कितं चास्य मोक्षेऽस्य ॥ २६४ ॥
दृष्टा स्थितं प्रियतमं साशङ्कं सापराधमतिलज्जम् ।
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः ॥ २६५ ॥
न च निष्ठुरमतिभाष्यो न चास्पतिक्रोधनस्तु परिहार्यः ।
बाष्पोन्निम्नैर्वचनैरात्मोपन्यासससंयुक्तैः ॥ २६६ ॥

मध्याङ्गल्यंष्ठाग्रविष्पवात्पाणिना ह्युरःस्थेन ।
उद्वर्तितनेत्रभावैरभिवीक्षणैश्चापि ॥ २६७ ॥
कटिहस्तनिविष्टस्य विच्छिन्नतया तथाङ्गुलैः करणात् ।
मूर्धभ्रमणनिकुञ्चितनखादिसंदर्शनाच्चापि ॥ २६८ ॥
अवहित्थवीक्षणैरप्यङ्गुलिभङ्गैश्च तर्जनैर्ललितैः[1] ।
एभिर्भावविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ २६९ ॥
शोभने साधुदृष्टोऽसि गच्छ त्वं किं विलम्बसे ।
मा मां स्प्राक्षीः प्रियां याहि तव या हृदि संस्थिता ॥ २७० ॥
गच्छेत्युक्त्वा परावृत्त्य विनिवृत्तोत्तरेण तु ।
केनचिद्व्यसनार्थेन प्रहर्षं योजयेत्पुनः ॥ २७१ ॥
रभसग्रहणाच्चापि वस्त्रे हस्तेऽथ मूर्धनि ।
कार्यं प्रणमनं नर्या ह्यपराधं समीक्ष्य तु ॥ २७२ ॥
हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया ।
कान्तमेवोपसर्पन्त्या कर्त्तव्यं मोक्षणं शनैः ॥ २७३ ॥
गृहीतयाऽथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
यथा प्रियो न पश्येद्धि स्पर्शो ग्राह्यस्तथा स्त्रिया ॥ २७४ ॥
पादाग्रस्थितया नार्या तथैवाकुञ्चिताङ्गया ।
अश्वक्रान्तेन कर्त्तव्यं केशानां मोक्षणं शनैः ॥ २७५ ॥
अमुच्यमाने केशान्ते नार्या सस्वेदलेशया ।
हुं हुं मुञ्चापसर्पेति वाच्यः स्पर्शालसाङ्गया ॥ २७६ ॥
गच्छेति रोषवाक्येन गत्वा प्रतिनिवर्त्त्य च ।
केनचिद्वचनार्थेन चालापं योजयेत् पुमान् ॥ २७७ ॥
विधूननञ्च हस्तस्य हुङ्कारं स्त्री प्रयोजयेत् ।
स चावधूनने कार्यः शपथैर्वाच्य एव च ॥ २७८ ॥
अक्ष्णोः संवरणं कार्यं पृष्ठतश्चोपगूहनम्[2] ।
नार्यास्त्वपहृते वस्त्रे नीवीच्छादनमेव वा ॥ २७९ ॥
तावत्स्वेदयितव्यस्तु यावत्पादहतो भवेत् ।

---

१ लिखितैः—क । २ दीप—ख ।

ततश्चरणयोः पाते कुर्याद् दूतीनिरीक्षणम् ॥ २८० ॥
तथाप्यालिङ्गयेदेनं नायिका नायकं ततः ।
रतिभोगहृता भृष्ठा शयनाभिमुखी व्रजेत् ॥ २८१ ॥
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गारसंयुक्तो रतिसंयोगकारणम् ॥ २८२ ॥
यदा च[1] काशपरुषं (?) परस्थवचनाश्रयम् ।
भवेत् कार्यं तथा ह्येष कर्त्तव्योऽभिनयः स्त्रिया ॥ २८३ ॥
यदन्तःपुरसम्बन्धं कार्यं भवति नाटके ।
शृङ्गाररससंयुक्तं तत्राप्येष विधिर्भवेत् ॥ २८४ ॥
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन अङ्कच्छेदो विधीयते ॥ २८५ ॥
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत ॥ २८६ ॥
द[2]न्तं नखक्षतं छेद्यं नीवीसंस्रनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥ २८७ ॥
भोजनं सलिलक्रीडां तथा लज्जाकरं तु यत् ।
एवंविधं भवेद्यत् यत् तत्तद्रङ्गे न कारयेत् ॥ २८८ ॥
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥ २८९ ॥
वाक्यैः सातिशयैः श्राव्यैर्मधुरैर्नातिनिष्ठुरैः ।
हितोपदेशजननैस्तज्ज्ञैः कार्यं तु नाटकम् ॥ २९० ॥
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ।
प्रियेषु वचनानीह यानि तानि निबोधत ॥ २९१ ॥
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितः ।
नन्दनश्चेत्यभिप्रेतो वचनानि भवन्ति हि ॥ २९२ ॥
दुःशीलोऽथ दुराचारः शठो वामो विरूपकः ।
निर्लज्जो निष्ठुरश्चेति प्रायः क्रोधेऽभिधीयते ॥ २९३ ॥

---

१ चाकाशपुरुषं (?)—ख। २ एतौ श्लोकौ कपुस्तके नोपलभ्येते।

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते।
तथार्जवसमाचारः प्रिय इत्युच्यते बुधैः ॥ २९४ ॥
अन्यनारीसमुद्भूतं चिह्नं यस्य न दृश्यते।
अधरे वा शरीरे वा स कान्त इति भण्यते ॥ २९५ ॥
संक्रुद्धोऽपि हि यो नार्या नोत्तरोत्तरभाषणम्।
परुषं वा न वदति विनीतः सोऽभिधीयते ॥ २९६ ॥
सामदानार्थसंभोगैस्तथा लालनपालनैः।
नारीं सम्भजते यस्तु स नाथ[2] इति संज्ञितः ॥ २९७ ॥
हितैषी रक्षणे शक्तो न मानी न च मत्सरी।
सर्वकार्येष्वसंमूढः यः स स्वा[1]मीति कीर्त्तितः ॥ २९८ ॥
नारीप्सितैरभिप्रायैर्निपुणं शयनक्रियाम्।
करोति यस्तु सम्भोगे जीवितः सोऽभिसंज्ञितः ॥ २९९ ॥
कुलीनो नीतिमान् दक्षो दक्षिणो वाग्विशारदः।
श्लाघनीयः सखीमध्ये नन्दनो नाम संज्ञितः ॥ ३०० ॥
एते वचनविन्यासा रतिस्मृतिकराः स्मृताः।
तथा चाप्रीतिवाक्यानि गदतो मे निबोधत ॥ ३०१ ॥
निष्ठुरश्चासहिष्णुर्यो मानी धृष्टो विकत्थनः।
उत्तरोत्तरमानी च स दुःशील इति स्मृतः ॥ ३०२ ॥
ताड़नं बन्धनं वापि यो विमृश्य समाचरेत्।
तथा परुषवाक्यश्च दुराचारः स संज्ञितः ॥ ३०३ ॥
वाचैव मधुरो यस्तु कर्मणा नोपपादयेत्।
योषितं कञ्चिदप्यर्थं स शठः परिकीर्त्तितः ॥ ३०४ ॥
वार्यते यत्र यत्रार्थे तं तमेव करोति यः।
भवेदभिनिवेशी च स वाम इति संज्ञितः ॥ ३०५ ॥
सरसव्रणचिन्हो यः स्त्रीसौभाग्यविकत्थनः।
अभिमानी तथा स्तब्धः स विरूप इति स्मृतः ॥ ३०६ ॥
वार्यमाणो दृढतरं यो नारीमभिसर्पति।

१ स्वामी०—ख। २ नाथ इ०—ख।

सचिह्नः सापराधश्च स विलज्ज इति संज्ञितः ॥ ३०७ ॥
साऽपराधस्तु रभसा नारीं सेवितुमिच्छति ।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ॥ ३०८ ॥
एते वचनविन्यासाः प्रियाप्रियविभूषिताः ।
नानावस्थां समासाद्य विपरीतान् समाचरेत् ॥ ३०९ ॥
एष गीतविधाने तु सुकुमारो विधिर्भवेत् ।
शृङ्गाररसवाच्यः स्यात्तत्राप्येष विधिर्भवेत् ॥ ३१० ॥
एवमन्तःपुरगतः प्रयोज्योऽभिनयो बुधैः ।
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ॥ ३११ ॥
नित्यमेवोज्वलो वेषो नित्यं प्रमुदितं मनः ।
नित्यमेव सुखः कालो देवीनां ललिताश्रयः ॥ ३१२ ॥
न चेर्ष्या नैव च क्रोधो नासूया न प्रसादनम् ।
दृश्यते दिव्यपुंसां हि शृङ्गारे योषितं प्रति ॥ ३१३ ॥
यदा मानुषसंयोगो दिव्यानां योषितां भवेत् ।
तदा सर्वे प्रकर्त्तव्या ये भावा मानुषाश्रयाः ॥ ३१४ ॥
शापाद् भ्रंशस्तु दिव्यानामङ्गनानां यदा भवेत् ।
कार्यो मानुषसंयोगस्तथा चैवोपसर्पणम् ॥ ३१५ ॥
पुष्पैर्भूषणजैः शब्दैरदृश्यात्रापि या भवेत् ।
पुनः सन्दर्शनं दत्वा क्षणादन्तर्हिता भवेत् ॥ ३१६ ॥
वस्त्राभरणमाल्यैस्तु लेखसंप्रेक्षणैरपि ।
ईदृशैरभ्युपगमैः समुन्मादस्तु नाटके ॥ ३१७ ॥
उन्मादनात् समुत्पन्नः[1] कामो रतिकरो भवेत् ।
स्वभावोपगतो यस्तु नानारत्यर्थभावकः ॥ ३१८ ॥
ये भावा मानुषाणां तु यद्वृत्तं यच्च चेष्टितम् ।
तत्सर्वं मानुषं प्राप्य कार्यं दिव्यैरपि द्विजाः ॥ ३१९ ॥
एवं राजोपचारो हि कर्त्तव्यो ह्यन्तराश्रयः ।
बाह्यमप्युपचारं तु व्याख्यास्याम्यथ वैशिके ॥ ३२० ॥

**इति भारतीये नाट्यशास्त्रे सामान्याऽभिनयो नाम चतुर्विंशोऽध्यायः ॥**

---

१ नर्तकीसंश्रिता कार्या वहवोऽन्येपि नाटके-ख ।

# अथ पञ्चविंशोऽध्यायः ।

विशेषयेत् कलाः सर्वाः यस्मात्तस्मात्तु वैशिकः ।
वेश्योपचारतो वापि वैशिकः परिकीर्त्तितः ॥ १ ॥
यो हि सर्वकलोपेतः सर्वशिल्पविचक्षणः ।
स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत् पुमान् ॥ २ ॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥ ३ ॥
शास्त्रविच्छि[1]ल्पसंज्ञो रूपवान् प्रियदर्शनः ॥
विक्रान्तो धृतिमांश्चैव वयोवेषगुणान्वितः ॥ ४ ॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
आशङ्कितः प्रियाभाषी चतुरः सुभगः शुचिः ॥ ५ ॥
कामोपचारकुशलो दक्षिणो देशकालवित् ।
अदीनवाक्यः स्मितवाक् वाग्मी दक्षः प्रियंवदः ॥ ६ ॥
अलुब्धः संविभागी च श्रद्धधानो दृढव्रतः ।
गम्यासु चाप्यविस्रम्भी मानी चेति स वैशिकः ॥ ७ ॥
अनुरक्तः शुचिर्दान्तो दक्षिणः प्रतिपत्तिमान् ।
भवेच्छिद्राभिशायी च वयस्यास्तस्य षट् गुणाः ॥ ८ ॥
वि[2]ज्ञानगुणसंपन्ना कथनी लिङ्गिनी तथा ।
रङ्गोपजीवना चापि प्रतिपत्तिविचक्षणा ॥ ९ ॥
प्रतिवेश्या सखी दासी कुमारी दारुशिल्पिका ।
धात्री पाषंडिनी चैव दूत्यास्त्वीक्षणि[3]का तथा ॥ १० ॥
न[4] जडं रूपवन्तं च नार्थवन्तं न चातुरम् ।
दूतं वापि हि दूतीं वा बुधः कुर्यात् कदाचन ॥ ११ ॥
प्रस्तोहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा ।
लसहा संवृतमन्त्रा दूतीत्येभिर्गुणैः कार्या ॥ १२ ॥

---

१ ०च्छील-ख ।
२ श्लोकोऽयं खपुस्तके न दृश्यते ।
३ स्त्री-ख । ४ अयं श्लोकः खपुस्तके नास्ति ।

तथा प्रोत्साहनं कार्यं नानादर्शनकारणम् ।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥ १३ ॥
कुलभोगधनाधिक्यं कार्यं चैव विकत्थनम् ।
दूती निवेदयेत्कार्यमर्थानां चैव भाषणम् ॥ १४ ॥
नवकामप्रवृत्तायाः क्रुद्धाया वा समागमः ।
नानोपायैः प्रकर्त्तव्यो दूत्या हि पुरुषाश्रयः ॥ १५ ॥
उत्सवे रात्रिसञ्चारे उद्याने ज्ञातिवेश्मनि ।
धात्रीगृहे सखीगेहे तथा चैव निमन्त्रणे ॥ १६ ॥
व्याधितव्यपदेशेन शून्यागारसमाश्रये ।
एवं समागमः कार्यो नृणां प्रथमसङ्गमे ॥ १७ ॥
एवं समागमं कृत्वा नानोपायविधानजम् ।
अनुरक्तां विरक्तां वा चिह्नैः समुपलक्षयेत् ॥ १८ ॥
स्वभावभावातिशयैर्या नारी मदनार्दिता ।
करोत्यनिभृतं लीलां ज्ञेया सा मदनातुरा ॥ १९ ॥
गुणाः सखीनामाख्याति स्वधनं प्रददाति च ।
सम्पूजयति मित्राणि द्वेष्टि शत्रुजनं तथा ॥ २० ॥
समागमं प्रार्थयते दृष्ट्वा हृष्यति चाधिकम् ।
तुष्यन् यस्य कथाभिस्तु सस्नेहश्च निरीक्षते ॥ २१ ॥
सुप्ते च पश्चात् झटिति चुम्बिता प्रतिचुम्बति ।
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि वा ॥ २२ ॥
समा दुःखे सुखे च स्यान्नक्रोधमुपयाति च ।
एवंविधैर्गुणैर्युक्ता याऽनुरक्ता तु सा भवेत् ॥ २३ ॥
विरक्तायास्तु लिङ्गानि चुम्बिताऽऽस्यं प्रमार्जति ।
अनिष्टां च कथां ब्रूते प्रियमुक्तापि कुप्यति ॥ २४ ॥
प्रद्वेष्टि चास्य मित्राणि तस्य शत्रुं प्रशंसति ।
शेते पराङ्मुखी चैव शय्यायां पूर्वशायिनी ॥ २५ ॥
सुमहत्युपचारेऽपि न तुष्यति कथंचन ।
न क्लेशं सहते चापि तथा कुप्यत्यकारणे ॥ २६ ॥

न च चक्षुर्ददात्यस्य न चैनमभिनन्दति ।
यस्यामेवंविकाराः स्युर्विरक्तां तां विनिर्दिशेत् ॥ २७ ॥
हृदयग्रहणानि स्युर्व्यापारस्य विचेष्टितम् ।
अर्थप्रदर्शनं चैव तथा सद्भावदर्शनम् ॥ २८ ॥
अर्थोपन्यास एव स्यादर्थदानं तथैव च ।
व्याधितानां परित्यागो भावोपक्षेप एव च ॥ २९ ॥
दारिद्र्यात् व्याधितो दुःखात् पारुष्यादश्रुतात्तथा ।
प्रवासगमनान्मानादतिलोभादतिक्रमात् ॥ ३० ॥
अतिवेलागमत्वाच्च तथा विप्रियसेवनात् ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ॥ ३१ ॥
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ।
या न च प्रीयते नारी प्राप्यते पुरुषैरथ ॥ ३२ ॥
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ।
चतुरां क्रीडनत्वेन ह्यनुवृत्त्या तु मानिनीम् ॥ ३३ ॥
भूषणग्रहणाच्चापि शृङ्गारसुखतो भवेत् ।
पुरुषद्वेषिणीं चेष्टकथाभिः परिसान्त्वयेत् ॥ ३४ ॥
उपक्रीडनकैर्बालां भीतामाश्वासनेन च ।
गर्वितां नीचसेवाभिरुदात्तां शिल्पदर्शनैः ॥ ३५ ॥
सर्वासामेव नारीणां त्रिविधा प्रकृतिर्मता ।
उत्तमा मध्यमा नीचा वेश्यानां तु निबोधत ॥ ३६ ॥
या विप्रियेऽपि निष्टम्भं न वदत्यप्रिय प्रियम् ।
अदीर्घरोषा च तथा कलाशिल्पविचक्षणा ॥ ३७ ॥
काम्यते पुरुषैर्या तु कुलभोगधनादिकैः ।
कुशला कामतन्त्रेषु दाक्षिणा रूपशालिनी ॥ ३८ ॥
गृह्णाति कारणाद् रोषं गतेर्ष्या प्रब्रवीति च ।
कार्यकालविशेषज्ञा सुभगा सा स्मृतोत्तमा ॥ ३९ ॥
पुंसः कामयते या तु पुरुषैर्या तु काम्यते ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिका ॥ ४० ॥

ईर्ष्यातुरा चानिभृता क्षणक्रोधाभिगर्विता ।
क्षणप्रसादा या नारी सा नारी मध्यमा स्मृता ॥ ४१ ॥
अस्थाने कोपना या तु दुःशीला चातिमानिनी ।
चपला परुषा चैव दीर्घरोषाऽधमा स्मृता ॥ ४२ ॥
सर्वासां नारीणां यौवनलीला[1]श्चतस्रः स्युः ।
नेपथ्यरूपचेष्टागुणैस्तु शृङ्गारमासाद्य ॥ ४३ ॥
पीनोरुगण्डजघनाधरस्तनकर्कशं रतिमनोज्ञम् ।
सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं ज्ञेयम् ॥ ४४ ॥
गात्रं पीनावयवं पीनौ च पयोधरौ कृशं मध्यम् ।
कामस्य सारभूतं यौवनमेतद् द्वितीयं तु ॥ ४५ ॥
सर्वश्रीसंपूर्णं रतिकरमुन्मादनं बहुगुणाढ्यम् ।
कामाप्यायितशोभं यौवनमेतद् तृतीयं तु ॥ ४६ ॥
नवयौवने व्यतीते तथा द्वितीये तृतीयजे चापि ।
शृङ्गारशत्रुभूतं यौवनमेतत् चतुर्थं तु ॥ ४७ ॥
अम्लानगण्डजनाधरस्तनशेषगात्रलावण्यम् ।
कामे च निरुत्साहं यौवनमेतच्चतुर्थं तु ॥ ४८ ॥
नात्यर्थं क्लेशसहा न कुप्यति न हृष्यति प्रतिस्त्रीषु ।
सौम्यगुणेष्वासक्ता या नारी नवयौवना ज्ञेया ॥ ४९ ॥
किञ्चित्करोति मानं किञ्चित्क्रोधं समत्सरं चैव ।
क्रोधे च भवति तूष्णीं[2] यौवनमेतद्द्वितीयं तु ॥ ५० ॥
रतिसम्भोगे दक्षा प्रतिपन्नासूयिनी गुणाढ्या च ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥ ५१ ॥
पुरुषग्रहणसमर्था कामाभिज्ञाप्यमत्सरोपेता ।
अविरहमिच्छति नित्यं नारी ज्ञेया चतुर्थे तु ॥ ५२ ॥
यौवन[3]लम्भा ह्येते विज्ञेया नाटके तु चत्वारः ।
पुनरेव तु पुरुषगुणान् कामितन्त्रे प्रवक्ष्यामि ॥ ५३ ॥

---

१ लाभा भवन्ति चत्वारः—ख । २ तूर्णा—क ।
३ सार्धोऽयं श्लोकः खपुस्तके नास्ति ।

चतुरोत्तमौ मध्यमस्तथा धमः सम्प्रवृद्धश्च ।
स्त्रीणां प्रयोगविषये विज्ञेयाः पुरुषास्त्विमे पञ्च ॥ ५४ ॥
समदुःखः क्लेशसहः प्रणयक्रोधप्रसादने कुशलः ।
रत्युपचारे निपुणो दक्षश्चतुरश्च बोद्धव्यः ॥ ५५ ॥
यो विप्रियं न कुरुते धीरोदात्तः प्रियंवदो मानी ।
आज्ञातहृदयतत्त्वो ज्ञेयः स्मृतिमान् स तु ज्येष्ठः ॥ ५६ ॥
मधुरस्त्यागी रागं न याति च मदनस्य नापि वशमेति ।
अवमानितश्च नार्या विरज्यते स च भवेज्ज्येष्ठः ॥ ५७ ॥
सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः ।
कश्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः पुरुषः ॥ ५८ ॥
काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।
दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥ ५९ ॥
अवमानितोऽपि नार्या निर्लज्जतयोपसर्पति य एनाम् ।
संक्रान्तान्तरमन्यस्नेहपरावृत्तभावश्च ॥ ६० ॥
अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।
मित्रैर्निवार्यमाणोऽपि सोऽधमो नाम विज्ञेयः ॥ ६१ ॥
अविगणितभयामर्षो मूर्खः प्रकृतिप्रकृष्टभावश्च ।
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु ॥ ६२ ॥
रतिकलहसम्प्रहारेषु कर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधो विधिज्ञैर्विज्ञेयः संप्रवृद्धः स्यात् ॥ ६३ ॥
नानालीलाः स्त्रियो ज्ञेया गूढार्थहृदयाश्च ताः ।
विज्ञाय च तथा तत्त्वमुपसर्पेत्तु ता बुधः ॥ ६४ ॥
भावाभावौ विदित्वा च ततस्तैस्तैरुपक्रमैः ।
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ॥ ६५ ॥
साम चैव प्रदानञ्च भेदो दण्डस्तथैव च ।
उपेक्षा चैव कर्त्तव्या नारीणां विषयं प्रति ॥ ६६ ॥
तवास्मि मम चैव त्वमहं ते त्वञ्च मे प्रिया ।

१ श्लोकोऽयं खपुस्तके नोपलभ्यते ।

आत्मोपक्षेपणकृतं तत्सामेत्यभिधीयते ॥ ६७ ॥
काले काले प्रदातव्यं धनं विभवमात्रया ।
सनिमित्तान्तरं कृतं प्रदानं नाम तत्स्मृतम् ॥ ६८ ॥
भेदः स्यात्तत्प्रियस्येह सोपायं दोषदर्शनम् ।
बन्धनं ताडनं वापि दण्ड इत्यभिधीयते ॥ ६९ ॥
मध्यस्थां मानयेत्साम्ना लुब्धामर्थप्रदानतः ।
अन्यावबद्धभावां च भेदेन प्रतिपादयेत् ॥ ७० ॥
दुष्टाचारे समारब्धे मध्यभावे समुत्थिते ।
दण्डः पातयितव्यो हि मृदुबन्धनताडनैः ॥ ७१ ॥
सामादीनां प्रमाणे तु परिक्षीणे यथाक्रमम् ।
न भवेद्वशगा या तु तामुपेक्षेत बुद्धिमान् ॥ ७२ ॥
मुखरागेण नेत्रैर्वा विज्ञेयस्त्वङ्गचेष्टितैः ।
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ॥ ७३ ॥
अर्थहेतोस्तु वेश्यानामप्रियो वा यदि प्रियः ।
गम्यो हि पुरुषो नित्यं मुक्त्वा दिव्यनृपास्त्रियः ॥ ७४ ॥
द्वेष्यं तु प्रियमित्याहुः प्रियमप्यप्रियं तथा ।
दुःशीलं च सुशीलं च निर्गुणं गुणवानिति ॥ ७५ ॥
प्रहसन्तीव नेत्राभ्यां यं दृष्ट्वोत्फुल्लतारका ।
प्रसन्नमुखरागा च लक्ष्यते भावरूपणैः ॥ ७६ ॥
उपचारफलत्वाच्च विप्रलम्भकृतेन च ।
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ॥ ७७ ॥
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ।
कार्यः प्रकरणे चापि यथायोगं च नाटके ॥ ७८ ॥
एवं वेश्योपचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
अत ऊर्ध्वं प्रवक्ष्यामि चित्रस्याभिनयं प्रति ॥ ७९ ॥

इति भारतीये नाट्यशास्त्रे बाह्योपचारो नाम पञ्चविंशोऽध्यायः ॥

---

१ प्रकृतीनां तु लक्षणम्—ख ।

# अथ षड्विंशोध्यायः ॥

अङ्गाभिनयनस्येह यो विशेषः क्वचित् क्वचित् ।
अनुक्त उच्यते यस्मात् स चित्रा[1]भिनयःस्मृतः ॥ १ ॥
उत्तानौ तु करौ कृत्वा पताके स्वस्तिकं तथा ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षितैः ॥ २ ॥
प्रभातं गगनं रात्रिं प्रदोषं दिवसं तथा ।
ऋतून् घनान्धकारांश्च विस्तीर्णांश्च जलाशयान् ॥ ३ ॥
दिशो ग्रहान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत् ।
तस्य त्वभिनयः कार्यो नानादृष्टिसमान्वितः ॥ ४ ॥
एभिरेव करैः भूयस्तेनैव शिरसा पुनः ।
अधोनिरीक्षणेनैव भूमिस्थान् सम्प्रदर्शयेत् ॥ ५ ॥
स्पर्शस्य ग्रहणं चैवं तथोत्सुकधनेन च ।
चन्द्रज्योत्स्नां सुखं वायुं रसगन्धौ विनिर्दिशेत् ॥ ६ ॥
वक्त्रावकुण्ठनात् सूर्यं रजोधूमानलांस्तथा ।
भूमितापं तथा चोष्णं कुर्याच्छायाभिलाषतः ॥ ७ ॥
उर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तंगतं चैव गम्भीरार्थैः प्रदर्शयेत् ॥ ८ ॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च
गात्रस्पर्शैः सरोमाञ्चैस्तेषामभिनयो भवेत् ॥ ९ ॥
यानि स्युस्तीक्ष्णरूपाणि तानि त्वभिनयेन्नरः ।
अङ्गस्पर्शैस्तथोद्वेगैस्तथा मुखविघूर्णनैः ॥ १० ॥
गम्भीरोदात्तसंयुक्तानेतानभिनयेद् बुधः ।
साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः ॥ ११ ॥
यज्ञोपवीतदेशे तु कृत्वारालौ करावुभौ ।
स्वस्तिकौ[2] विच्युतौ[3] हस्तौ रन्ध्रदामानि निर्दिशेत् ॥ १२ ॥

---

१ चित्ते—क । २ स्वस्तिकौ पार्श्वसंस्थितौ—ख ।
३ विच्युतौ हारस्रग्दामार्थान् निदर्शयेत्—ख ।

भ्रमणेन प्रदेशिन्या दृष्टेः परिगमेन च ।
अलपल्लवपीडातः सर्वार्थग्रहणं भवेत् ॥ १३ ॥
श्राव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः ।
आत्मस्थं वा परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ १४ ॥
विद्युदुल्का घनरवो विस्फुलिङ्गार्चिषस्तथा ।
स्रस्ताङ्गाक्षिनिमेषैश्च तेऽभिनेयाः प्रयोक्तृभिः ॥ १५ ॥
उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
असंस्पर्शे[1] त्वनिष्टे च जिह्मदृष्टेन कारयेत् ॥ १६ ॥
वायुमुष्णं नभस्तेजो मुखप्रच्छादनेन च ।
रेणुतोयपतङ्गानां भ्रमराणां च वारणम् ॥ १७ ॥
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत् ॥ १८ ॥
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
स्वस्तिकौ कटकास्यौ तु प्रतोदग्रहणे स्मृतौ ॥ १९ ॥
एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाष्ट वा ।
नव वा दश वा चैव गणनाङ्गुलिर्भवेत् ॥ २० ॥
दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यामभिनेयाः प्रयोक्तृभिः ॥ २१ ॥
दशाख्यगणनायास्तु परतो या भवेदिह ।
वाक्यार्थेनैव साध्या सा परोक्षाभिनयेन च ॥ २२ ॥
चित्रध्वजपताकाश्च निर्देश्या दण्डधारणैः ।
नानाप्रहरणं चैव निर्देश्यं धारणाश्रयम् ॥ २३ ॥
एकचित्तोऽप्यधोदृष्टिः शिरः किञ्चिन्नतं भवेत् ।
सव्यहस्तं च सन्दंशस्मृतौ ध्यानेन निर्दिशेत् ॥ २४ ॥
उद्वाहितं शिरः कृत्वा हंसपक्षौ प्रदक्षिणौ ।
अपत्यरूपेण कार्यमुच्छ्रये च प्रयोक्तृभिः ॥ २५ ॥

---

१ असंस्पर्शेन वानिष्टं जिह्मदृष्टेन कारयेत् – ख ।

अरालं तु शिरःस्थाने समुद्वाह्यं तु वामतः ।
गते निवृत्ते ध्वस्ते च श्रुते वाक्ये च योजयेत् ॥ २६ ॥
सर्वेन्द्रियस्वस्थतया दिक्प्रसन्नतया तथा ।
विचित्रकुसुमालोकैः शरदं तु विनिर्दिशेत् ॥ २७ ॥
गात्रसङ्कोचनेनापि सूर्याग्निपटवेशनात् ।
हेमन्तस्त्वभिनेयः स्यात् पुरुषैर्मध्यमोत्तमैः ॥ २८ ॥
शिरोदन्तोष्ठकम्पेन गात्रसङ्कोचनेन च ।
कूजितैश्च ससीत्कारैरधमः शीतमादिशेत् ॥ २९ ॥
अवस्थान्तरसम्प्राप्तैरुत्तमैश्च कदाचन ।
शीताभिनयनं कार्यं दैवव्यसनसम्भवे ॥ ३० ॥
मधुदानात्तु पुष्पाणां गन्धघ्राणैस्तथैव च ।
रूक्षाच्च वायोः स्पर्शाच्च शिशिरं रूपयेद् बुधः ॥ ३१ ॥
प्रमोदजननारम्भैरुपभोगैस्तथोत्सवैः ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥ ३२ ॥
स्वेदापमार्जनाच्चापि भूमितापैः सुवीजनैः ।
उष्णाच्च वायोः स्पर्शाच्च ग्रीष्मं त्वभिनयेद् बुधः ॥ ३३ ॥
कदम्बनिम्बकुटजैः शाद्वलैः सेन्द्रगोपकैः ।
कदम्बकैर्मयूराणां प्रावृषं संनिरूपयेत् ॥ ३४ ॥
मेघौघनादगम्भीरधाराप्रपतनैरपि ।
विद्युन्निर्घातघोषैश्च वर्षरात्रं विनिर्दिशेत् ॥ ३५ ॥
यद्यच्च चिह्नं वेषो वा कर्म वा रूपमेव वा ।
ऋतुः स तेन निर्देश्य इष्टानिष्टार्थदर्शनात् ॥ ३६ ॥
एतानृतूनर्थवशात् प्रयुञ्जीत यथारसम् ।
सुखितेषु सुखोपेतां दुःखार्तौ दुःखसंयुताम् ॥ ३७ ॥
भावाभिनयनं कुर्यात् विभावानां निदर्शनैः ।
तथैव चानुभावानां भावात् सिद्धिः प्रकीर्तिता ॥ ३८ ॥
विभावेनाहृतं कार्यमनुभावेन रूप्यते ।
आत्माभिनयनं भावो विभावः परदर्शनम् ॥ ३९ ॥

गुरुर्मित्रं सखा स्निग्धः सम्बन्धी बन्धुरेव वा ।
आवेद्यते हि यः प्राप्तो विभावः स तु संज्ञितः ॥ ४० ॥
यस्त्वस्य सम्भ्रमो स्थानमर्घ्यासनपरिग्रहः ।
पूजनं क्रियते वाचा सोऽनुभावः प्रकीर्तितः ॥ ४१ ॥
एवमन्येष्वपि तथा नानाकार्यत्वदर्शनात् ।
विभावो वापि भावो वा विज्ञेयोऽर्थवशाद् बुधैः ॥ ४२ ॥
यश्चापि प्रतिसन्देशो दूतस्येह प्रतीयते ।
सोऽनुभाव इति ज्ञेयः प्रतिसन्देशदर्शितः ॥ ४३ ॥
एवं भावो विभावो वा अनुभावस्तथैव च ।
पुरुषैरभिनेयः स्यात् प्रमदाभिरथापि वा ॥ ४४ ॥
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।
आयतं चावहित्थं च स्त्रीणां कार्यप्रयोगतः ॥ ४५ ॥
धैर्यलीलाङ्गसम्पन्नं पुरुषाणां विचेष्टितम् ।
मृदुलीलाङ्गहारैश्च स्त्रीणां कार्यं तु चेष्टितम् ॥ ४६ ॥
करपादाङ्गसञ्चारः स्त्रीणां तु ललितो भवेत् ।
सधीरश्चोद्धतश्चैव पुरुषाणां प्रकीर्त्तितः ॥ ४७ ॥
नराणां प्रमदानां च शब्दार्थाभिनयः पृथक् ।
भावानुभावसंयुक्तं व्याख्यास्याम्यनुपूर्वशः ॥ ४८ ॥
आलिङ्गनेन गात्राणां सस्मितेन च चक्षुषा ।
तथाल्पकथनाच्चापि हर्षं संयोजयेद् बुधः ॥ ४९ ॥
क्षिप्रं संजातरोमाञ्चा वाष्पेणऽऽवृतलोचना ।
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः ॥ ५० ॥
उद्वृत्तरक्तनेत्रं च संदंशेनाधरस्य च ।
निःश्वासकम्पिताङ्गश्च क्रोधं त्वभिनयेद् बुधः ॥ ५१ ॥
वाष्पपूर्णेक्षणाच्चैव चिबुकोष्ठप्रदर्शनात् ।
शिरसः कम्पनाच्चैव भ्रुकुटीदर्शनेन च ॥ ५२ ॥
मौनेनाङ्गुलिभागेन माल्याभरणवर्जनात् ।
आयतस्थानकच्छाय ईर्ष्याक्रोधो भवेत् स्त्रियः ॥ ५३ ॥

निःश्वासोच्छ्वासबहुलैरधोमुखविचिन्तनैः ।
आकाशवीक्षणाच्चापि दुःखं पुंसां प्रयोजयेत् ॥ ५४ ॥
रुदितैश्च स्मितैश्चैव उरोऽभिहननेन च ।
भूमिघाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत् ॥ ५५ ॥
आनन्दाश्रुसमुत्पन्नमीर्ष्यासम्भवमेव वा ।
यत्पूर्वमुक्तं सहितं स्त्रीनीचेषु प्रयोजयेत् ॥ ५६ ॥
सम्भ्रमोद्वेगचेष्टाभिः शस्त्रसम्पतनेन च ।
पुरुषाणां भयं कार्यं धैर्योद्वेगबलादिभिः ॥ ५७ ॥
चलतारकनेत्रत्वात् गात्रैः स्फुरितकम्पितैः ।
सन्त्रस्तहृदयत्वाच्च पार्श्वाभ्यामवलोकनैः ॥ ५८ ॥
त्रातुरन्वेषणाच्चापि उच्चैराक्रन्दितेन च ।
पुरुषालिङ्गनाच्चापि भयं कार्यं भवेत् स्त्रियाम् ॥ ५९ ॥
मदा ये विहिताः पूर्वं तान् स्त्रीनीचेषु योजयेत् ।
मृदुभिर्ललितैः कार्यमाकारस्यावलम्बनम् ॥ ६० ॥
नेत्रावघूर्णनाच्चापि विलापकाथितैस्तथा ।
गात्राणां कम्पनाच्चैव मदः कार्यो भवेत्स्त्रियः ॥ ६१ ॥
अनेन विधिना कार्यः प्रयोगः करणोत्थितः ।
पौरुषस्त्रीकृतो वापि भावाभिनयनं प्रति ॥ ६२ ॥
सर्वे तु ललिता भावाः स्त्रीणां कार्याः प्रयोगतः ।
धैर्यमाधुर्यसम्पन्ना भावाः कार्याश्च पौरुषाः ॥ ६३ ॥
त्रिपताकाङ्गुलिभ्यां तु चलिताभ्यां प्रयोजयेत् ।
शुकाश्च शारिकाश्चैव सूक्ष्मा ये चैव पक्षिणः ॥ ६४ ॥
शिखिसारसहंसाद्या स्थूला येऽपि स्वभावतः ।
रेचकैरङ्गहारैश्च तेषामभिनयो भवेत् ॥ ६५ ॥
खरोष्ट्राश्वेभसिंहाश्च व्याघ्रगोमहिषादयः ।
गतिप्रचारैरङ्गैश्च तेऽभिनेयाः प्रयोक्तृभिः ॥ ६६ ॥
भूता पिशाचा यक्षाश्च दानवा राक्षसास्तथा ।

---

१ मि०—ख ।

अङ्गहारैर्विनिर्देश्याः प्रत्यक्षा न भवन्ति हि ॥ ६७ ॥
प्रत्यक्षं त्वभिनेयास्तु भयोद्वेगैः सविस्मयैः ।
देवाः प्रमाणकरणैर्भावैश्चापि विचेष्टितैः ॥ ६८ ॥
चिह्नैरभिनया ह्यर्थवशादप्रत्यक्षः प्रयोगज्ञैः ।
पार्श्वोत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् ॥ ६९ ॥
नराभिवादनं ह्येतदप्रत्यक्षैर्विधीयते ।
खटिकावर्द्धमानेन कपोताख्येन वा पुनः ॥ ७० ॥
दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत् ।
दिवौकसश्च पूज्याश्च प्रत्यक्षाश्च भवन्ति ये ॥
तान् प्रणामैः प्रभावैश्च गम्भीरार्थैः प्रयोजयेत् ॥ ७१ ॥
[1]महाजनं सखिजनं विटधूर्तजनं तथा ।
परिमण्डलसंज्ञेन हस्तेनाभिनयेद् बुधः ॥ ७२ ॥
पर्वतान् प्रांशुयोगेन वृक्षांश्चैव समुत्थितान् ।
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत ॥ ७३ ॥
समूहं सागराम्नानां बहुविस्तीर्णमेव च ।
पताकाभ्यां तु हस्ताभ्यां विक्षिप्ताभ्यां प्रदर्शयेत् ॥ ७४ ॥
ततः शौर्यञ्च दर्पञ्च गर्वमौदार्यमुच्छ्र्यम् ।
ललाटदेशसंस्थेन हस्तौ किञ्चित्प्रसारितौ ॥
कृत्वा निदर्शयेतत्तद् गृह ध्वान्तं बिलं गुहाम् ॥ ७५ ॥
कामपाशग्रहग्रस्ता ज्वरोपहतमानसाः ।
तेषामभिनयः कार्यो मुखगात्रविचेष्टितैः ॥ ७६ ॥
दोलाभिनयनं कार्यं दोलायास्तु विलोलनैः ।
संक्षोभेण च त्राणां रज्वाः प्रग्रहणेन च ॥ ७७ ॥
तदा कम्पवती दोला भवेत्प्रत्यक्षसंश्रया ।
आसने ह्युपविष्टानां कीर्त्तितं तत्र दोलनम् ॥ ७८ ॥
आकाशवचनानीह वक्ष्याम्यात्मगतानि च ।
अपवारितकं चापि जनान्तिकमथापि च ॥ ७९ ॥

---

१ एते त्रयः श्लोकाः कपुस्तके न दृश्यन्ते ।

दूरस्थभाषणं[1] यत् स्यादशरीरनिवेदनम् ।
परोक्षान्तरितं वाक्यमाकाशवचनं तु तत् ॥ ८० ॥
तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत ।
नानाकारणसंयुक्तैः काव्यभावसमुत्थितैः ॥ ८१ ॥
हृदयस्थं वचो यत्तत्तदात्मगतमिष्यते ।
निगूढभावसंसक्तमपवारितकं स्मृतम् ॥ ८२ ॥
कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत् स्यात् ।
हृदयस्थं सवितर्कं भावस्थश्चात्मगतमेव ॥ ८३ ॥
यानि गुह्यार्थयुक्तानि वचनानीह नाटके ।
कर्णे निवेद्यमेवमेवमित्यभिधाय च ॥ ८४ ॥
पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात् ।
कर्णप्रदेशे यद्वाक्यमगात्तत्पुनरुक्तताम् ॥ ८५ ॥
अव्यभिचारेण पदैराकाशजनान्तिकात्मगतवाक्यैः ।
प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परस्थांश्च ॥ ८६ ॥
हस्तमन्तरितं कृत्वा त्रिपताकः प्रयोक्तृभिः ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ८७ ॥
संभ्रमोत्पातरोषेषु शोकावेगकृतेषु च ।
यानि वाक्यानि उच्यन्ते पुनरुक्तानि तेष्विह ॥ ८८ ॥
ब्रूह्यहो साधु हा हेति गच्छ किं मुञ्च मा वद ।
एतानि वचनानीह द्वित्रिसंख्यानि कारयेत् ॥ ८९ ॥
प्रत्यङ्गहीनं यद्वाक्यं विकृतं च प्रयुज्यते ।
न लक्षणकृते तत्र कार्यस्त्वभिनयो बुधैः ॥ ९० ॥
भावो य उत्तमानां तु न तं मध्येषु योजयेत ।
यो भावश्चैव मध्यानां न तं नीचेषु योजयेत ॥ ९१ ॥
पृथक्पृथक्भावरसैरात्मचेष्टासमन्वितः ।
ज्येष्ठमध्यमनीचेषु नाट्यं रागं च वाञ्छति ॥ ९२ ॥

---

१ ०स्थान्वेषणं—ख ।

स्वप्नायितेषु भावाः कर्त्तव्या न खलु हस्तसञ्चारैः ।
सत्त्वाभिनयेनैव वाक्यार्थैनैव ते साध्याः ॥ ९३ ॥
मन्दस्वरसञ्चारं व्यक्ताऽव्यक्तद्विरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नायिते पाठ्यम् ॥ ९४ ॥
वृद्धानां योजयेत पाठ्यं गद्गदस्खलिताक्षरम् ।
असमाप्ताक्षरञ्चैव बालानां तु कलस्वनम् ॥ ९५ ॥
प्रशिथिलकरणाक्षरघंटानुस्वरितवाक्यगद्गदवत् ।
हिक्काश्वाससकफां काकुं कुर्यान्मरणकाले ॥ ९६ ॥
हिक्काश्वासोपेतमनवेक्षितमूर्च्छनं मरणम् ।
कथनीयो नानाभावतो मरणाभिनयो बहुप्रकारस्तु ॥ ९७ ॥
विक्षिप्तहस्तपादैर्निर्वृत्तैः सर्वैस्तथा गात्रैः
व्याधिप्लुते तु मरणं विषण्णगात्रेण संप्रयोक्तव्यम् ॥ ९८ ॥
हिक्काश्वासोपेतमनवेक्षितगात्रसञ्चारम् ।
विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम् ॥ ९९ ॥
विषवेगसंप्रयुक्तं विस्फुरिताङ्गक्रियोपतम् ।
प्रथमे वेगे कार्यं त्वभिनेयं वेपथुर्द्वितीये तु ॥ १०० ॥
दाहस्तथा तृतीये हिक्कां कुर्याच्चतुर्थे तु ।
फेनञ्च पञ्चमे वै ग्रीवाभङ्गं तथैव षष्ठे तु ॥ १०१ ॥
जडतां तु सप्तमे वै प्रोक्तं मरणं तथाष्टमे चैव ।
[1]प्रविष्टतारके नेत्रे कपोलाधरमेव च ॥ १०२ ॥
अंसोदरभुजानां तु कृशता कार्श्यरूपणम् ।
हस्तयोः पादयोर्मूर्ध्नि युगपत् पृथगेव वा ॥
कम्पनेन यथायोगं वेपथुं संप्रयोजयेत् ॥ १०३ ॥
सर्वाङ्गवेपनोद्वेजनेन कण्डूयनात्तथाऽङ्गानाम् ।
विक्षिप्तहस्तगात्रैर्दाहश्चैवाभिनेतव्यः ॥ १०४ ॥
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैर्हिक्कामेवं त्वभिनयेत्तु ॥ १०५ ॥

---

१ प्रवृद्ध—ख ।

उद्गारवमनयोगैः सृक्कालेहैर्विवर्त्तनाच्छिरसः ।
सर्वेन्द्रियसम्मोहाज्जडतामेवं प्रयुञ्जीत ॥ १०६ ॥
सम्मीलितनेत्रत्वाद् व्याधिविवृद्ध्या भुजङ्गदंशाद्वा ।
एवं हि नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि ॥१०७॥
एतेऽभिनयविशेषाः कर्त्तव्याः सत्त्वभावयुक्ता स्युः ।
अन्येऽपि लौकिका ये ते सर्वे लोकतः साध्याः ॥१०८॥
नानाविधैर्यथापुष्पैर्माल्यं ग्रथ्नाति माल्यकृत् ।
अङ्गोपाङ्गरसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥ १०९ ॥
या यस्य लीला नियता गतिश्च रङ्गप्रविष्टस्य विधानतस्तु ।
तामेव कुर्यादविमुक्तसत्त्वो यावन्न रङ्गात्प्रतिनिःसृतः सः ॥११०॥
एवमेते मया प्रोक्ता वागङ्गाभिनयाः क्रमात् ।
नोक्ता ये च मया तत्र लोकाग्राह्यास्तु ते बुधैः ॥ १११ ॥
लोको वेदास्तथाध्यात्म प्रमाणं त्रिविधं स्मृतम् ।
वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम् ॥ ११२ ॥
वेदाध्यात्मोपपन्नं तु शब्दश्छन्दः समन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकस्वभावजम् ॥
तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते ॥ ११३ ॥
देवतानामृषीणाञ्च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥ ११४ ॥
लोकस्य चरितं यत्तु नानावस्थान्तरात्मकम् ।
तदङ्गाभिनयोपेतं नाट्यमित्यभिसंज्ञितम् ॥ ११५ ॥
एवं लोकस्य या वार्त्ता नानावस्थान्तरात्मिका ।
सा नाट्ये संविधातव्या नाट्यवेदविचक्षणैः ॥११६॥
यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ।
लोकधर्मप्रवृत्तानि तानि नाट्यं प्रकीर्त्तितम् ॥ ११७ ॥
नहि शक्यं हि लोकस्य स्थावरस्य चरस्य च ।
शास्त्रेण निर्णयं कर्त्तुं भावचेष्टाविधिं प्रति ॥ ११८ ॥
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ।

तस्माल्लोकप्रमाणं हि कर्त्तव्यं नाट्ययोक्तृभिः ॥ ११९ ॥

एवं भावानुकरणे नानाप्रकृतिसम्भवे ।
भावाङ्गसत्त्वसंयुक्तो यत्नः कार्यः प्रयोक्तृभिः ॥ १२० ॥

येऽभिक्रमैर्योऽभिनयं तु सम्यक्
विज्ञाय रङ्गे मनुजः प्रयुज्यात् ।
स नाट्यतत्त्वाभिनयप्रयोग-
सम्मानमग्र्यं लभते च लोके ॥ १२१ ॥

ज्ञेयास्त्वभिनया ह्येते वाङ्नेपथ्याङ्गसंश्रयाः ।
प्रयोगज्ञेन कर्त्तव्या नाटके सिद्धिमिच्छता ॥ १२२ ॥

इति भारतीये नाट्यशास्त्रे चित्राभिनयो नाम षड्विंशोऽध्यायः ॥२६॥

## अथ सप्तविंशोऽध्यायः ।

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थे संप्रतिष्ठितः ॥ १ ॥

सिद्धिस्तु द्विविधा ज्ञेया वाक्सत्त्वाङ्गसमुद्भवा ।
दैविकी मानुषी चैव नानाभावरसाश्रया ॥ २ ॥

दशाङ्गा मानुषी सिद्धिर्दैविकी द्विविधाश्रया ।
नानासत्त्वाश्रयकृता शारीरी वाङ्मयी तथा ॥ ३ ॥

स्मितार्धहासातिहसा साध्वहो कष्टमेव च ।
प्रवृद्धनादा च तथा ज्ञेया सिद्धिस्तु वाङ्मयी ॥ ४ ॥

पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च ।
चेलदानाङ्गुलिक्षेपैः शारीरी सिद्धिरिष्यते ॥ ५ ॥

किञ्चित् श्लिष्टो रसो हास्यो नृत्यद्भिर्यः प्रयुज्यते ।
स्मितेन सुपरिग्राह्यः प्रेक्षकैर्नित्यमेव तु ॥ ६ ॥

किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव वा ।
अर्धहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु ॥ ७ ॥

---

१ श्लोकोऽयं कपुस्तके नास्ति ।

विदूषकोच्छेदकृतं भवेच्छिल्पकृतं तु यत् ।
अतिहास्येन तद् ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥ ८ ॥
यद् धर्मपदसंयुक्तं तथातिशयसम्भवम् ।
तत्र साध्विति वाक्यं तु प्रयोक्तव्यं हि साधकैः ॥ ९ ॥
अहोकारस्तथा कार्यो नृणां प्रकृतिसम्भवः ।
विस्मयादिषु भावेषु शृङ्गाराद्भुतविक्रमैः ॥ १० ॥
करुणे तु प्रयोक्तव्यं सास्रं कष्टेति चैव हि ।
प्रवृद्धनादः कर्त्तव्यो विस्मयार्थेषु नित्यशः ॥ ११ ॥
साँविक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः ।
कुतूहलान्तरावेद्यं बहुमानेन साध्यते ॥ १२ ॥
दीप्तप्रदेशकाव्यं यच्छेद्यभेद्याहवात्मकम् ।
सविद्रवमथोत्पातं तथा लघुनियुद्धजम् ॥ १३ ॥
सकम्पितांसकशिरः सास्रं सोच्छ्वासमेव च ।
तत् प्रेक्षकैः सकुशलैः साध्यमेवं विधानतः ॥ १४ ॥
एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी ।
दैविकीञ्च तथा सिद्धिं कीर्त्यमानां निबोधत ॥ १५ ॥
सा सत्त्वातिशया ज्ञेया भावयुक्ता तथैव च ।
नाट्ये संप्रेक्षकैर्ज्ञेया नित्यं सिद्धिस्तु दैविकी ॥ १६ ॥
न शब्दो नैव च क्षोभो न चोत्पातनिदर्शनम् ।
सम्पूर्णता च रङ्गस्य सा सिद्धिर्दैविकी स्मृता ॥ १७ ॥
एवं सिद्धिस्तु विज्ञेया प्रेक्षकैर्दिव्यमानुषी ।
अत ऊर्ध्वं प्रवक्ष्यामि घातान् देवसमुत्थितान् ॥ १८ ॥
देवात्मपरसमुत्थास्त्रिविधा घातका बुधैर्ज्ञेया ।
औत्पत्तिकश्चतुर्थः कदाचिदपि सम्भवत्येव ॥ १९ ॥
वाताग्निवर्षकुञ्जरभुजङ्गसंक्षोभवज्रपतनानि ।
कीटव्यालपिपीलकपशुविशसनानि दैविका घाताः ॥ २० ॥

---

१ सिद्धिच्छेदषु–क ।

अभिरटितविस्फोटितानि विक्रुष्टतालिकापाताः ।
गोमयलोष्टतृणोपलविक्षेपाः स्युश्चात्मसंभूताः ॥ २१ ॥
मात्सर्याद् द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदाद्वा ।
एते परप्रयुक्ता ज्ञेया घाता बुधैर्नित्यम् ॥ २२ ॥
औत्पत्तिकास्तथा स्युः क्षितिकम्पोल्कादिवातनिर्घाताः ।
पुनरात्मसमुत्था ये घातास्तांस्तान् संप्रवक्ष्यामि ॥ २३ ॥
वैलक्ष्यमन्यचेष्टितविभूमिकत्वस्मृतिप्रमोक्षाः स्युः ।
अन्यवचनं च काव्ये तथार्तनादो विहस्तत्वम् ॥ २४ ॥
पुनरात्मसमुत्था ये घातास्तापाद्याः ।
मुकुटाभरणप्रपतनपुष्करवाग्भीतदोषाश्च ॥ २५ ॥
अतिहसितरुदितासिद्धिवादप्रमाणकरणानि ।
कीटपिपीलकपाताः सिद्धिं सर्वात्मना घ्नन्ति ॥ २६ ॥
मुकुटाभरणनिपातः प्रबद्धनादस्य नाशनो भवति ।
पशुविशसनमवज्ञेयं बाधाजननं प्रयोगस्य ॥ २७ ॥
प्रपतनमुत्कृष्टघ्नं स्वैरञ्चेत्तथैव पादघ्नम् ।
वाग्भीतिभाण्डदोषाः सिद्धिं सर्वात्मना घ्नन्ति ॥ २८ ॥
ज्ञेयौ तु काव्ययुक्तौ द्वौ दोषावप्रतिक्रियौ नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकात्वञ्च ॥ २९ ॥
पुनरुक्तं ह्यसमासो विभक्तिभेदो विसन्धयोऽपार्थाः ।
त्रिलिङ्गजाश्च दोषाः प्रत्यक्षपरोक्षसम्मोहः ॥ ३० ॥
छन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः ।
एतानि स्थूलघातस्थानानि काव्यस्य ॥ ३१ ॥
विस्वरविरक्तरागं स्वरसम्पदा च परिहीणम् ।
अज्ञातस्थानलयं स्वरगतमेव विधिं हन्यात ॥ ३२ ॥
विषमं मार्गविहीनं विमार्जनं कुलप्रकारं[1] च ।
अविभक्तगृहमोक्षं पुष्पगतं मारिषं हन्यात् ॥ ३३ ॥

---

१ बहुलप्रचारं—ख ।

अप्रतिभासस्खलितं विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं मुकुटनिपातश्च भूषणग्रहणम् ॥ ३४ ॥
भ्रंशं रथनागवाजिकुञ्जरखरोष्ट्रशिबिकाविमानयानानाम् ।
आरोहणवितरणेष्वनभिज्ञातया विहस्तत्वम् ॥ ३५ ॥
प्रहरणकवचानां वा यथावद्ग्रहणसाधनं वापि ।
अमुकुटभूषणया या रङ्गे तु चिरप्रयोगो वा ॥ ३६ ॥
एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः ।
यूपानि चयनदर्भस्रुक्भाण्डपरिग्रहांस्त्यक्त्वा ॥ ३७ ॥
सिद्धैर्मिश्रो घातः सर्वगतश्चैकदेशोऽपि ।
नाट्यकुशलेन लेख्या नैव हि सिद्धिर्न घातस्य ॥ ३८ ॥
सिद्धिर्वा घातो वा सर्वगतो व्यक्तलक्षणो बहुशः ।
यस्त्वेकदेशजातं न प्रत्यवरोहिलेख्यस्तु ॥ ३९ ॥
जर्जरमोक्षस्यान्तर्नालिकासिद्धिश्च लेख्यासिद्धिश्च ।
कर्त्तव्या त्विह सततं नाट्येऽस्मिन् प्राश्निकैः सम्यक् ॥ ४० ॥
योन्यस्य महे मूढो नान्दीश्लोकं पठेद्धि मूढस्य ।
दैवस्य पूर्वरङ्गो घातस्तस्याविलेख्यः स्यात् ॥ ४१ ॥
[1]योऽन्यस्य कवेः काव्ये मिश्रयेत्तथाऽन्येन ।
तस्यापि वलद्रङ्गे तज्ज्ञैर्घातो विलेख्यस्तु ॥ ४२ ॥
योऽन्यस्य कवेर्नाम्ना काव्येन मिश्रयेन्मोहात् ।
निर्दिष्टदोषतोऽस्मिन् सिद्ध्यालेख्यो बुधैः क्रमशः ॥ ४३ ॥
यो देशवेषभाषाव्यपेतमपि च प्रयोजयेत् काव्यम् ।
तस्यापि विलेख्यः स्यात् घातोद्देशे विधौ तज्ज्ञैः ॥ ४४ ॥
कः शक्तो नाट्यविधौ यथावदुपपादने प्रयोगे च ।
धृष्टो व्यग्रमना वा यथावदुक्तं परिज्ञातुम् ॥ ४५ ॥
तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः ।
सर्वजनेन ग्राह्याः संयोज्या नाटके विधिवत् ॥ ४६ ॥

---

१ श्लोकद्वयमेतत् खपुस्तके नोपलभ्यते ।

न च किञ्चित् गुणहीनं दोषैः परिवर्जितं न वा किञ्चित् ।
तस्मान्नाट्यप्रकृतौ दोषा नात्यर्थतो ग्राह्याः ॥ ४७ ॥
नाऽनादरस्तु कार्यो नटेन गौणवागङ्गनेपथ्यैः ।
रसभावनृत्तगीतैरातोद्यैर्लोकयुक्त्या तु ॥ ४८ ॥
एवमेताद्धि विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रेक्षणानां[1] तु लक्षम् ॥ ४९ ॥
चारित्राभिजनोपेताः शान्तिवृत्तश्रुतान्विताः ।
यशोधर्मरताश्चैव मध्यस्था वयसान्विताः ॥ ५० ॥
षडङ्गनाट्यकुशलाः प्रबुद्धाः शुचयः समाः ।
चतुरातोद्यकुशला नेपथ्यज्ञाः सुधार्मिकाः ॥ ५१ ॥
देशभाषाविधानज्ञाः कलाशिल्पविचक्षणाः ।
चतुराभिनयज्ञाश्च सूक्ष्मज्ञा रसभावयोः ॥ ५२ ॥
शब्दच्छन्दोविधानज्ञाः नानाशास्त्रविचक्षणाः ।
एवंविधास्तु कर्त्तव्याः प्रेक्षका नाट्यदर्शने ॥ ५३ ॥
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
व्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥ ५४ ॥
यस्तुष्टौ तुष्टिमायाति शोके शोकमुपैति च ।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ॥ ५५ ॥
न चैते गुणाः सर्वे एकस्मिन् प्रेक्षके स्मृताः ।
तस्माद्बहुत्वात् ज्ञानानामल्पत्वादायुषस्तथा ॥ ५६ ॥
उत्तमाधममध्यानां सं[2]कीर्णायां तु सं[3]सदि ।
न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् ॥ ५६ ॥
यद्यस्य शिल्पं नेपथ्यं कर्म वाक् चेष्टितं तथा ।
तस्य तेनैव तत् साध्यं स्वकर्मविषयाश्रयम् ॥ ५८ ॥
उत्तमाधममध्यानां वृद्धबालकयोषिताम् ।
तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते ॥ ५९ ॥

---

१ प्राश्निकानां—ख। २ वि०—ख। ३ वर्षति—क।

अर्थेष्वर्थपराश्चैव मोक्षेष्वथ विरागिणः ।
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ॥ ६० ॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः ।
बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा ॥ ६१ ॥
एवं भावानुकरणैर्यो यस्मिन् प्रविशेन्नरः ।
प्रेक्षकस्तु स मन्तव्यो गुणैरेतैरलङ्कृतः ॥ ६२ ॥
एवं तु प्रेक्षका ज्ञेयाः प्रयोगे नाट्यसंश्रये ।
सङ्घर्षे च समुत्पन्ने प्राश्निकान् संनिबोधत ॥ ६३ ॥
यज्ञविन्नर्त्तकश्चैव छन्दोविच्छेदवित्तथा ।
इष्वस्त्रचित्रविद्वेश्या गन्धर्वो राजसेवकः ॥ ६४ ॥
यज्ञविद्यज्ञयोगे च नर्त्तकोऽभिनयेत्तथा ।
छन्दो उद्वृत्तबन्धे तु शब्दवित् पाठ्यविस्तरे ॥ ६५ ॥
विभूतिगुणसंयोगे तथान्तःपुरचेष्टिते ।
राजात्मचरिते च स्यादिष्टवाक् सौष्ठवे तथा ॥ ६६ ॥
प्रणामकृतिचेष्टासु वस्त्राभरणयोजने ।
नाट्यमूले च नेपथ्ये चित्रकृत् सम्प्रशस्यते ॥ ६७ ॥
कामोपचारे वेश्या च गान्धर्वस्वरतालयोः ।
सेवकस्तूपचारे च दशैते प्राश्निकाः स्मृताः ॥
एभिर्धर्ममभिप्रेक्ष्य दोषा वाच्यास्तथा गुणाः ॥ ६८ ॥
अशास्त्रज्ञे विवादो हि यदा भवति कर्मतः ।
तदैव प्राश्निका ज्ञेया गदिता ये मयानघाः ॥ ६९ ॥
शास्त्रज्ञाने यदा तु स्यात् संघर्षः शास्त्रसंश्रयः ।
शास्त्रप्रमाणनिर्माणो व्यवहारो भवेत्ततः ॥ ७० ॥
स्वाभिनियोगादन्योन्यविग्रहस्पर्धया च भरतानाम् ।
अर्थपताकाहेतोः सङ्घर्षो नाम संभवति ॥ ७१ ॥
तेषां व्यवहारगतावपक्षपातेन दर्शनं कार्यम् ।
कृत्वा पणं पताकासव्यवहारं गमयितव्यम् ॥ ७२ ॥

तैः सम्भावितमतिभिः सुखोपविष्टैर्विशुद्धभावैश्च ।
लोके गणकसहायैः सिद्धेर्घाताः समभिलेख्याः ॥ ७३ ॥
नात्यासन्नैर्न च दूरस्थितिभिः प्रेक्षकैश्च भवितव्यम् ।
तेषामासनयावद् द्वादशहस्तास्थितिः कार्या ॥ ७४ ॥
घाता यस्य स्वल्पाः संघातसिद्धयश्च बहुधाः स्युः ।
विदितं कृत्वा राज्ञे तस्मै देया पताका तु ॥ ७५ ॥
यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि ॥ ७६ ॥
याः काश्च लक्षणीया यथोत्थिता नाट्यप्रयोगे तु ।
दैवोत्पन्नसमर्थाः पताकोत्थिता वा बुधैर्लिखितव्याः ॥ ७७ ॥
यास्ता नाट्यसमुत्था ह्यात्मसमुत्था तु लेख्याः स्युः ।
प्रथमं समकर्णगुणाः स्युस्तस्मिन् भरतप्रयोगेषु ॥ ७८ ॥
कुशला सिद्ध्यधिके तु पताकासमासिद्धा वा ज्ञेया नृपतेः ।
अथ नरपतिः समः स्यादुभावपि तु लम्भनीयौ तौ ॥ ७९ ॥
एवं विधिं तु दृष्ट्वा कार्यो पाठ्यं प्रकृतयो रसाः ।
गानं वाद्यं सनैपथ्यं एतज्ज्ञेयं प्रयोक्तृभिः ॥ ८० ॥
ध्रुवानाट्यप्रयोगे तु कालान्तरकलासु च ।
यदङ्गं क्रियते नाट्ये समर्थः सममुच्यते ॥ ८१ ॥
अनिर्भुग्नमुरः कृत्वा चतुरश्रायतौ भुजौ ।
ग्रीवाऽञ्चिता तथा कार्या अङ्गमाधुर्यमुच्यते ॥ ८२ ॥
पूर्वोक्तानीह शेषाणि यानि साध्यानि साधकैः ।
वाद्यप्रकृतयोऽङ्गानां वक्ष्यमाणानि दर्शयेत् ॥ ८३ ॥
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ॥ ८४ ॥
परः कालश्च विज्ञेयो विविधो नाट्ययोक्तृभिः ।
दिवसश्चैव रात्रिश्च विशेषाश्चानयोः स्मृताः ॥ ८५ ॥
प्रादोषिकोऽर्धरात्रं च तथा प्राभातिकोऽपि च ।
नाट्यवारा भवन्त्येते रात्रगर्भसमाश्रिताः ॥ ८६ ॥
पौर्वाह्णिकस्तथा ज्ञेया आपराह्णिक एव च ।

दिवासमुत्थितावेतौ नाट्यवारौ प्रकीर्त्तितौ ॥ ८७ ॥
एतेषां तु यथायोग्यं नाट्यं कार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि वारं कालसमुत्थितम् ॥ ८८ ॥
यच्छ्रोत्ररमणीयं स्यात् धर्माख्यानकृतं तथा ।
तत् पूर्वाह्णे बुधैः कार्यं शुद्धं तु विकृतं तथा ॥ ८९ ॥
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च ।
पुष्कलं सिद्धियुक्तं तु अपराह्णे प्रयोजयेत् ॥ ९० ॥
कैशिकीवृत्तिसंयुक्तं शृंगाररससंश्रयम् ।
गीतवादित्रभूयिष्ठं प्रदोषे नाट्यमिष्यते ॥ ९१ ॥
यत्तु[1] माहात्म्यसंयुक्तं करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥ ९२ ॥
अर्धरात्रे न युञ्जीत न मध्याह्ने तथैव च ।
सन्ध्याभोजनकाले च नाट्यं न च कदाचन ॥ ९३ ॥
एवं कालञ्च देशञ्च प्रसमीक्ष्य ससंश्रयम् ।
नाट्यवारं प्रयुञ्जीत यथाभावं यथारसम् ॥ ९४ ॥
अथवा देशकालौ तु न परीक्ष्यौ कदाचन ।
यत्र चाज्ञापयेद्भर्त्ता तत्र योज्यमसंशयम् ॥ ९५ ॥
यथासमुदयश्चैव प्रयोगाश्च समृद्धयः ।
पात्रं प्रयोगमर्थश्च विज्ञेयास्तु त्रयो गुणाः ॥ ९६ ॥
बुद्धिसत्त्वस्वरूपं च लयतालज्ञता तथा ।
रसभावज्ञता चैव वयःस्थत्वं कुतूहलम् ॥ ९७ ॥
ग्रहणं धारणं चैव गानं नाट्यकृतं तथा ॥
जितसाध्वसतोत्साहाविति पात्रगतो विधिः ॥ ९८ ॥
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः प्रयोगः स तु संज्ञितः ॥ ९९ ॥
सुविभूषणता या तु सुमाल्याम्बरता तथा ।
या त्वङ्गरचना चैव समृद्धिरिति सा स्मृता ॥ १०० ॥

---

१ यत्नर्महस्तबहुलं—क।

यदा सर्वे समुदिता एकीभूता भवन्ति हि ।
अलङ्कारः स तु तथा मन्तव्यो नाट्ययोक्तृभिः ॥ १०१ ॥
एतदुक्तं मया सम्यक् सिद्धीनां लक्षणं द्विजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यातोद्यानां विकल्पनम् ॥ १०२ ॥

इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
सप्तविंशोऽध्यायः ॥ २७ ॥

---

# अथ अष्टाविंशोऽध्यायः ।

आतोद्यविधिमिदानीं व्याख्यास्यामः । तद्यथा–
ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ १ ॥
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनं तालस्तु विज्ञेयः सुषिरो वंश उच्यते ॥ २ ॥
प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः ।
ततं चैवावनद्धं च तथा नाट्यकृतश्च यः ॥ ३ ॥
तते कुतपविन्यासो गायनः सपरिग्रहः ।
वैपञ्चिको वैणिकश्च वंशवादक एव च ॥ ४ ॥
मार्दङ्गिकः पाणविकस्तथा दार्दुरिको[1] बुधैः ।
अनाविद्धविधावेष कुतपः समुदाहृतः ॥ ५ ॥
उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः ।
कुतपो नाट्ययोगेऽत्र नानादेशसमाश्रयः ॥ ६ ॥
एवं गानं च नाट्यं च वाद्यं च विविधाश्रयम् ।
अलातचक्रप्रतिमं कर्त्तव्यं नाट्ययोक्तृभिः ॥७ ॥
यत्तु तन्त्रीगतं प्रोक्तं नानातोद्यसमाश्रयम् ।
गान्धर्वमिति विज्ञेयं स्वरतालपदाश्रयम् ॥ ८ ॥

---

१ दार्भरिको—क ।

अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
गन्धर्वाणामिदं यस्मात् तस्माद्गान्धर्वमुच्यते ॥ ९ ॥
अस्य योनिर्भवेद्गानं वीणा वंशस्तथैव च ।
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् ॥ १० ॥
द्व्यधिष्ठानाः स्वरा ज्ञेया वैणाः शारीरकास्तथा ।
उभाभ्यामपि वक्ष्यामि विधिं स्वरसमुत्थितम् ॥ ११ ॥
गान्धर्वं त्रिविधं विद्यात् स्वरतालपदात्मकम् ।
त्रिविधस्यापि वक्ष्यामि लक्षणं चैव कर्मभिः ॥ १२ ॥
स्वराश्च श्रुतयो ग्रामो मूर्च्छनाः स्थानसंयुताः ।
स्थानं साधारणे चैव जातयोऽष्टादशैव च ॥ १३ ॥
वर्णाश्चत्वार एव स्युरलङ्काराश्च धातवः ।
अलङ्काराश्च वर्णाश्च गीतयश्च शरीरजाः ॥ १४ ॥
आवापस्त्वथ निष्क्रामो विक्षेपश्च प्रवेशकः ।
शम्यातालः सन्निपातः परिवर्त्तः सवस्तुकः ॥ १५ ॥
मात्राविदार्याङ्गुलया यतिः प्रकरणं तथा ।
गीतयोऽवयवा मार्गा पादभागाः सपाणयः ।
इत्येकविंशको ज्ञेयो विधिस्तालगतो बुधैः ॥ १६ ॥
व्यञ्जनानि स्वरा वर्णाः सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृताः ॥ १७ ॥
छन्दो वृत्तानि जात्यश्च नित्यं पदगतात्मकाः ॥
गान्धर्वसङ्ग्रहो ह्येष विस्तारं च निबोधत ॥ १८ ॥

तत्र स्वराः

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव निषादः सप्त च स्वराः ॥ १९ ॥
चतुर्विधत्वमेतेषां विज्ञेयं श्रुतियोगतः ।
वादी चैवाथ संवादी अनुवादी विवाद्यपि ॥ २० ॥
तत्र यो यत्रांशः स तस्य वादी, ययोश्च नवकत्रयोदशश्रुत्यन्तरे

तावन्योन्यं संवादिनौ। यथा षड्जमध्यमौ षड्जपञ्चमौ ऋषभधैवतौ गान्धारनिषादौ इति षड्जग्रामे। मध्यमग्रामेऽप्येवमेव षड्जपञ्चमव-र्ज्यं पञ्चमर्षभयोश्चात्र संवाद इति।

अत्र श्लोकः।

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च।
षड्जग्रामे च षड्जस्य संवादः पञ्चमस्य च॥ २१॥

विवादिनस्तु ते येषां विंशतिस्वरमन्तरम्। तद् यथा—ऋषभगान्धारौ धैवतनिषादौ। एवं वादिसंवादिविवादिषु स्थापितेषु शेषाः अनुवादिनः संज्ञकाः। यथा षड्जस्य ऋषभगान्धारधैवतनिषादाः। ऋषभस्य मध्यमपञ्चमनिषादाः। गान्धारस्यापि मध्यमपञ्चमधैवताः। मध्यमस्य धैवतपञ्चमनिषादाः। पञ्चमस्य धैवतनिषादौ। धैवतस्य ऋषभपञ्चममध्यमा षड्जग्रामे। मध्यमग्रामेऽपि मध्यमस्य पञ्चमधैवतनिषादाः पञ्चमस्य ऋषभषड्जगान्धाराः। धैवतस्य षड्जर्षभगान्धाराः। निषादस्य षड्जर्षभगान्धाराः। वदनाद्वादी संवादात्संवादी विवादित्वाद्विवादी अनुवादादनुवादी। एतेषां स्वराणां मूर्च्छनाधिकारत्वं तु तन्त्र्युपपादनदण्डेन्द्रियवैगुण्यादुपजायते। इत्येतत्स्वरविधानचतुर्विधम्।

अथ द्वौ ग्रामौ षड्जो मध्यमश्चेति। तत्राश्रिता द्वाविंशतिः श्रुतयः। यथा—

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम्॥ २२॥

मध्यमग्रामे तु श्रुत्यपकृष्टः पञ्चमः कार्यः। पञ्चमस्य श्रुत्युत्कर्षापकर्षाभ्यां यदन्तरं मार्दवादायतत्वाद्वा तावत्प्रमाणश्रुतिः। निदर्शनं चसमभिव्याख्यास्यामः। यथा, द्वे वीणे तुल्यप्रमाणतन्त्र्युपपादनदण्डमूर्च्छिते षड्जग्रामाश्रिते कार्ये। तयोरन्यतरीं मध्यमग्रामिकीं कुर्यात्। पञ्चमस्यापकर्षे श्रुतिं तामेव पञ्चमस्य श्रुत्युत्कर्षवशात् षड्जग्रामिकीं कुर्यात्। एवं श्रुतिरपकृष्टा भवति। पुनरपि तदेवापकर्षात् गान्धार-

१ षड्जौ—ख २ षड्ज—ख। ३ न्यूनाधिकत्वं—ख।

निषादावपि इतरस्यां धैवतर्षभौ प्रविशतः श्रुत्यधिकत्वात्। पुनस्तदेवापकर्षाद्धैवतर्षभावितरस्यां पञ्चमषड्जौ प्रविशतः श्रुत्यधिकत्वात्। तद्वत् पुनरपकृष्टायां तस्यां पञ्चममध्यमषड्जा इतरस्यां मध्यमनिषादगान्धारवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यधिकत्वात्। एवमनेन श्रुतिदर्शनविधानेन द्वैग्रामिक्यो द्वाविंशाः श्रुतयः प्रत्यवगन्तव्याः। अत्र श्लोकाः—

षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिःश्रुतिः स्मृतः।
द्विश्रुतिश्चापि-गान्धारो मध्यमश्च चतुःश्रुतिः॥ २३॥
चतुःश्रुतिः पञ्चमः स्यात् त्रिःश्रुतिर्धैवतस्तथा।
द्विश्रुतिस्तु निषादः स्यात् षड्जग्रामे स्वरान्तरे॥ २४॥
चतुःश्रुतिस्तु विज्ञेयो मध्यमः पञ्चमः पुनः।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुःश्रुतिक एव च॥ २५॥
निषादषड्जौ विज्ञेयौ द्विचतुःश्रुतिसम्भवौ।
ऋषभस्त्रिःश्रुतिश्च स्यात् गान्धारो द्विश्रुतिःस्तथा॥ २६॥

अन्तरनिदर्शनमपि व्याख्यातम्। अथ मूर्च्छना द्वैग्रामिक्यश्चतुर्दश। तद् यथा—

आद्या ह्युत्तरमन्द्रा स्याद् रजनी चोत्तरायता।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता॥ २७॥
अश्वक्रान्ता तु षष्ठी स्यात् सप्तमी चाभिरुद्गता।
षड्जग्रामाश्रिता एता विज्ञेयाः सप्त मूर्च्छनाः॥ २८॥

आसां षड्जनिषादधैवतपञ्चममध्यमगान्धारर्षभाः षड्जग्रामे। मध्यमग्रामे तु।

सौवीरी हरिणाश्वा च स्यात् कलोपनता तथा
चतुर्थी शुद्धमध्या तु मार्गवी पौरवी तथा॥ २९॥
हृष्यका चैव विज्ञेया सप्तमी द्विजसत्तमाः।
मध्यमग्रामजा ह्येता विज्ञेयाः सप्त मूर्च्छनाः॥ ३०॥

आसां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमाः। तत्र[2] षड्ज-

---

१ तो द्वि०—ख। २ एते मूर्च्छनाभेदाः कपुस्तके नोपलभ्यन्ते।

ग्रामे-षड्जेनोत्तरमन्द्रा, निषादेन रजनी, धैवतेनोत्तरायता, पञ्चमेन शुद्धषड्जा, मध्यमेन मत्सरीकृता, गान्धारेणाश्वक्रान्ता, ऋषभेणाऽभिरुद्गता इति ।

अथ मध्यमग्रामे-मध्यमेन सौवीरी, गान्धारेण हरिणाश्वा, ऋषभेण कलोपनता, षड्जेन शुद्धमध्यमा, निषादेन मार्गी, धैवतेन पौरवी, पञ्चमेन हृष्यका इति । एवमेताः क्रमयुताः षट्पञ्चाशत् स्वरा स्मृताः । षाडवौडुवितसंज्ञिताः पूर्णा साधारणकृताश्चेति चतुर्विधश्चतुर्दश मूर्च्छनाः ।

क्रमयुक्ताः स्वराः सप्त मूर्च्छनास्त्वभिसंज्ञिताः ।
षट्पञ्चकस्वरास्तासां षाडवौडुवितस्मृताः ॥ ३१ ॥
साधारणकृताश्चैव काकलीसमलङ्कृताः ।
अन्तरस्वरसंयुक्ता मूर्च्छना ग्रामयोर्द्वयोः ॥ ३२ ॥

द्विविधैकमूर्च्छनासिद्धिः तत्र द्विश्रुतिप्रकर्षाद्धैवतीकृते गान्धारे मूर्च्छनाग्राम्ययोरन्यतरत्वम् तद्वशान्मध्यमादयो यथासंख्येन निषादादिमत्वं प्रतिपाद्यन्ते । मध्यमग्रामे धैवतमार्दवाद् द्वैविध्यं भवति । तुल्यश्रुत्यन्तरत्वाच्च । श्रुत्यन्तरं पञ्चमधैवतयोस्तद्वत् गान्धारोत्कर्षाच्चतुश्रुतिकमन्तरं भवति । शेषाश्चापि मध्यमपञ्चमधैवतनिषादर्षभषड्जा मध्यमादित्वं प्राप्नुवन्ति तुल्यश्रुत्यन्तरत्वात् । अन्तरदर्शनमपि श्रुतिनिदर्शने प्रोक्तम् ।

तत्र मूर्च्छनातानाश्चतुरशीतिः । तत्रैकोनपञ्चाशत् षट्स्वराः, पञ्चत्रिंशत्पञ्चस्वराः, लक्षणं तु षाडवानां सप्तविधम् । यथा ऋषभनिषादपञ्चमहीनाश्चत्वारस्तानाः षड्जग्रामे । मध्यमग्रामे तु षड्जर्षभगान्धारहीनाश्चयास्त्रयस्तानाः । एवमेतेऽपि षाडवासु मूर्च्छनासु क्रियमाणा भवन्त्येकोनपञ्चाशत् तानाः । पञ्चस्वराणां तु पञ्चविधमेव लक्षणं यथा-षड्जपञ्चमहीना ऋषभपञ्चमहीना गान्धारनिषादहीना इति त्रयस्तानाः षड्जग्रामे । मध्यमग्रामे तु षड्जधैवतहीनो निषादगन्धारहीन इति द्वौस्तानाविति । पञ्चस्वरासु सर्वासु मूर्च्छनासु क्रियमाणास्तानाः षट्त्रिंशत् भवन्ति । षड्जग्रामे एकविंशतिर्मध्यमग्रामे चतुर्दश । एवमेते एकत्र गम्यमानाश्चतुरशीतिर्भवन्ति । द्विविधास्तानक्रिया तन्त्र्यां-प्रवेशो निग्रहश्च ।

तत्र प्रवेशो नामाधरस्वरप्रकर्षादुत्तरमार्दवाच्च। निग्रहस्त्वसंस्पर्शः । मध्यमस्वरासंस्पर्शः । मध्यमस्वरेण तु वैणेन मूर्च्छनानिर्देशः भवत्यनाशित्वात् मध्यमस्वरस्य निग्रहः प्रवेशो वा । प्रयोक्तृश्रोतृसुखार्थं तानमूर्च्छनातत्त्वम् । प्रयोजनमपि स्थानप्राप्तिः । स्थानं तु त्रिविधं पूर्वोक्तलक्षणं काकुविधाने ।

साधारणविधिमिदानीं वक्ष्याम । साधारणं नामान्तरस्वरता । कस्मात् ? द्वयोरन्तरस्थं तत् साधारणम् । यथा ऋत्वन्तरे ।

छायासु भवति शीतं प्रस्वेदो वा भवति चातपस्थस्य ।
न च नागतो वसन्तो न च निःशेषः शिशिरकालः ॥ ३३ ॥

इति कालसाधारणः ।

द्वे साधारणे स्वरसाधारणं जातिसाधारणञ्चेति । स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र द्विश्रुतिप्रकर्षणान्निषादादयः । काकलीसंज्ञो निषादो, न षड्जः । द्वाभ्यामन्तरस्वरत्वात् साधारणत्वं प्रतिपद्यते । एवं गान्धारोऽप्यन्तरस्वरसंज्ञः गान्धारो न मध्यमः । तयोरन्तरस्वरत्वात् । अत एव स्वरसाधारणं तस्मान्निषादः काकलीसंज्ञः । कलत्वात् काकली कृष्टत्वाद्वा अतिसौक्ष्म्यत्वाद्वा अथवा काक्षित्वात् उभयसम्बन्धत्वात काकलीसंज्ञा । यथा षण्णां रसानां मध्ये लवणः क्षारसंज्ञः, एवं निषादः काकलीसंज्ञः । साधारणस्वरश्चान्तरसंज्ञो भवति ।

जातिसाधारणमेकग्रामांशानां जातीनां जात्योर्वा अन्यस्मिन् ग्रामे प्रत्यङ्गदर्शनं स्वराणामवगमात् । स्वरसाधारणं द्विविधं द्वैग्रामिक्यम् कस्मात् ? षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणं साधारणोऽत्रस्वरविशेष इति षट् साधारणम् । एवं मध्यमग्रामे । अस्य तु प्रयोगसौक्ष्म्यात् कैशिकं नाम निष्पद्यते । एवं स्वरसाधारणं अस्याल्पनिषादगान्धारासु जातिषु प्रयोगः ।

अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः ।
कार्यस्त्वल्पो विशेषेण नावरोही कदाचन ॥ ३४ ॥
क्रियमाणोऽवरोही स्यादल्पो वा यदि वा बहु ।
जातिरागं श्रुतिञ्चैव नयन्ते त्वन्तरे स्वराः ॥ ३५ ॥

जातिमिदानीं वक्ष्यामः ।

स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च ॥ ३६ ॥
आसामङ्गानि विज्ञेयाः षड्जमध्यमपञ्चमाः ।
यथास्वं दुर्बलतरा व्यक्ता सा पञ्चमी तथा ॥ ३७ ॥
षड्जर्षभी धैवती च नैषादी च तथा परा ।
षड्जोदीच्यवती षड्जकैशिकी षड्जमध्यमा ॥ ३८ ॥
षड्जग्रामाश्रया ह्येता विज्ञेयाः सप्त जातयः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥ ३९ ॥
गान्धारी रक्तगान्धारी गान्धारोदीच्यवा तथा ।
मध्यमोदीच्यवा चैवं मध्यमा पञ्चमी तथा ॥ ४० ॥
गान्धारपञ्चमी चान्ध्री नन्दयन्ती तथापरा ।
कर्मारवी कैशिकी च ज्ञेयास्त्वेकादशापरा ॥ ४१ ॥
जातयोऽष्टादशेत्येव याः पूर्वं गदिता मया ।
तास्त्वहं सम्प्रवक्ष्यामि न्यासोपन्याससंयुताः ॥ ४२ ॥

एतासामष्टादशानां सप्त स्वरनामधेयाः सप्त स्वराः । जातयो द्विविधा शुद्धा विकृताश्च । तत्र शुद्धा षड्जग्रामे षाड्जी आर्षभी सधैवती निषादवती । गान्धारी मध्यमा पञ्चमी मध्यग्रामे । शुद्धा अन्यूनस्वराः स्वरांशग्रहन्यासाः । एभ्योऽन्यतमेन द्वाभ्यां बहुभिर्वा लक्षणैर्विक्रियामुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति । न्यासविधावप्यासां मन्द्रो नियमात् भवति । शुद्धासु विकृतास्वनियमात् । तत्रैकादश जातयोऽधिकृताः परस्परं संयोगादेकादश निर्वर्तयन्ति । यथा--

शुद्धा विकृताश्चैव समवायाज्जातयस्तु जायन्ते ।
ता एव शुद्धविकृता भवन्ति चैकादशान्यास्तु ॥ ४३ ॥
तासां या निर्वृत्ता स्वरेष्वथांशेषु जातिषु च जातिः ।
तां वक्ष्यामि यथावत् संक्षेपेण क्रमेणेह ॥ ४४ ॥
स्यात् षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमा जातिः ।
षाड्जीगान्धारीभ्यां धैवत्याश्चापि या विनिष्पन्ना ॥ ४५ ॥

संसर्गाद्वा विज्ञेया षड्जोदीच्यवा जातिः ।
षड्जगान्धारीभ्यां सम्भूता षड्जकैशिकी जातिः ॥ ४६ ॥
षाड्जीगान्धारीभ्यां धैवत्याश्चापिमध्यमायाश्च ।
गान्धारोदीच्यवा स्यात निर्वृत्तो नामतो जातिः ॥ ४७ ॥
गान्धारीपञ्चमीभ्यां धैवत्याश्चापि मध्यमाया वा ।
निर्वृत्ता या जातिः सा मध्यमोदीचयवा नाम्ना ॥ ४८ ॥
गान्धारीपञ्चमीभ्यां नैषादीमध्यमाभ्याञ्च ।
रक्तगान्धारी नाम जातिः स्यात् चतसृभिस्त्वाभिः ॥ ४९ ॥
गान्धारी षड्जाभ्यां संसर्गाज्जायते चान्ध्री ।
गान्धारीपञ्चमीभ्यामार्षभीभ्यां चैव नन्दयन्ती तु ॥ ५० ॥
गान्धारीपञ्चमीभ्यां जाता गान्धारी पञ्चमी जातिः ।
नैषाद्यार्षभीभ्यां पञ्चम्याश्चैव संसर्गात् ॥ ५१ ॥
कर्मारवी नाम्ना जातिः पूर्णा हि भवति चेयम् ।
धैवत्यार्षभहीनाः पञ्चाद्याः कैशिकीं कुर्युः ॥ ५२ ॥
एवं परस्परोत्पन्ना ज्ञेया ह्येतास्तु जातयः ।
पृथग्लक्षणसंयुक्ता द्वैग्रामिक्यः स्वराश्रयाः ॥ ५३ ॥
आभ्यश्चतस्रो नियमात् ज्ञेयाः सप्त स्वरा बुधैः ।
दश पञ्चस्वरा ज्ञेयाश्चतस्रश्चैव षट्स्वराः ॥ ५४ ॥
मध्यमोदीच्यवा चैव तथा वै षड्जकैशिकी ।
कर्मारवी च संपूर्णा तथा गान्धारपञ्चमी ॥ ५५ ॥
तथैव रक्तगान्धारी मध्यमा पञ्चमी तथा ।
कैशिकी चेति विज्ञेया पञ्चैता मध्यमाश्रयाः ॥ ५६ ॥
आर्षभी धैवती चैव नैषादी षड्जमध्यमा ।
षड्जोदीच्यवती चैव षड्जग्रामसमाश्रया ॥ ५७ ॥
पञ्चस्वरा दशैताश्च जातयो नित्यमेव हि ।
गान्धारोदीच्यवा चैव नन्दयन्ती तथैव च ॥ ५८ ॥
मध्यमग्रामसंभूता षट्स्वरास्तिस्र एव च ।
षड्जग्रामे तु विज्ञेया षाड्ज्येका षट्स्वराश्रया ॥ ५९ ॥
कदाचित् षाडवीभूता कदाचिचौडवीकृता ।

संपूर्णा मध्यमग्रामे ज्ञेया कर्मारवी तथा ॥ ६० ॥
मध्यमोदीच्यवा चैव तथा गान्धारपञ्चमी ।
षड्जग्रामे तु विज्ञेया संपूर्णा षड्जकैशिकी ॥ ६१ ॥
एवमेता बुधैर्ज्ञेया द्वैग्रामिक्यश्च जातयः ।
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ॥ ६२ ॥
षाट्स्वर्ये सप्तमांशा तु नेष्यते षड्जमध्यमा ।
संवादिलोपात् गान्धारस्तत्रैव न भविष्यति ॥ ६३ ॥
गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमम् ।
षाडवे धैवतो नास्ति षड्जोदीच्यवियोगता ॥ ६४ ॥
संवादिलोपात् सप्तैते षाट्स्वर्ये तु विवर्जिताः ।
गान्धारीरक्तगान्धार्यौ षड्जमध्यमपञ्चमाः ॥ ६५ ॥
सनिषादाश्च विज्ञेया येषु नोडुविते इमे ।
द्वौ षड्जमध्यमांशेषु गान्धारोऽथ निषादवान् ॥ ६६ ॥
ऋषभश्चैव पञ्चम्याः कैशिक्याश्चैव धैवतः ।
एवं च द्वादशैवैते वर्ज्याः पञ्चस्वरे सदा ॥ ६७ ॥
तास्वनौडविता नित्यं कर्त्तव्या जातयो बुधैः ।
सर्वस्वराणां विहितो विनाशस्त्वथ जातिषु ॥ ६८ ॥
मध्यमस्य विनाशस्तु कर्त्तव्यो न कदाचन ।
सर्वस्वराणां प्रवरो ह्यविनाशी तु मध्यमः ।
गान्धर्वकल्पेऽभिमतः सामगैश्च महर्षिभिः ॥ ६९ ॥

दशविधजातिलक्षणम् ।

ग्रहांशौ तारमन्द्रौ च न्यासोपन्यास एव च ।
अल्पत्वं च बहुत्वं च षाडवौडविते तथा ॥ ७० ॥

अथ ग्रहाः ।

ग्रहस्तु सर्वजातीनामंश एव हि कीर्त्तितः ।
यत् प्रवृत्तं भवेद्गानं सोंऽशो ग्रहविकल्पितः ॥ ७१ ॥

तत्रांशो नाम ।

यस्मिन्वसति रागस्तु यस्माच्चैव प्रवर्त्तते ।

तेन वै तारमन्द्राणां योऽस्त्यर्थमुपलभ्यते ।
मन्द्रश्च तारविषया पञ्चस्वरपरा गतिः ॥ ७२ ॥
अनेकस्वरसंयोगो योऽस्त्यर्थमुपलभ्यते ।
अन्यच्च बलिनो यस्य संवादी चानुवाद्यपि ॥ ७३ ॥
ग्रहोपन्यासविन्यासविन्यासाभ्यासगोचरः ।
परिवार्य स्थितो यस्तु सोंऽशोः स्याद् दशलक्षणः ॥ ७४ ॥
द्वैग्रामकीनां जातीनां सर्वासामपि नित्यशः ।
अंशास्त्रिषष्टिर्विज्ञेयास्तासां चैव तथा ग्रहाः ॥ ७५ ॥
अंशग्रहविधिमिदानीं वक्ष्यामः ।
मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च ।
तथा गान्धारपञ्चम्याः पञ्चमोंऽशो ग्रहः स्मृतः ॥ ७६ ॥
धैवत्याश्च तथैवांशौ विज्ञेयौ धैवतर्षभौ ।
पञ्चम्यास्तु ग्रहावंशौ भवतः पञ्चमर्षभौ ॥ ७७ ॥
गान्धारोदीच्यावायास्तु ग्रहांशौ षड्जमध्यमौ ।
आर्षभ्याश्च तथैवांशा निषादर्षभधैवताः ॥ ७८ ॥
नैषादिन्या निषादस्तु गान्धारश्चर्षभस्तथा ।
अंशाश्च षड्जकैशिक्याः षड्जगान्धारपञ्चमाः ॥ ७९ ॥
तिसृणामापि जातीनां ग्रहास्त्वंशाश्च कीर्तिताः ।
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा ॥ ८० ॥
अंशग्रहास्तु चत्वारः षड्जोदीच्यवतीश्रिताः ।
पञ्चमश्चर्षभश्चैव निषादो धैवतस्तथा ॥ ८१ ॥
कर्मारव्यास्तथैवांशाश्चत्वारः सम्प्रकीर्तिताः ।
गान्धारश्चर्षभश्चैव निषादः पञ्चमस्तथा ॥ ८२ ॥
ऋषभश्चैव षड्जश्च मध्यमः पञ्चमस्तथा ।
मध्यमाया ग्रहास्त्वंशा धैवतश्च प्रकीर्तित्तः ॥ ८३ ॥
षड्जायाः षड्जगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतस्यापि विज्ञेया ग्रहाश्चांशाः प्रकीर्तिताः ॥ ८४ ॥
निषादर्षभगान्धारा मध्यमः पञ्चमस्तथा ।

गान्धारीरक्तगान्धार्योर्ग्रहांशास्तु बुधैः स्मृताः ॥ ८५ ॥
वर्जितर्षभयोगास्तु कैशिक्यंशाःषडेव तु ।
स्वराः सर्वे च विज्ञेया षड्जमध्यांशजा ग्रहाः ॥ ८६ ॥
एवं त्रिषष्टिर्विज्ञेया ग्रहाश्चांशाश्च जातिषु ।
अंशवश्च ग्रहास्तासां सर्वासामेव नित्यशः ॥ ८७ ॥
सर्वासामेव जातीनां त्रिजातिस्तु गुणः स्मृतः ।
सर्वथा चैव विज्ञेया वर्धमानस्वरास्तथा ॥ ८८ ॥
एकस्वरो द्विस्वरश्च त्रिस्वरोऽथ चतुःस्वरः ।
पञ्चस्वरः षट्स्वरश्च तथा सप्तस्वरोऽपि वा ॥ ८९ ॥

द्विविधमन्यत्वं लङ्घनादनभ्यासाच्च । गीतान्तरमार्गमुपगतानां षाडवौडवितकरणत्वमंशानाञ्च स्वराणां लङ्घनादनभ्यासाच्च सकृदुच्चारणं यथाजाति तद्वत् बहुत्वमल्पत्वविपर्ययात् द्विविधमेषामन्येषामपि बलिनां सञ्चारः ।

अल्पत्वञ्च बहुत्वञ्च यथापूर्वं विनिश्चयात् ।
जातिस्वरैश्च नित्यं स्यात् जात्यल्पत्वं विधानतः ॥ ९० ॥
सञ्चारोंऽशबलस्थानमल्पत्वं दुर्बलेषु च ।
विविधोऽन्तरमार्गस्तु जातीनां व्यक्तिकारकः ॥ ९१ ॥
अथ पञ्चस्वराः कण्ठ्यांशात्(?) तारगतिः ।
अंशात्तारगतिं विद्यादा चतुर्थस्वरादिह ॥ ९२ ॥
पञ्चमं त्वथवा गच्छेत्ततोंऽशविहितं त्विह ।
आपञ्चमात्पञ्चमाद्वा नातः परमिहेष्यते ॥ ९३ ॥

त्रिविधा मन्द्रगतिः—अंशपरा न्यासपरा चेति अपन्यासपरा चेति वा ।
मन्द्रो ह्यंशपरो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गान्धारे च ग्रहे न्यासे दृष्टमार्षभदैवतम् ॥ ९४ ॥
पञ्चस्वरमौडवितं विज्ञेयं दशविधं प्रयोगज्ञैः ।
त्रिंशत्प्रकारंविहितं पूर्वोक्तं लक्षणं चास्य ॥ ९४ क ॥
षट्स्वरस्य प्रयोगोऽयं तथा पञ्चस्वरस्यच ।

चतुःस्वरप्रयोगोऽपि देशापेक्षः प्रयुज्यते ॥ ९५ ॥

अथ न्यासः। अंशसमासौ स चैकविंशतिविधः। स च कदाचित् जात्यन्तरोपन्यासः स षट्पञ्चाशतसंख्यः।

एवमुक्तमिदं सम्यक् जातीनां लक्षणं मया।
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ॥ ९६ ॥
अंशाः स्युः पञ्च षड्जाया निषादर्षभवर्जिताः।
न्यासः सर्वे उपन्यासौ स्यातां गान्धारपञ्चमौ ॥ ९७ ॥
षाडवं सप्तमोपेतं अल्पौ वै सप्तमर्षभौ।
षड्जगान्धारसञ्चारस्तथा धैवतषड्जयोः ॥ ९८ ॥
गान्धारस्य तु बाहुल्यं त्वत्र कार्यं प्रयोक्तृभिः।
अंशजातास्तथार्षभ्यान्निषादर्षभधैवताः ॥ ९९ ॥
अत ऊर्ध्वं प्रवक्ष्यामि न्यासोपन्यासकल्पनम्।
एत एव ह्युपन्यासाः न्यासश्च ऋषभः स्मृतः ॥ १०० ॥
अल्पत्वञ्च विशेषेण भवेत् षाडवकारिणः।
लङ्घनं पञ्चमस्यैव स्यादारोहणसंश्रयात् ॥ १०१ ॥
षट्स्वरं सप्तमहीने पञ्चस्वर्ये च पञ्चमम्।
विवादिनां स्वराणाञ्च सञ्चारोऽत्र विधीयते ॥ १०२ ॥
धैवत्या धैवतो न्यासः स्यादंशौ धैवतर्षभौ।
अपन्यासा भवन्त्यत्र धैवतर्षभमध्यमाः ॥ १०३ ॥
षड्जपञ्चमहीनं च पञ्चस्वर्यं विधीयते।
आरोहिणौ च कर्त्तव्यौ लङ्घनीयौ धैवतर्षभौ ॥ १०४ ॥
हीनस्वरस्य भावात्तु सम्पूर्णा चेयमिष्यते।
षड्जश्च मध्यमश्चैव निषादो धैवतः स्मृतः ॥ १०५ ॥
स्युः षड्जोदीच्यवत्यंशा न्यासो मध्यम इष्यते।
उपन्यासाविह स्यातां धैवतर्षभ एव च ॥ १०६ ॥
परस्परांशानुगमो गन्धारोनुपमो भवेत्।
पञ्चमस्वरहीनं तु पञ्चस्वर्यं विधीयते ॥ १०७ ॥
ऋषभः षाडवे हीनो लङ्घने च तयोर्भवत्।

सर्वेषां षड्जमध्याया अपन्यासा त एव च ॥ १०८ ॥
षड्जश्च मध्यमश्चैव न्यासौ कार्यौ प्रयोक्तृभिः ।
गान्धारसप्तमोपेतं पञ्चस्वर्यं विधीयते ॥ १०९ ॥
ऋषभः षाडवे हीनो दुर्बलः स विशेषतः ।
सर्वस्वराणां सञ्चारः इष्टस्तस्याः प्रयोक्तृभिः ॥ ११० ॥
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्त जातयः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रिताः ॥ १११ ॥
अंशाः स्युः पञ्च गान्धार्यां धैवतर्षभवर्जिताः ।
अपन्यासत्वमस्यास्तु षड्जपञ्चमयोरपि ॥ ११२ ॥
गान्धारश्च भवेन्न्यासः षाडवं चर्षभं विना ।
धैवतर्षभगान्धार्यां कर्त्तव्यं स्वरयोगतः ॥ ११३ ॥
षड्जमध्यमयोरत्र बाहुल्यं संविधीयते ।
प्रयोक्तृभिः प्रयोक्तव्यं गान्धारस्य च लङ्घनम् ॥ ११४ ॥
गान्धारो विहितन्यासो हीनस्वर्यञ्च लक्षणम् ।
सर्वं च रक्तपूर्वाया गान्धार्याश्च विनिर्दिशेत् ॥ ११५ ॥
बलवन्तौ विधातव्यौ धैवतः सप्तमस्तथा ।
गान्धारषड्जयोरत्र सञ्चारः ऋषभं विना ॥ ११६ ॥
अपन्यासस्तु कार्यः स्यादेक एवात्र मध्यमः ।
गान्धारोदीच्यवायां तु तावंशौ षड्जमध्यमौ ॥ ११७ ॥
पञ्चस्वर्यं भवेन्नात्र षाट्स्वर्यं चर्षभं विना ।
कार्योऽत्रान्तरमार्गस्तु न्यासोपन्यास एव तु ॥ ११८ ॥
तत्राल्पत्वाद् द्विविधयः षड्जोदीच्यवतीसमाः ।
मध्यमाद्वा भवन्त्यंशाः सषड्जर्षभमध्यमाः ॥ ११९ ॥
पञ्चमो धैवतश्चैवापन्यासस्तत्र एव तु ।
न्यासो मध्यम एवात्र द्विश्रुत्योर्हीनता भवेत् ॥ १२० ॥
गान्धारहीनबाहुल्यं षट्स्वर्यं षड्जमध्ययोः ।
गान्धारस्य च दौर्बल्यं मध्यमाया विधीयते ॥ १२१ ॥
मध्यमोदीच्यवायास्तु पञ्चमांशो न हीयते ।

शेषो विधिश्च कर्त्तव्यो गान्धारोदीच्यवांशतः ॥ १२२ ॥
द्वावंशावपि पञ्चम्या भवतः पञ्चर्षभौ ।
अपन्यासो निषादश्च पञ्चमर्षभसंयुतः ॥ १२३ ॥
न्यासः पञ्चम एव स्यात् मध्यमर्षभहीनता ।
दुर्बलाश्चात्र कर्त्तव्या षड्जगान्धारमध्यमाः ॥ १२४ ॥
कुर्याच्चाप्यत्र सञ्चारं मध्यमस्यर्षभस्य च ।
गान्धारगमनं चाल्पं सप्तमात् संप्रयोजयेत् ॥ १२५ ॥
अथ गान्धारपञ्चम्याः पञ्चमांशः प्रकीर्त्तितः ।
पञ्चमश्चर्षभश्चैव अपन्यासौ प्रकीर्त्तितौ ॥ १२६ ॥
गान्धारोऽत्र भवेन्न्यासौ हीनस्वर्यं च नेष्यते ।
पञ्चम्यास्त्वथ गान्धार्याः सञ्चरश्च विधीयते ॥ १२७ ॥
ऋषभः पञ्चमश्चैव गान्धारोऽत्र निषादवान् ।
चत्वारोंऽशा भवन्त्याऽऽन्ध्र्या अपन्यासास्त एव च ॥ १२८ ॥
गान्धारश्च भवेन्न्यासः षड्जापेतश्च षाडवः ।
गान्धारषड्जयोरत्र सञ्चारः स्यात् परस्परम् ॥ १२९ ॥
षष्टसप्तमयोश्चात्र न्यासगत्यानुपूर्वशः ।
षड्जस्य लङ्घनं चात्र नास्ति चौडुवितं तथा ॥ १३० ॥
नन्दयन्त्या भवन्त्यंशः पञ्चमो नित्यमेव तु ।
स्यातामस्यामुपन्यासो मध्यमः पञ्चमस्तथा ॥ १३१ ॥
षाडवं षड्जहीनं तु लङ्घनीयः स एव तु ।
आन्ध्रीवत्सञ्चरो नित्यमृषभस्य च लङ्घनम् ॥ १३२ ॥
तत्र मन्दगतिः प्रोक्ता नित्यं गानप्रयोक्तृभिः ।
तारगत्याथ षड्जस्तु कदाचिन्नातिवर्त्तते ॥ १३३ ॥
गान्धारे च ग्रहः कार्यस्तथा नाशश्च नित्यशः ।
कर्मारव्या भवन्त्यंशाः पञ्चमर्षभधैवताः ॥ १३४ ॥
निषादश्चेति चत्वारो ग्रहाश्च परिकीर्त्तिताः ।
एत एव ह्यपन्यासा न्यासः पञ्चम इष्यते ॥ १३५ ॥
हीनस्वर्यान्न चात्र स्यादनंशा बलिनस्तथा ।

गान्धारस्य विशेषेण सर्वतो गमनं भवेत् ॥ १३६ ॥
कैशिक्यास्तु भवन्त्यंशाः सर्वे चर्षभवर्जिताः ।
एत एव ह्यपन्यासा न्यासौ गान्धारसप्तमौ ॥ १३७ ॥
धैवतेंऽशे निषादे च न्यासः पञ्चम इष्यते ।
दौर्बल्यञ्चर्षभञ्चास्या लङ्घनञ्च विशेषतः ॥ १३८ ॥
अपन्यासत्वमङ्गत्वं बाहुल्यञ्च कदाचन ।
भवेदस्यैव सञ्चारः षड्जमध्यवदिष्यते ॥ १३९ ॥
ऋषभः षाडवे हीनो धैवतश्चर्षभं विना ।
कार्यश्चौडवितो नात्र बलिनौ चान्यपञ्चमौ ॥ १४० ॥
षड्जमध्यवदत्रापि सञ्चारस्तु विधीयते ।
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः ॥
कार्या यस्मिन् रसे याश्च ताश्च मे सन्निबोधत ॥ १४१ ॥

इति भारतीये नाट्यशास्त्रे आतोद्यविधिर्नाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

# अथ एकोनत्रिंशत्तमोऽध्यायः ।

षड्जोदीच्यवती चैव षड्जमध्या तथैव ।
षड्जमध्यमबाहुल्यात् कार्यं शृङ्गारहास्ययोः ॥ १ ॥
आर्षभी चैव षाड्जी च षड्जर्षभग्रहस्वरान् ।
वीराद्भुते च रौद्रे च निषादाङ्गपरिग्रहात् ॥ २ ॥
गान्धार्यंशोपपत्त्या च करुणे षड्जकैशिकी ।
धैवती धैवतांशा च बीभत्से सभयानके ॥ ३ ॥
ध्रुवा विधाने कर्त्तव्या जातिगाने प्रयत्नतः ।
रसं कार्यमवस्थां च ज्ञात्वा योज्याः प्रयोक्तृभिः ॥ ४ ॥
षड्जग्रामाश्रिता ह्येता विज्ञेया जातयो बुधैः ।
अतः परं प्रवक्ष्यामि मध्यग्रामसमाश्रयाः ॥ ५ ॥

गान्धारीरक्तगान्धार्योर्गान्धारोंऽशोपपात्तितः ।
करुणे तु रसे कार्यो जातिगाने प्रयोक्तृभिः ॥ ६ ॥
मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च ।
मध्यपञ्चमबाहुल्यात् कार्यं शृङ्गारहास्ययोः ॥ ७ ॥
मध्यमोदीच्यवा चैव गान्धारोदीच्यवा तथा ।
षड्जर्षभांशनिष्पत्त्या कर्त्तव्या वीररौद्रयोः ॥ ८ ॥
कर्मारवी तथा चान्ध्री निषादांशोपपात्तितः ।
अद्भुते तु रसे कार्ये जातिगाने प्रयोक्तृभिः ॥ ९ ॥
कैशिकी धैवतांशा स्यात् तथा गान्धारपञ्चमी ।
प्रयोक्तव्या बुधैः सम्यक् बीभत्से सभयानके ॥ १० ॥
एकैव षड्जमध्या ज्ञेया सर्वरसासंश्रया जातिः ।
तस्या ह्यंशाः सर्वे स्वरास्तु विहिता प्रयोगविधौ ॥ ११ ॥
यो यदा बलवान् यस्मिन् स्वरो जातिसमाश्रयात् ।
तत्प्रयुक्ते रसे गानं कार्यं गेये प्रयोक्तृभिः ॥ १२ ॥
मध्यपञ्चमभूयिष्ठं हास्यशृङ्गारयोर्भवेत् ।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥ १३ ॥
गान्धारसप्तमप्रायं करुणे गानमिष्यते ।
तथा धैवतभूयिष्ठं बीभत्सं सभयानके ॥ १४ ॥
सर्वेष्वंशेषु रसा नियमविधानेन सम्प्रयोक्तव्याः ।
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः ॥ १५ ॥
एवमेता बुधैर्ज्ञेया जातयो रससंश्रयाः ।
वाद्यप्रयोगविहितान् स्वरांश्चैव निबोधत ॥ १६ ॥
हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ च कर्त्तव्यौ वीररौद्राद्भुतेष्वथ ॥ १७ ॥
गान्धारश्च निषादश्च कर्त्तव्यौ करुणे रसे ।
धैवतश्च प्रयोक्तव्यो बीभत्से सभयानके ॥ १८ ॥
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।
आरोही चावरोही च स्थायिसञ्चारिणौ तथा ॥ १९ ॥

वर्णाश्चत्वार एवैते अलङ्कारास्तदाश्रयाः ।
आरोहन्ति स्वरा यत्र आरोहीति स भण्यते ॥ २० ॥
यत्र चैवावरोहन्ति सोऽवरोहीति संज्ञितः ।
स्थिरस्वराः समा यत्र स्थायिवर्णः स संज्ञितः ॥
सञ्चरन्ति स्वयं यत्र स सञ्चारीति संज्ञितः ॥ २१ ॥
शरीरस्वरसम्भूता त्रिस्थानगुणगोचरा ।
चत्वारो लक्षणोपेता वर्णा ह्येते प्रकीर्त्तिताः ॥ २२ ॥
पदं लक्षणसंयुक्तं यदा वर्णौ तु कर्षति ।
तदा वर्णस्य निष्पातिर्विज्ञेया स्वरसम्भवा ॥ २३ ॥
एते वर्णास्तु विज्ञेयाश्चत्वारो गानयोगतः ।
एतान् समाश्रितान् सम्यगलङ्कारान्निबोधत ॥ २४ ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा समोऽन्यस्थिर एव च ॥ २५ ॥
स्यान्निवृत्तिः प्रवृत्तिश्च कम्पितः कुहरस्तथा ।
रोचितव्यस्तथा चैव प्रेङ्खोलितक एव च ॥ २६ ॥
मन्द्रतारप्रसन्नश्च तारमन्द्रप्रसन्नतः ।
प्रसारश्च प्रसादश्च ततोद्वाहित एव च ॥ २७ ॥
अवलोकितस्ततश्चैव निष्कूजितक एव च ।
उद्गीतो ह्लादमानश्च रञ्जितश्च तथा परः ॥ २८ ॥
आवर्त्तकाख्यो विज्ञेयः परिवर्त्तक एव च ।
उद्घट्टितस्तथाऽक्षिप्तः सम्प्रदानं तदा परः ॥ २९ ॥
हसिताख्योऽथ हुङ्कारः सन्धिप्रच्छादनस्तदा ।
विधूनाख्यस्तदा गात्रवर्णस्तथैव च ३० ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
तथा प्रसन्न एवं च समोऽनुचित एव च ॥ ३१ ॥
प्रस्तारश्च प्रसादश्च स्थायिवर्णसमाश्रयः ।
अथ सञ्चारिजान् भूयः कीर्त्यमानान् निबोधत ॥ ३२ ॥

१ एते षट् श्लोकाः खपुस्तके न दृश्यन्ते ।

मन्द्रतारः प्रसन्नश्च बिन्दुः प्रेङ्खोलितस्तथा ।
तारमन्द्रप्रसन्नश्च सन्निवृत्तप्रवर्त्तकः ॥ ३३ ॥
कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकितः ।
आवर्त्तकपरावृत्तौ ज्ञेयाः सञ्चारिणस्तथा ॥ ३४ ॥
निष्कूजितः सहुंकारहसितं बिन्दुरेचितम् ।
प्रेङ्खोलितं तथाक्षिप्तं विधूमोद्घटिते तथा ॥ ३५ ॥
ह्रादमानः सम्प्रदानं सन्धिः प्रह्लादनं तथा ।
प्रसन्नादिः प्रसन्नान्तः इति चारोहिणः स्मृताः ॥ ३६ ॥
विधूमो गात्रवर्णश्च तथाद्वाहित एव च ।
उद्गीतश्च तथा वेणुरित्येते ह्यवरोहिणः ॥ ३७ ॥
सप्तरूपगता ज्ञेया अलङ्कारास्त्विमे बुधैः ।
नेष्यन्ते हि ध्रुवास्वेते जातिवर्णप्रकर्षणात् ॥ ३८ ॥
बिन्दुर्वापि हि वेणुर्वा ये चान्येऽपि प्रकीर्त्तिताः ।
ते ध्रुवाणां प्रयोगेषु न कार्या स्वप्रमाणतः ॥ ३९ ॥
यस्मादर्थानुरूपा हि ध्रुवा कार्यार्थदर्शिका ।
वर्णानां तु पुनः कार्यं कृशत्वं तु पदसंश्रयम् ॥ ४० ॥
ये तु प्रयोगं गच्छन्ति तांश्च वर्णान् निबोधत ।
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ॥ ४१ ॥
तथा प्रसन्नमध्यश्च बिन्दुकम्पितरेचिता ।
तारश्च तारमन्द्रश्च तथा तारतरः पुनः ॥ ४२ ॥
प्रेङ्खोलितस्तथातारमन्द्रस्तारः समस्तथा ।
स्यान्निवृत्तः प्रवृत्तश्च प्रसादोपाङ्ग एव च ॥ ४३ ॥
अवलोकस्तथा वेणुरित्येते सर्ववर्णगाः ॥
स्थायिवर्णादृते त्वन्ये सर्ववर्णाः प्रयोगिनः ॥ ४४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।
क्रमशो दीप्यते यस्तु प्रसन्नादिः स कथ्यते ॥ ४५ ॥
व्यस्तोच्चारित एवैष प्रसन्नान्तोऽभिधीयते ।

१ विस्तीर्णो ह्यालितः—ख । २ स्पन्दमानः—ख ।

आद्यन्तयोः प्रशमनात् प्रसन्नाद्यन्त इष्यते ॥ ४६ ॥
प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः ।
सर्वसाम्यात् समो ज्ञेयः स्थिरत्वेकस्वरोऽपि यः ॥ ४७ ॥
बिन्दुरेककलस्तारः स्पृष्ट्वा तु पुनरागतः ।
स्यान्निवृत्तः प्रवृत्तश्च मन्दं गत्वा समागतः ॥ ४८ ॥
आक्रीडितलयो यश्च स वेणुः परिकीर्तितः ।
कण्ठे निरुद्धपवनः कुहरो नाम जायते ॥ ४९ ॥
त्रिकलाकम्पनात् तद्वद्रेचिताख्यः शिरोगतः ।
उरोगतः कम्पितः स्यात् कम्पनात्तु कलात्रयम् ॥ ५० ॥
गतागतप्रवृत्ते यः स प्रेङ्खोलित उच्यते ।
यस्तु कण्ठे स्वरोऽधस्तात् स तु तारः प्रकीर्तितः ॥ ५१ ॥
उरोगतस्तथा मन्द्रो मूर्ध्नि तारतरः स्मृतः ।
क्रमागतस्तु यस्तारः षष्ठः पञ्चमोऽपि वा ॥ ५२ ॥
तारमन्द्रः प्रसन्नस्तु ज्ञेयो मन्द्रगतिस्तु सः ॥
लङ्घयित्वा परान् मन्द्रात् क्रमात्तारगतिं गतः ।
मन्द्रतारः प्रसन्नस्तु ज्ञेयो ह्यारोहणाद् बुधैः ॥ ५३ ॥
एकस्वरादिरूढः क्रमशः प्रस्वारसंज्ञितो ज्ञेयः ।
प्रस्वारस्तु निवृत्तःशनैः प्रसन्नः प्रसादः स्यात् ॥ ५४ ॥
समनन्तरौ द्वावपि चरत्युद्वाहितो द्विकल एव ।
आरोहयत्येककलां पुनरेककलां प्रसादयति ॥ ५५ ॥
उद्वाहित एव स्यात् अवलोकितसंज्ञको द्विरभ्यस्तः ।
एकं द्वौ त्रीन् गच्छन् स्वरान् क्रमेण क्रमो ज्ञेयः ॥ ५६ ॥
एकान्तरमारुह्य प्रत्येकान्तरं स्वरो यस्तु ।
अनिष्कूजितसंज्ञोऽसौ ज्ञेयोऽलंकार उद्गीतः ॥ ५७ ॥
क्रमयोगेनाने तु सञ्चार्येकान्तरस्वरो द्विकालम् ।
ह्यवरः षट्पर एव ह्यारोही ह्रादमान स्यात् ॥ ५८ ॥
अथ रञ्जितस्तु समनन्तरस्वरे द्वे कले पुनः स्थित्वा ।
अर्धकलामारोही पुनरेव तथावरोही स्यात् ॥ ५९ ॥

आवर्त्तकश्चतुर्षु स्वरेषु समनन्तरेषु सञ्चरति ।
आरोहणावरोहणविधिनाकोऽध्योऽन्तरेष्वपि च ॥ ६० ॥
ज्ञेयो निरन्तरकृतस्त्वष्टकलः सान्तरस्तथा कार्या ।
तज्ज्ञैः कलाश्चतस्रस्त्ववृत्यावर्त्तको भवति ॥ ६१ ॥
अधिरुह्य तु स्वरान् त्रीन् स्वरान्तरं लङ्घयति तद्वतौ ।
पुनरपि च परावृत्त्या स स्यात् परिवर्त्तकोऽष्टकलः ॥ ६२ ॥
यस्य स्वरावतीतौ यथापरं ह्यन्तरस्वरो भवति ।
एककलश्चैव तथा स भवेदुद्घटितो नित्यम् ॥ ६३ ॥
आक्षिप्तकस्त्रिस्वरजः कर्त्तव्यः षड्विधः कलामात्रः ।
एककलस्वधरः स्याद्विज्ञेयः षट्कलस्तु परः ॥ ६४ ॥
आक्षिप्तवच्चतुर्भिः स्वरैस्तु काले कलान्तरोपेतैः ।
एकान्तरस्वरक्रम इह गदितः सम्प्रदायस्तु ॥ ६५ ॥
द्विरपि विकलं गदितं हिंसितमिव चारितं तथा हसितम् ।
समनन्तरं कृतं तत्तज्ज्ञैराक्षिप्तमित्येव ॥ ६६ ॥
समनन्तरस्वरेषु च हसिताव्यपरश्चतुःपरो वापि ।
आरोहत्येककलाः हुंङ्काराख्यः स विज्ञेयः ॥ ६७ ॥
स्थानानन्तरमारुह्य प्रत्येति ततश्चतुष्कलं क्रमशः ।
नोर्ध्वपरिक्षेपः स्यात् सन्धिः प्रच्छादनो नाम ॥ ६८ ॥
आदौ पदमुत्पाद्य तु यत्र स्याद्द्विस्वरे लघुनि वर्णे ।
समनन्तरमारोहत्येककलं तद्विधूनं तु ॥ ६९ ॥
आदौ आरोही स्यात् प्रस्वारोऽन्तेऽवरोही तु ।
यत्र क्रमात् कलासु वदन्त्यलङ्कारमुद्गीतम् ॥ ७० ॥
ओंकारवदारोहेदनन्तरं तु स्वरं कलान्तरयोः ।
द्वौ द्वौ प्रकम्प्यमानौ स्वरौ ततश्च प्रसन्नौ द्वौ ॥ ७१ ॥
एषोऽलङ्कारविधो विज्ञेयो गात्रवर्ण इत्येव ।
एकारौकारकृते दीर्घाक्षरमन्यदपि योज्यम् ॥ ७२ ॥
गीतालङ्काराणां करणाविधिरयं यथावदुपादिष्टः ।
एभिरलङ्कर्त्तव्या गीतिर्वर्णाविरोधेन ॥ ७३ ॥

स्थाने चालङ्कारं कुर्यान्नह्युरसि काञ्चिकां बध्येत् ।
अतिबहवोऽलङ्कारा वर्णविहीनास्तु योक्तव्याः ॥ ७४ ॥
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव च स्त्री गीत्यलङ्कारहीना स्यात् ॥ ७५ ॥
अलङ्कारास्त्रयस्त्रिंशदेवमेते मयोदिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि गीतीनामपि लक्षणम् ॥ ७६ ॥
प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
सम्भाविता तृतीया च चतुर्थी पृथुला स्मृता ॥ ७७ ॥
भिन्नवृत्तिप्रगीता या सा गीतिर्मागधी मता ।
अर्धकालनिवृत्ता च विज्ञेया त्वर्धमागधी ॥ ७८ ॥
सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता ।
लघ्वक्षरकृता नित्या पृथुला संप्रकीर्तिता ॥ ७९ ॥
एतास्तु गीतयो ज्ञेया ध्रुवायोगं विनैव हि ।
गान्धर्व एव योज्यास्तु नित्यं गानयोक्तृभिः ॥ ८० ॥
अत ऊर्ध्वं प्रवक्ष्यावि साधुवाद्यस्य लक्षणम् ।
विस्तारः करणश्चैव आविद्धो व्यञ्जनस्तथा ॥
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः ॥ ८१ ॥
संघातजश्च समवायजश्च विस्तारजोऽनुबन्धश्च ।
ज्ञेयश्चतुःप्रकारो धातुर्विस्तारसंज्ञस्तु ॥ ८२ ॥
विधिर्यस्तु स्मृतस्तस्य पूर्वं विस्तार एव तु ।
संघातसमवायौ तौ विज्ञेयौ द्विकत्रिकौ ॥ ८३ ॥
पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविधः स्मृतः ।
करणानां विशेषेण विधिश्चैव पृथक् पृथक् ॥ ८४ ॥
अधश्चोर्ध्वश्च विज्ञेयावधरोत्तरजौ स्मृतौ ।
संघातजो विधिस्त्वेष विज्ञेयो वाद्ययोक्तृभिः ॥ ८५ ॥
द्वावुत्तरौ द्विरधस्त्वधरादिश्चोत्तरावसानश्च ।
ज्ञेयस्त्वथोत्तरादिः पुनरप्यधरावसानश्च ॥ ८६ ॥
समवायजस्तथा स्यात् त्रिरुत्तरास्त्रिरधश्च विज्ञेयः ।

व्यधरोत्तरावसानो द्विरुत्तरस्वाधरान्तस्तु ॥ ८७ ॥
प्रागुत्तराद्विरधरादिर्द्विरुत्तरावसानश्च ।
उत्तरमध्यश्च तथा मध्ये त्वधरः पुनर्ज्ञेयः ॥ ८८ ॥
व्यञ्जनधातुर्ज्ञेयः कलतलनिष्कोटितान्यथोन्मृष्टम् ।
रेफावमृष्टपुष्पानुस्वरितं बिन्दुरनुबन्धः ॥ ८९ ॥
अङ्गुष्ठाभ्यां तु तन्त्रीणां स्पर्शनं यत्कलं तु तत् ।
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तलम् ॥ ९० ॥
सव्याङ्गुष्ठप्रहारश्च निष्कोटितमिहोच्यते ।
सव्यप्रदेशिनीघातमुन्मृष्टमिति संज्ञितम् ॥ ९१ ॥
सर्वाङ्गुलिसमाक्षेपाद्रेफ इत्यभिधीयते ।
कनिष्ठांगुष्ठकाभ्यां तु दक्षिणाभ्यामधोगतम् ॥ ९२ ॥
तन्त्रीषु त्रिप्रकारं वाप्यवमृष्टमिति स्मृतम् ।
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिधीयते ॥ ९३ ॥
तलस्थानेऽधरन्यासस्तानध्वनितमुच्यते ।
गुर्वक्षरैकतन्त्र्यां तु बिन्दुरित्यभिसंज्ञितः ॥ ९४ ॥
व्याससमासादेषामनुबन्धः सार्वधातुको ज्ञेयः ।
इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः ॥ ९५ ॥
रुभिताह्लादश्च तथानुबन्धसंज्ञश्च करणधातुः ।
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ॥ ९६ ॥
त्रिकपञ्चकसप्तकनवकैर्घातैर्युक्तो यथाक्रमं विहितः ।
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात् करणधातुः ॥ ९७ ॥
क्षेपप्लुतातिपातोतिकीर्णाबन्धसंज्ञिताश्चेति ।
आविद्धो विज्ञेयो धातुर्वाद्यप्रयोगे तु ॥ ९८ ॥
द्वित्रिचतुष्कैर्नवकैः प्रकारैः क्रमशः कृतैः ।
आविद्धधातुर्विज्ञेयस्त्वनुबन्धविभूषितः ॥ ९९ ॥
इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः ।
तिसृणामपि वृत्तीनां यासु वाद्यं प्रतिष्ठितम् ॥ १०० ॥

---

१०रोह०—क ।

तिस्रो गतिवृत्तयः प्रधान्येन ग्राह्याः चित्रावृत्तिर्दाक्षिणाचेति । तासां वाद्यताललयगीतियतिमार्गप्रधानानि यथास्वं व्यञ्जनानि भवन्ति । तत्र चित्रायां संक्षिप्तवाद्यं तालद्रुतलयसमा यतिः अनागतग्रहाणां प्राधान्यम् । तथावृत्तौ गीतिवादित्रद्विकलतालमध्यलयस्रोतोगता यतिः। समग्रम ार्गाणां प्राधान्यम् । दक्षिणायां गीतिचतुष्कलतालविलम्बितलयगोपुच्छा यतिः अतीतमाग्रहमार्गाणाम् प्राधान्यम् ।

सर्वासामेव वृत्तीनां ललिताद्या हि जातयः ।
धातुभिः सह संयुक्ता भवन्ति गुणवत्तराः ॥ १०१ ॥
त्रिविधं वैणवं वाद्यं कर्त्तव्यं गीतसंश्रयं तज्ज्ञैः ।
तत्त्वं तथानुगतमोघश्चानेककरणसंयुक्तम् ॥ १०२ ॥
लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत्तत्त्वम् ।
गीतं च यदनुगच्छेदनुगतमित्युच्यते वाद्यम् ॥ १०३ ॥
आविद्धकरणबहुलं उपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं चौघं बुधैर्ज्ञेयम् ॥ १०४ ॥
स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघं प्रयुञ्जीयादेष वाद्यगतो विधिः ॥ १०५ ॥
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतः स्मृतः ।
ओघस्तृतीये कर्त्तव्यो लयतालविचक्षणैः ॥ १०६ ॥
एवं तज्ज्ञैर्ज्ञेया वीणावाद्ये तु धातवः प्रोक्ताः ।
वक्ष्येऽधुना विपञ्चीवाद्यविधाने तु करणार्थम् ॥ १०७ ॥
रूपकृतं प्रतिकृतं प्रतिभेदो रूपशेष ओघश्च ।
षष्ठी च प्रतिशुष्का ह्येवं ज्ञेयं करणजातम् ॥ १०८ ॥
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद् रूपम् ।
रूपं रूपं प्रति भेदकृतं प्रतिकृतमित्युच्यते वाद्यम् ॥ १०९ ॥
युगपत्कृतेऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात् ।
वीणावाद्यविरामेऽप्यविरतकरणं तु रूपशेषः स्यात् ॥ ११० ॥
आविद्धकरणयुक्तो ह्युपर्युपरिपाणिकस्त्वोघः ।
प्रतिशुष्का विज्ञेया वाद्ये सहैकतन्त्रिकृता ॥ १११ ॥

कार्यं ध्रुवाप्रयोगे प्रायेण हि कोणवादनं तज्ज्ञैः ॥
द्वाभ्यामपि वीणाभ्यां गाने वा वादने वापि ॥ ११२ ॥
स्थानं पात्रं वा स्यात् तन्त्रिषु विभावयेत् समं गानम् ।
तच्चौघतुल्यकरणं वाद्यं कार्यं विपञ्च्यास्तु ॥ ११२ ॥
सप्ततन्त्री भवेच्चित्रा विपञ्ची नवतान्त्रिका ।
विपञ्ची कोणवाद्या स्यात् चित्रा चाङ्गुलिवादना ॥ ११४ ॥
एवं वेद्या तज्ज्ञैर्नानाकरणाश्रया विपञ्ची तु ।
अत ऊर्ध्वं व्याख्यास्ये लक्षणयुक्तं बहिर्गीतम् ॥ ११५ ॥
आश्रावणारम्भविधी वक्त्रपाणिस्तथैव च ।
परिघट्टना च विज्ञेया तथा संघोटनैव च ॥ ११६ ॥
मार्गासारितमेव स्याल्लीलाकृतमथापि च ।
आसारितानि च तथा त्रिप्रमाणाणि वै तथा ॥ ११७ ॥
एतानि च बहिर्गीतान्यादौ योज्यानि योक्तृभिः ।
सत्वान्यलापतालानि चित्रवृत्तगतानि तु ॥ ११८ ॥
प्रयोजनं हि पूर्वोक्तं पूर्वरङ्गविधौ मया ।
तेषां चैव च वक्ष्यामि लक्षणं सनिदर्शनम् ॥ ११९ ॥

तत्राश्रावणा नाम ।

विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः ।
विश्वापि(?)सन्निवृत्तैः करणोपचयैः क्रमेण स्यात् ॥ १२० ॥
गुरूणि त्वादावेकादशकचतुर्दशकसपञ्चदशकम् ।
सचतुर्विंशकमेव द्विगुणीकृतमेतदेव स्यात् ॥ १२१ ॥
लघुगुरुणी च स्यातामथाष्टमं गुरु भवेत्तदा च पुनः ।
षट् च लघूनि तथान्त्यं गुरु बाह्याश्रावणायान्तु ॥ १२२ ॥
त्रिःशम्यापरिपाणौ तालोऽपि ह्येष निर्दिष्टः ।
समपाणौ द्वे शम्ये तालावप्येवमेव स्यात् ॥ १२३ ॥
भूयःशम्यातालानुगुणाद्युत्तरस्तथा द्विकलश्च ।
घटपरस्तथा च युक्तैः स्यादेव ह्याश्रावणातालः ॥ १२४ ॥

अथारम्भः ।

दीर्घान्यादावष्टौ द्वदशं लघूनि नैधनञ्चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घश्च ॥ १२५ ॥
लघुसंज्ञानि च चत्वारि द्विगुणीकृतानि दीर्घे द्वे ।
अष्टौ लघूनि नैघनमित्यारम्भेऽक्षरविधानम् ॥ १२६ ॥
अस्य तु वाद्यं कार्यं त्रिपर्वहीनैरुपवहनैः ।
रथसंवारोहसुलरहितगुरुयुक्तै(?): करणैः विस्तारभूयिष्ठैः ॥१२७॥
अपचययुक्तैर्द्विः कृत्या च निर्वर्त्तितैर्द्विरभ्यस्तैः ।
आरम्भे वाद्यविधिः कार्यस्त्वेवं प्रयोगज्ञैः ॥ १२८ ॥
तालत्रिकलात्वादौ शम्येककलताताल द्वयमेतालः(?) ।
पुनश्शम्यातालो द्विकलश्च कर्त्तव्यः ॥ १२९ ॥
द्विकलश्चसन्निपातः पुनः पितापुत्रकश्च षट् ।
पूर्वश्चश्चत्पुटस्तस्याद्वास्मैस्तालसंयोगैस्तु(?) ॥ १३० ॥

अथ वक्त्रपाणिः

आविद्धकरणयुक्तो ध्यङ्गः स्योदककः प्रवृत्ते वा ।
अर्धव्यञ्जनधातुर्वाद्येऽप्यथ वक्त्रपाणिस्तु ॥ १३१ ॥
गुरूणि पञ्च हस्वानि षट् गुरूणि चतुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथगुरूणि च ॥ १३२ ॥
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घश्च वक्त्रपाणौ विधीयते ॥ १३३ ॥
द्विकले मन्त्रके यत्तु शम्यातालनिपातनम् ।
तत्सर्वं वक्त्रपाणौ तु मुख्ये ह्यष्टौ कलाः स्मृताः ॥ १३४ ॥
शम्यातालौ तालशम्ये तेषु कुर्यात्क्रमेण तु ।
तालं शम्या च तालश्च सन्निपातं तथैव च ॥ १३५ ॥
तस्याधस्तात्ततः कार्यं पञ्चपाणिचतुष्टयम् ।
वक्त्रपाणेरयं तालो मुखप्रतिमुखाश्रयः ॥ १३६ ॥
अतिदण्डां हस्ताभ्यां वीणामुपदक्षिणाङ्गुल्या ।
अङ्गुष्ठाभ्याञ्च सदा कार्यं संघोटनावाद्यम् ॥ १३७ ॥

सङ्घोटने स्वराणां संवादिविवादिनश्चापि ।
सङ्घोटनात् त्वभिहिता शेषादिभिश्चैव ॥ १३८ ॥
विस्तारधातुकरणैस्त्रिभिश्च चित्रैस्तथा निवृत्तैश्च ।
त्रिस्ताभ्यस्तोपचयैर्वदन्ति घोटजावाद्यम् ॥ १३९ ॥
गुरूणि लघूनि तथाष्टौ दीर्घद्वितयं तथा च कर्तव्यम् ।
लघुदीर्घे लघु च पुनश्चतुर्गुणश्चापि कर्तव्यम् ॥ १४० ॥
पुनरष्टौ ह्रस्वाः स्युस्त्वथ गुरु निधनं तथा कार्यम् ।
सङ्घोटनं वस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ॥ १४१ ॥
अस्यास्तालशीर्षकवत् पञ्चपाणिविहितः ।
परिघट्टनासमक्षं वाद्यं तथास्ते लाघवात् कार्यम् ॥ १४२ ॥
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् ।
दीर्घान्यादावष्टौ लघुनी च द्वे गुरूण्यपि च कुर्यात् ॥ १४३ ॥
लघुनी द्वे सर्वाणि गुरूणि सहैव दीर्घेणं ।
षोडश लघूनि स्युः सगुरूण्यन्ते तथैव कार्याणि ॥ १४४ ॥
एष स परिघट्टनाया गुरुलघुवस्तुक्रमः प्रोक्तः ।
संपिष्टकवज्ञायास्तालः करणैस्तु धातुसंयुक्तैः ॥ १४५ ॥
सकलैर्वाद्यं वाद्यं विस्ताराविद्धकरणसंयुक्तम् ।
मार्गासारिगुरूणि स्युर्लघूनि चत्वार्यथ द्विगुणितानि ॥ १४६ ॥
गुरूणि लघूनि चाष्टावन्त्यं गुरु चेति कर्तव्यम् ।
गुरूणि च लघूनि तथा स्युर्मार्गासारिते च वस्तूनि ॥ १४७ ॥
कनिष्ठासारितविधौ चास्य तालश्रवणमधुराणि लीलाकृतानि ।
चाभिकृतपरिवृत्तानि तान्यप्यर्थवशादिह कर्त्तव्यानि प्रयोगज्ञैः ॥१४८॥

अथासारितानि ज्येष्ठमध्यकनिष्ठानि। तानि च तालप्रमाणानि निर्दिष्टानि । तानि तालविधानेन यथाक्रमं व्याख्यास्ये ॥

एवमेतत् स्वरगतं ज्ञेयं वीणाशरीरजम् ।
अत ऊर्ध्वं प्रवक्ष्यामि सुषिरातोद्यलक्षणम् ॥ १४९ ॥

इति भारतीये नाट्यशास्त्रे ततातोद्यविधानं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

# अथ त्रिंशोऽध्यायः ॥

आद्यं तु सुषिरं नाम ज्ञेयं वंशकृतं बुधैः ।
वैण एव विधिस्तत्र स्वरग्रामसमाश्रयः ॥ १ ॥
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्पिताद्यर्धमुक्ताश्च व्यक्तमुक्तास्तथैव च ॥ २ ॥
तत्रोपरि यथा ह्येकस्वरो वैणः स्वरान्तरे ।
प्राप्नोत्यन्यत्वमेवेह तथा वंशगतोऽपि हि ॥ ३ ॥
द्विकात्रिकचतुष्को वा स्वरः स्याच्छ्रुतिसंख्यया ।
अनीरणात्तु शेषाणां स्वराणां श्रुतिसम्भवः ॥ ४ ॥
स्वराणां च श्रुतिकृतं तच्च मे सन्निबोधत ।
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः ॥ ५ ॥
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिश्च स्वरो भवेत् ।
द्विकोऽर्धाङ्गुलिमुक्तस्तु एवं श्रुत्याश्रिताः स्वराः ॥ ६ ॥
एते तु मध्यमग्रामे भूयः षड्जाश्रिताः पुनः ।
व्यक्तमुक्ताङ्गलिकृता षड्जमध्यमपञ्चमाः ॥ ७ ॥
धैवतश्चर्षभश्चैव कम्पमानाङ्गुलीकृता ।
स्वरसाधारणे चापि काकल्यन्तरसंज्ञके ॥ ८ ॥
निषादगान्धारयोश्च षड्जमध्यमयोरपि ।
विपर्ययः सन्निकर्षे श्रुतिलक्षणसिद्धितः ॥ ९ ॥
वेणुदण्डप्रवेशेन सिद्धा वंशाश्रिताः स्वराः ।
यं यं गतः स्वरो गच्छेत् तं तं वंशेन वादयेत् ॥ १० ॥
शारीरवंशवैणानामेकीभावः प्रशस्यते ।
अविचलितमविच्छिन्नं वर्णालंकारसंयुतम् ॥ ११ ॥
मन्दं विधिललितमधुरं वेणोरेव स्मृतं वाद्यम् ।
एवमेतत्सुषिरस्वरकृतं विज्ञेयं वंशयोक्तृभि ॥
अत ऊर्ध्वं प्रवक्ष्यामि घनातोद्यविकल्पनम् ॥ १२ ॥

इति भारतीये नाट्यशास्त्रे सुषिरातोद्याविधानं
नाम त्रिंशोऽध्यायः ॥ ३० ॥

# अथैकत्रिंशोऽध्यायः ॥

तालो घन इति प्रोक्तः कलपातलयान्वितः ।
कालस्य तु प्रमाणं वै विज्ञेयं तालयोक्तृभिः ॥ १ ॥
या लौकिकी कला काष्ठा निमेषाश्च स्मृता बुधैः ।
न सा तालकला ज्ञेया ह्यन्यैषा तालजा कला ॥ २ ॥
निमेषाः पञ्च मात्रा स्यान्मात्रायोगात् कला स्मृता ।
निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ॥ ३ ॥
ततः कलाकालकृतो लय इत्यभिसंज्ञितः ।
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ॥ ४ ॥
यस्तत्र मन्दोऽथ लयस्तत्प्रमाणकला भवेत् ॥
त्रिविधा सा च विज्ञेया त्रिमार्गा नियता बुधैः ॥ ५ ॥
चित्रे द्विमात्रा कर्त्तव्या वार्त्तिके द्विगुणा तु सा ।
चतुर्गुणा दक्षिणा स्यादित्येवं त्रिविधा कला ॥ ६ ॥
कलाकालप्रमाणेन ताल इत्यभिधीयते ।
चतरस्रश्च त्र्यस्रश्च तालो विविध एव हि ॥ ७ ॥
द्विविधस्यापि तालस्य चैका प्रकृतिरिष्यते ।
तथा योनिद्वयञ्चास्य कीर्त्यमानं निबोधत ॥ ८ ॥
चञ्चत्पुटस्तु विज्ञेयस्तथा चापपुटोऽपि च ।
चतुष्कलोऽथ द्विकलस्तालो यस्मात् प्रवर्तते ॥ ९ ॥
चतुरस्रस्तु विज्ञेयस्तालश्चञ्चूत्पुटो बुधैः ।
प्रथम गुरुणी कृत्वा लघु चान्त्यं प्लुतं तथा ॥१०॥
कुर्याच्चञ्चत्पुटस्यैव बुधश्चापपुटस्य तु ।
आदौ गुर्वक्षरं ज्ञेयं लघुनी गुरु चैव सः ॥ ११ ॥
त्र्यस्रः स खलु विज्ञेयस्तालश्चापपुटो भवेत् ।
अनयोर्मिश्रभावाच्च मिश्रस्तालः प्रकीर्त्तितः ॥ १२ ॥
षट् पितापुत्रकश्चैव पञ्चपाणिः स चेष्यते ।
यथोक्तैरभिनिष्पन्नः स्वसंज्ञागुरुलाघवैः ॥ १३ ॥

समासयोगात्तालोऽयं त्रिविधः परिकीर्त्तितः ।
शम्यातालौ द्विरभ्यस्तौ तालः शम्या तथापि वा ॥ १४ ॥
सन्निपातादिकाले यः शम्यादिश्च तथापरः ।
तथा तालादिभिर्भावैर्युग्मश्चच्चत्पुटो भवेत् ॥ १५ ॥
सन्निपातादिके नाट्ये चतुरस्रो भवेदयम् ।
शम्यादिकस्तु विज्ञेयस्तज्ज्ञैरासादितेषु च ॥ १६ ॥
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु ।
चच्चत्पुटस्य ये भेदाः सन्निपातादयस्त्रयः ॥ १७ ॥
त एव भेदा विज्ञेया बुधैश्चापपुटे पृथक् ।
सन्निपातादिकस्तस्य बलवानितरेऽपि च ॥ १८ ॥
शम्यातालप्रवेशेन त्र्यस्रोऽन्योऽपि विधीयते ।
षट् पितापुत्रककृतः पञ्चपाणिरुदाहृतः ॥ १९ ॥
आद्यं प्लुतं द्वितीयं तु लघु यत्राक्षरं भवेत् ।
तृतीयञ्च चतुर्थञ्च गुरुणी पञ्चमं लघु ॥ २० ॥
प्लुतान्तः षट् पितापुत्रो गुरु लाघवसंयुतः ।
अस्यादौ सन्निपातः स्यात्तालशम्येतरः परम् ॥ २१ ॥
तालशम्ये च तालश्च षट् पाताश्च प्रकीर्त्तिताः ।
तालादिस्त्र्यस्रभेदेऽन्यः संपर्केष्टाकसंज्ञितः ॥ २२ ॥
गुरुसर्वाक्षरो यस्तु प्लुतादन्तः प्रकीर्त्तितः ।
सन्निपातस्ततः शम्या तालशम्यैकतालकः ॥ २३ ॥
त्र्यस्रं सर्वगुरुं कृत्वा निष्क्रामं तत्र योजयेत् ।
शम्याद्वयं ततस्त्वेष उद्घट्टः कथितो बुधैः ॥ २४ ॥
एकमेककलो ज्ञेयः शुद्धश्चत्पुटादिकः ।
यथाक्षरोऽथ द्विकलस्तथा चैव चतुष्कलः ॥ २५ ॥
त्रयो भेदा हि तालस्य द्विगुणा द्विगुणाः स्मृताः ।
चतुरस्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्त्तितः ॥ २६ ॥
चतुष्कलो ह्यष्टकलः कलषोडशकः पुनः ।
त्र्यस्रस्तालस्तु षट्भेदास्त्रिकलः षट्कलस्तथा ॥ २७ ॥

कलाद्वादशकोऽपि स्यात् चतुर्विंशतिकस्तथा ।
कलाष्टचत्वारिंशत्कं कला षण्णवती परा ॥ २८ ॥
तालो नवविधिश्चायमयुग्मः सम्प्रकीर्त्तितः ।
द्विप्रकारस्त्वयं तालो निःश्शब्दः शब्दवांस्तथा ॥ २९ ॥
प्रयोगं द्विविधं चास्य कीर्त्यमानं निबोधत ।
तत्रावापोऽथ निष्क्रामो विक्षेपश्च प्रवेशकः ॥ ३० ॥
चतुर्विकल्पं इत्येवं निःशब्दः कथितो बुधैः ।
शम्यातालो ध्रुवश्चेति सन्निपातस्तथा परः ॥ ३१ ॥
इति शब्देन संयुक्तो विज्ञेयश्च चतुर्विधम् ।
एतेषामथ वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ॥ ३२ ॥
लक्षणञ्च प्रमाणञ्च यथावदनुपूर्वशः ।
सर्वाङ्गुलिसमाक्षेप आवाप इति संज्ञितः ॥ ३३ ॥
निष्क्रमोऽधोगतः सव्यादङ्गुलीनां प्रसारणम् ।
तस्य दक्षिणतः क्षेपात् विक्षेपः परिकीर्त्तितः ॥ ३४ ॥
निवर्तनं[1] च हस्तस्य प्रवेशोऽधोमुखस्य च ।
कृत्वाङ्गुलीनामाक्षेपं निष्क्रामं च भवेदथ ॥ ३५ ॥
विक्षेपश्च पुनः कार्यः पुनश्चैव प्रवेशनम् ।
यदा चतुष्कलो योगस्तदा त्वेष विधिर्भवेत् ॥ ३६ ॥
निष्क्रामश्च प्रवेशश्च द्विकलौ परिकीर्त्तितौ ।
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्त्तिताः ॥ ३७ ॥
शम्यातालश्च विज्ञेयः सन्निपातस्तथैव च ।
शम्या दक्षिणहस्तः स्यात्तालः पातस्तु वामतः ॥ ३८ ॥
हस्तयोस्तु समः पातः सन्निपात इति स्मृतः ।
ध्रुवं तु मात्रिकं पातः रागमार्गप्रयोजकः ॥ ३९ ॥
कला या स्त्रिविधा प्रोक्ता तासां पातो ध्रुवः स्मृतः ।
यथाक्षरस्य तालस्य स तु गुर्वक्षरः स्मृतः ॥ ४० ॥
यदाक्षरकृतैः पातैस्तालो ज्ञेयो यथास्थितः ।

१ विकत्थनं --क ।

गुर्वक्षरैश्च विश्लिष्टैः स एव द्विकलो भवेत ॥ ४१ ॥
द्विर्भावो द्विकलस्यैव विज्ञेयस्तु चतुष्कलः ।
यदाक्षरकृतैः पातैः सर्वैरेव प्रकीर्त्तिताः ॥ ४२ ॥
चञ्चत्पुटस्य विज्ञेयस्तथा चापपुटस्य च ।
पञ्चपाणेश्च विहिताः भेदा ह्येत त्रयः स्मृताः ॥ ४३ ॥
व्युदस्य युग्मराजं तु पञ्चताला भवन्ति हि ।
मिश्रागीताङ्गसंयुक्तात् ज्ञेया ह्युद्घट्टकदयः ॥ ४४ ॥
कलापञ्च तथा सप्त पुनर्नव च कीर्त्तिताः ।
दश चैकादशैते च सङ्कीर्णाः समुदाहृताः ॥ ४५ ॥
न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवास्वपि ।
प्रवृत्तादिषु कर्त्तव्या एते गानप्रयोक्तृभिः ॥ ४६ ॥
त्र्यस्रश्च चतरस्रश्च षट्कलोऽष्टकलस्तथा ।
ध्रुवाणां तु भवेत्तालं संप्रवक्ष्यामि तत्त्वतः ॥ ४७ ॥
कनिष्ठाङ्गुलिनिष्क्रामः शम्याश्चैव ततो भवेत् ।
कनिष्ठानामिकाभ्यां तु निष्क्रामौ तौ विधीयते ॥ ४८ ॥
ततस्तालस्तु कर्त्तव्यः शम्या चैव तु पञ्चमी ।
प्रवेशो मध्यमाङ्गुष्ठे कर्त्तव्यस्तर्जनीकृतः ॥ ४९ ॥
निष्क्रामः सन्निपातेऽन्त्ये नित्यमष्टकलो भवेत् ।
एष युग्मे कलोपेतो विकल्पाङ्गुलिभिः कृतः ॥ ५० ॥
कनिष्टाङ्गुलिनिष्क्रामः प्रवेशश्च तथा भवेत ।
कनिष्ठानामिकास्थाने ततस्तालस्तृतीयकः ॥ ५१ ॥
शम्या तालश्चतुर्थी च निष्क्रामो मध्यमाकृतः ।
कनिष्ठाङ्गुलिनिष्क्रामः प्रथमानुकलो भवेत् ॥ ५२ ॥
शम्यापातो द्वितीये तु तृतीये ताल एव च ।
शम्या तत्र चतुर्थी तु पञ्चमी तर्जनीक्रमात् ॥ ५३ ॥
षष्ठस्य सन्निपातः स्यादेष वै षट्कलो विधिः ।
षष्ठस्तालस्ततो ज्ञेयो निष्क्रामस्तर्जनीकृतः ॥ ५४ ॥
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ।

कनिष्ठिकाप्रदेशस्तु दशमी च कला भवेत् ॥ ५५ ॥
निष्क्रामश्चैव तर्जन्या तदनन्तरमिष्यते ।
सन्निपातस्तथान्ते च कलद्वादशके विधिः ॥ ५६ ॥
एष त्वावापविक्षेपव्यवधानेन पण्डितैः ।
विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभिः कृतः ॥ ५७ ॥
एवमेव मया तालः समासात्समुदाहृतः ।
आसारिते वर्धमाने गीताङ्गेषु च यः स्मृतः ॥ ५८ ॥
ज्ञेयश्चञ्चत्पुटस्यादौ कृत्वा तु गुरुलाघवम् ।
पञ्चपाणिं ततः कुर्यात् द्विरभ्यस्तप्रयोगवित् ॥ ५९ ॥
यथाक्षरं तु पूर्वत्र यथावाद्विनिवेशयेत् ।
शम्यातालः पुनश्चैव शम्यातालमथापि वा ॥ ६० ॥
आद्येऽक्षरे सन्निपातः पञ्चपाणैश्च योजयेत् ।
शम्या तालश्च तालश्च शम्यातालमतः परम् ॥ ६१ ॥
एष एव द्वितीयेऽपि पञ्चपाणौ विधिः स्मृतः ।
प्लुतस्यान्ते कृतस्येष्टः सन्निपातः प्रयोक्तृभिः ॥ ६२ ॥
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः ।
यथाक्षरञ्चाक्षरैश्च वामपातान् निबोधत ॥ ६३ ॥
चकारे तु भवेच्छम्या द्वितीयस्ताल एव च ।
पुकारे तु भवेच्छम्या टकारे ताल एव च ॥ ६४ ॥
एवं चञ्चत्पुटो ज्ञेयः पञ्चपाणिरतः परम् ।
गुर्वक्षराणां विक्षेपात् एवमेव तु मध्यमम् ॥ ६५ ॥
विभावो मध्यमस्येव ज्येष्ठ इत्यभिधीयते ।
मध्यमव्यवधानेन न्यसेच्च द्विगुणाः कलाः ॥ ६६ ॥
सान्निपातनिपातैश्च तेषां वस्तुप्रकीर्त्तितम् ।
अतः परं प्रवक्ष्यामि लयान्तारितलक्षणम् ॥ ६७ ॥
तालो यस्य कनिष्ठः स्यात् सलयान्तरितः स्मृतः ।
कला कलान्तरकृता केवलं तु कलान्तरम् ॥ ६८ ॥
अयमेव तालयोगो विशेषसिद्धिस्तु पूर्वनिर्दिष्टा ।

भवन्ति हि लयान्तरिते शब्दाद् भेदो लयाच्चैव ॥ ६९ ॥
द्विगुणोक्षरसंयोगादन्यमार्गप्रयोजनात् ।
वृत्तेर्विशिष्टकालाच्च लयादन्यलयान्तरम् ॥ ७० ॥
एवं तालविधानं तु कनिष्ठसंज्ञे लयान्तरे चैव ।
मध्यासारिततालं पुनरेवं संप्रवक्ष्मामि ॥ ७१ ॥
द्विगुणान्तरवृत्त्या ह्रस्वैव तु मध्यमं विधातव्यम् ।
प्रस्तारेण कलानां शम्या तालान्तरोपेतम् ॥ ७२ ॥
उत्तरतालः प्रथमे वस्तुन्यादौ कलात्रयं त्यक्त्वा ।
कार्यौ मध्ये नित्यं द्वौ परिवृत्तौ च संपूर्णौ ॥ ७३ ॥
पूर्वं शम्या कार्या द्विकलस्तालः कलद्वये गम्या ।
पुनरेककलस्तालस्त्रिकलस्य सन्निपातश्च ॥ ७४ ॥
त्रिकलोऽथ पुनस्तालः शम्येककलाद्वये तालम् ।
द्विकला कार्याणामनुस्मृतिरुदाहृता ॥ ७५ ॥
नैवासने शयने धृतिमुपलभेत स्वकर्माणि विहीना ।
तच्चित्तोपहत्वात् तृतीयमेकं प्रयुञ्जीत ॥ ७६ ॥
अङ्गप्रत्यङ्गलीलाभिः या चेष्टाहासितेक्षितैः ।
नास्त्यन्यः सदृशस्तेनेत्येतत्स्यात गुणकीर्त्तनम् ॥ ७७ ॥
गुणकीर्त्तनोल्लसनैरास्रस्वेदपमार्जनाद्वापि ।
दूत्यविरहविस्रंभैरभिनययोगश्चतुर्थे तु ॥ ७८ ॥
आसने शयने वापि न तुष्यति न हृष्यति ।
नित्यमेवोत्सुका च स्यात् उद्वेगस्थानमेव तत् ॥ ७९ ॥
चिन्तानिःश्वासखेदैश्च हृत्तापाभिनयेन च ।
कुर्यात्तदेवमत्यर्थमुद्वेगाभिनयेन च ॥ ८० ॥
इहास्थित इहासीन इह चोपगतो मया ।
इति तैस्तैर्विलपितैः विलापस्त्वभिदार्शितः ॥ ८१ ॥
उद्विग्नात्यर्थमौत्सुक्यात् रत्या चापि विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता ॥ ८२ ॥
तत्संश्रयकथायुक्ता सर्वावस्थागतापि हि ।

पुंसः प्रद्वेषिता चैव स्यादुन्मादः प्रकीर्तितः ॥ ८३ ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तदोन्मादे ॥ ८४ ॥
समदनार्थसम्भोगैः काम्यैः संप्रेक्षणैरपि ।
सर्वैर्निराकृतैः पश्चात् व्याधिः समुपजायते ॥ ८५ ॥
मुह्यति हृदयं दह्यत्यङ्गं शिरसश्च वेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत ॥ ८६ ॥
पृष्टा न किञ्चित् प्रब्रूते न शृणोति न पश्यति ।
तूष्णीं हाकष्टभावा च नष्टचित्ता जडा स्मृता ॥ ८७ ॥
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासग्रस्तानना चैव जडताभिनयो भवेत ॥ ८८ ॥
प्रतीकारैः कृतैः सर्वैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया भवेत्तु मरणं तु तत ॥ ८९ ॥
एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु ।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥ ९० ॥
विविधैः पुरुषोऽप्येवं विप्रलम्भानुपूर्वकैः ।
भावैरेतानि कामस्य नानारूपाणि कारयेत् ॥ ९१ ॥
एवं भावयमानानां नृणां स्त्रीणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ ९२ ॥
चिन्तानिःश्वासखेदेन देहस्यायासनेन च ।
तथानुगमनाच्चापि तथा चैव निरीक्षणात ॥ ९३ ॥
आकाशवीक्षणाच्चापि तथा दीर्घप्रभाषणात् ।
स्पर्शनान्मोदनाच्चापि तथा चोपश्रयाश्रयात् ॥ ९४ ॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत ॥ ९५ ॥
वासोभूषणगन्धांश्च गृहाण्युपवनानि च ।
भूयिष्ठं दह्यमानो हि शीतलानि निषेवते ॥ ९६ ॥
प्रसह्यमानः कामार्तो बहुस्थानसमर्दितः ।

प्रेषयेत् कामतो दूतीमात्मावस्थाप्रदर्शिनीम् ॥ ९७ ॥
सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।
इयं तस्या व्यवस्थेति निवेद्य प्रश्रयादिभिः ॥ ९८ ॥
अथावेदितभावार्थैं रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते ॥ ९९ ॥
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तरगतान् सम्यक् कामतन्त्रैः समुत्थितान् ॥ १०० ॥
सुखदुःखकृतान् भावान् नानाशीलसमुत्थितान् ।
यान्यान् प्रकुरुते राजा तांस्तांल्लोकोऽनुवर्त्तते ॥ १०१ ॥
न दुर्लभा नृपाणां तु स्त्रियो ह्याज्ञाकृता गुणाः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत ॥ १०२ ॥
बहुमानेन देवीनां वल्लभानां भयेन च ।
प्रच्छन्नकामितं राज्ञः कार्यं परिजनं प्रति ॥ १०३ ॥
यद्यप्यस्तु नृपाणां तु कामतन्त्रमनेकधा ।
प्रच्छन्नकामितं यत्तु तद्धि रतिकरं भवेत् ॥ १०४ ॥
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ।
दुर्लभत्वं च नार्याः सा कामस्य रतिः परा ॥ १०५ ॥
राज्ञामन्तःपुरजने दिवासम्भोग इष्यते ।
वाह्योपचारो यत्रैव स रात्रौ परिकीर्त्तितः ॥ १०६ ॥
परिपाट्यां फलार्थे वा नवप्रवस एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥ १०७ ॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ।
द्वेष्यानामथवेष्टानां कर्त्तव्यमुपसर्पणम् ॥ १०८ ॥
तत्र वासकशय्या वा विरहोत्कण्ठितापि वा ।
स्वाधीनभर्त्तृका चैव कलहान्तारितापि च ॥ १०९ ॥
खण्डिता विप्रलब्धा च तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ॥ ११० ॥
उचिते वासके या तु रतिसम्भोगलालसा ।

मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका ॥ १११ ॥
अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियः ।
अनागमनदुखार्त्ता विरहोत्कण्ठिता तु सा ॥ ११२ ॥
सुरतैश्चरितैर्बद्धो यस्याः पार्श्वे तु नायकः ।
सामोदगुणसम्प्राप्ता भवेत् स्वाधीनभर्तृका ॥ ११३ ॥
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः ।
सामर्षवशसम्प्राप्ता कलहान्तरिता भवेत् ॥ ११४ ॥
व्यासङ्गादुचिते यस्या वासके नाऽऽगतः प्रियः ।
तस्यानागमदुःखार्त्ता खाण्डिता साभिधीयते ॥ ११५ ॥
यस्या दूती प्रियं प्रेष्य दत्वा सङ्केतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा स्मृता ॥ ११६ ॥
नानाकार्यार्थसम्पन्नैर्यस्या विप्रोषितः प्रियः ।
सारूढालकशोभान्ता भवेत् प्रोषितभर्तृका ॥ ११७ ॥
हित्वा लज्जां समाकृष्टा मदनेन मदेन वा ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ ११८ ॥
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रयाः ।
एतासां चैव वक्ष्यामि यथा योज्यं प्रयोक्तृभिः ॥ ११९ ॥
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन वा ।
सखीनां सम्प्रलापैश्च आत्मावस्थाविलोकनैः ॥ १२० ॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च ।
निर्भूषणमृजात्वेन दुःखेन रुदितेन च ॥ १२१ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
तथा प्रोषितकान्ता च भावैरेवं प्रयोजयेत् ॥ १२२ ॥
विचित्रितोज्वलवेषा तु प्रमदोद्योतितानना ।
उदीर्णशोभाऽतिशया कार्या स्वाधीनभर्तृका ॥ १२३ ॥
वेश्यायाः कुलजातायाः प्रेष्याया वाऽथवा नृपैः ।
एभिर्भावविशेषैस्तु कर्त्तव्यमभिसारणम् ॥ १२४ ॥
समागदितसञ्चारा गच्छेत्प्रेष्या समुद्धतम् ।

गत्वा सा वदति व्यक्तं पश्येत्सुप्तं प्रियं ततः ।
अनेन तु प्रकारेण कुर्याद्वै प्रतिबोधनम् ॥ १२५ ॥
निर्भत्सनपरः प्रायस्तथा श्वसनपेशलम् ।
निष्ठुरं मधुरं चैव सखीनामपि जल्पनम् ॥ १२६ ॥
नवकामप्रवृत्तायाः क्रुद्धाया वा समागमे ।
सापदेशैरुपायैस्तु वासकं प्रतियोजयेत् ॥ १२७ ॥
नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि ।
नित्यं सुखान्युदात्तानि निषेवेत मुदान्विता ॥ १२८ ॥
न तथा भवति मनुष्यो मदनवशः कामिनीमलभमानः ।
द्विगुणोपचारहर्षो भवति यथा सङ्गतः प्रियया ॥ १२९ ॥
विलासभावेङ्गितवाक्यलीला
विशेषमाधुर्यगुणोपपन्ना ।
परस्परप्रेमनिरीक्षितेन
समागमः कामगतस्तु कार्यः ॥ १३० ॥
नार्याप्यथ विशेषेण प्रमोदरससम्भवः ।
वासोपचारः कर्त्तव्या नायकागमनं प्रति ॥ १३१ ॥
गन्धमाल्ये गृहीत्वा तु चूर्णवासस्तथैव च ।
आदर्शः संगृहीतव्यो कृतार्थाऽपि पुनःपुनः ॥ १३२ ॥
वासोपचारो नात्यर्थं भूषणग्रहणं भवेत् ।
रशनानूपुरप्रायस्वप्नवच्चैव यद्भवेत् ॥ १३३ ॥
न मञ्चग्रहणं रङ्गे न स्नानं नानुलेपनम् ।
नाञ्जनं नाङ्गरागो वा स्तनकेशग्रहौ न च ॥ १३४ ॥
नापावृता नैकवस्त्रा नरागमधरस्य च ।
उत्तमा वापि मध्या वा प्रयोक्तव्याङ्गना क्वचित् ॥ १३५ ॥
अधमानां भवेदेष विधिः प्रकृतिसम्भवः ।
कारणान्तरमासाद्य तासामपि न कारयेत् ॥ १३६ ॥
वेश्यादीनां तु नारीणां नराणामपि नाटके ।
भूषणग्रहणं कृत्वा पुष्पाणां ग्रहणं भवेत् ॥ १३७ ॥

निर्युक्तमण्डना चापि प्रतीक्षेत प्रियागमम् ।
लीलया मण्डितं वेषं कुर्याद्यन्न विरुध्यते ॥ १३८ ॥
वासोपचारं कृत्वैव नायिका नायकागमम् ।
शृणुयान्नायिका घोषं तत्प्रतीक्षासनस्थिता ॥ १३९ ॥
श्रुत्वा तु नायिकाघोषं नायकागमविप्लवा ।
वेपन्ती सन्नहृदया तोरणाभिमुखी व्रजेत् ॥ १४० ॥
वामेन तोरणं गृह्य कवाटं दक्षिणेन तु ।
हस्तेनाधोमुखीभूय प्रतीक्षेत प्रियागमम् ॥ १४१ ॥
शङ्काञ्चिता भयञ्चैव प्रकुर्यात् कारणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् ॥ १४२ ॥
दीर्घञ्चैव विनिःश्वस्य आस्यञ्चैव विपातयेत् ।
सन्नञ्च हृदयं कृत्वा विमुञ्चेदङ्गमासने ॥ १४३ ॥
व्याक्षेपात् विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चैव शुभाशुभसमन्वितैः ॥ १४४ ॥
गुरुकार्यैश्च मित्रैर्वा मन्त्रिणां राज्यचिन्तया ।
अनुबद्धः प्रियः किन्नु धृतो वल्लभयापि वा ॥ १४५ ॥
आकारं दर्शयेदेवं शुभाशुभसमुत्थितम् ।
निमित्तैरात्मसंस्थैस्तु स्फुरितैः स्पन्दितैस्तथा ॥ १४६ ॥
शोभनेष्वथ कार्येषु निमित्तं वामतः स्त्रियः ।
अनिष्टेष्वथ सर्वेषु निमित्तं दक्षिणं भवेत् ॥ १४७ ॥
सव्यनेत्रललाटञ्च भ्रूरथोष्ठं तथैव च ।
ऊरुबाहुस्तनञ्चैव स्फुरेद्यदि समागमः ॥ १४८ ॥
अथोऽन्यथास्पन्दमानमनिष्टञ्चापि निर्दिशेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत् क्षणं ततः ॥ १४९ ॥
अनागमे नायकस्य हस्तो गण्डाश्रितो भवेत् ।
प्रसाधनेऽप्यवज्ञानं रोदनञ्च समाचरेत् ॥ १५० ॥
ततश्च शोभनं पश्येन्निमित्ते नायकागमे ।
सूच्यो नायिकयाऽऽसन्नो गन्धाघ्राणेन नायकः ॥ १५१ ॥

दृष्ट्वा चोत्थापनं दृष्ट्वा प्रत्युद्गच्छेत्तु नायकः ।
ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥ १५२ ॥
सखीहस्तार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत्तु ततः कान्तं सचिन्हं सरसव्रणम् ॥ १५३ ॥
यदि स्यादपराधस्तु ततस्तैस्तैरुपक्रमैः ।
उपालम्भकृतैर्वाक्यैरुपालभ्यस्तु नायकः ॥ १५४ ॥
मानावमानसम्मानैरवहित्थैर्यथाक्रमम् ।
अवहित्थप्रयोगेषु प्रच्छन्नवचनेषु च ॥ १५५ ॥
हास्ये कुतूहले चैव सम्भ्रमे व्यसने तथा ।
हास्योपस्थानसम्प्राप्ते दोषोपक्षेपनिह्नवे ॥ १५६ ॥
अनाभाष्योऽपि सम्भाष्यः प्रिय एभिस्तु कारणैः ।
यत्र स्नेहो भयं तत्र यत्रेर्ष्या मदनस्ततः ॥ १५७ ॥
चतस्रो योनयस्तस्याः कीर्त्यमाना निबोधत ।
वैमनस्यं व्यलीकञ्च विप्रियं मन्युरेव च ॥ १५८ ॥
एतेषां सम्प्रक्ष्यामि लक्षणानि यथाक्रमम् ।
निद्राखेदालसगतिं सचिन्हं सरसव्रणम् ।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं विधीयते ॥ १५९ ॥
तीव्रासूयितवदना रोषात् बहुशः प्रवेममानाङ्गी ।
साध्विति सुष्ठिति वाक्यैः शोभनमित्येवमभिनेयः ॥ १६० ॥
बहुशोऽवधीर्यमाणोऽपि यस्तत्रैव हि तिष्ठति ।
संहर्षाच्चात्र मात्सर्यात् व्यलीकमुपजायते ॥ १६१ ॥
कृत्वोरसि वामकरं दक्षिणहस्तं तथा विधुन्वाना ।
चरणविनिष्टम्भेन च कार्योऽभिनयो व्यलीके तु ॥ १६२ ॥
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वञ्च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात् एतद्वै विप्रियं भवेत् ॥ १६३ ॥
दूतीलेखप्रतिवचनभेदनैः क्रोधसहितरुदितैश्च
विप्रियकरणाभिनयः स्वशिरःकम्पैश्च कर्त्तव्यः ॥ १६४ ॥
प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः ।

उपसर्पेत् सचिह्नश्च मन्युस्तत्रोपजायते ॥ १६५ ॥
वलयपरिवर्त्तनैरथ साशिथिलमुत्क्षेपणेन रशनायाः ।
मन्युस्त्वाभिनेतव्यः सशङ्कितं वाष्पपूर्णाक्ष्या ॥ १६६ ॥
दृष्ट्वा स्थितं प्रियतमं शङ्कितं सापराधमतिलज्जम् ।
ईर्ष्यावचनसमुत्थैरथ खेदयितव्यो ह्युपालम्भेन ॥ १६७ ॥
मध्याङ्गुल्याङ्गुष्ठा न विध्यात् पाणिना ह्युरःस्थेनातः ।
उद्वर्त्तितनेत्रतया तथा प्रततवीक्षणाच्चापि ॥ १६८ ॥
कटिहस्तनिविष्टतया विच्छिन्नतया तथा च ।
पुनश्शम्याद्वितालो द्विकलश्च कर्त्तव्यः ॥ १६९ ॥
त्रिकलश्च सन्निपातो भूत्वयो(?)विधिरेष कर्तव्यः ।
द्वादशकलस्तृतीये तस्यान्ते सन्निपातश्च ॥ १७० ॥
प्रथमस्त्वष्टकलः स्यात् द्वादशकलिकौ तथा स्मृतौ द्वौ च ।
अन्त्यश्च सन्निपाते मध्यः स्यात् सारितस्योक्तम् ॥ १७१ ॥
ये पूर्वमङ्गुलिकृता प्रवेशनिक्षेपनिष्क्रमा गदिताः ।
ते सर्वे कर्त्तव्या मध्ये त्वासारिते तज्ज्ञैः ॥ १७२ ॥
अथ ज्येष्ठे च कर्त्तव्यं शम्याताललयात्मकम् ।
शरीरं हि बुधैर्नित्यं पञ्चषष्टिकलान्वितम् ॥ १७३ ॥
तस्यावापोऽथ निष्क्रामो निक्षेपश्च निवेशनम् ।
अङ्गुलीनां प्रकर्त्तव्यं कलामानं चतुष्कलम् ॥ १७४ ॥
ज्येष्ठं चतुष्कलं स्यादावापैः संयुक्तं सविक्षेपैः ।
वस्त्वन्यत्तत्र स्यात् सप्तदशकलं तु शम्यादि ॥ १७५ ॥
पूर्वं शम्या कार्या चतुष्कलो वै भवेत तालः ।
शम्या चतुष्कला स्याद् द्विकलस्तालस्ततः कार्यः ॥ १७६ ॥
कार्यश्च सन्निपातः षट्कलिकस्पर्शकलश्च तालः स्यात् ।
द्विकला च पुनश्शम्या चतुष्कलः स्यात् पुनस्तालः ॥ १७७ ॥
शम्या चतुष्कला स्यात्तालो द्विकलश्च कर्त्तव्यः ।
पुनरेव सन्निपातः षट्कलः संविधातव्यः ॥ १७८ ॥
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि सन्निपातान्ते ।

पुनरेवैषामङ्गुलिविक्षेपं सम्प्रवक्ष्यामि ॥ १७९ ॥
आवापःसह शम्यायां निष्क्रामश्च ततःपरम् ।
विक्षेपश्च ततः कार्यः तालश्चावाप इष्यते ॥ १८० ॥
अनामिका वा निष्क्रामो विक्षेपोऽनन्तरः स्मृतः ।
शम्या वा सह आवापस्तालो विक्षेपणं पुनः ॥ १८१ ॥
मध्यमयाङ्गुल्या प्रवेशश्च आवापश्च ततः कार्यः ।
तर्जनीनिष्क्रमस्तथा विक्षेपश्च ततः कार्यःसन्निपातान्त्य एव च १८२
कलाः सप्तदश ह्येता सन्निपातादनन्तरम् ।
आवापश्च पुनः कार्यः मध्यमयाङ्गुल्या पुनः प्रवेशश्च ॥१८३॥
आवापश्च ततः कार्यं तर्जनीनिष्क्रमस्तथा ।
विक्षेपः पञ्चदशकः शम्यया सह कीर्तितः ॥ १८४ ॥
आवापश्चैव कर्त्तव्यः पुनस्तालप्रयोक्तृभिः ।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ॥ १८५ ॥
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः ।
सन्निपातस्तथा यश्च चतुर्विंशतिको भवेत् ॥ १८६ ॥
तृतीये सन्निपातः स्यात् एष एव विधिः स्मृतः ।
वस्त्वस्या द्वे ह्यज्येष्ठेषु द्वे चान्ये पूर्ववद् योज्ये ॥ १८७ ॥
षट्कम्पमष्टपातं त्रिसन्निपातं त्रिवस्तु चाप्येवम् ।
सप्तदशयतनयुक्तं विद्यादासारितं सर्वम् ॥ १८८ ॥
एवं ज्येष्ठस्य विज्ञेयस्तालोऽङ्गुलिविकल्पतः ।
प्रथमः षोडशकलश्चतुर्विंशतिकः स्मृतः ॥ १८९ ॥
द्वितयिश्च तृतीयस्तु सन्निपातः कलाधिकः ।
प्रत्येकपतनं येषु दश सप्त भवन्ति हि ॥ १९० ॥
शम्यातालकृतानीह सन्निपातकृतानि च ।
अष्टौ तालास्तु षट् शम्याः सन्निपाताश्रयास्तथा ॥ १९१ ॥
आसारिते विधौ ह्येष एकैकस्मिन् प्रकीर्तितः ।
आसारितानां वक्ष्यामि प्रस्तारं लघुलक्षणम् ॥ १९२ ॥
मुखं प्रतिमुखञ्चैव देहः संहरणस्तथा ।

अङ्गान्येतानि चत्वारि सर्वेष्वासारितेषु च ॥ १९३ ॥
उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत् ।
ओजश्शरीरसंहारावेवमङ्गविधिक्रमः ।
इत्येवं चतुरङ्गानि ज्ञेयान्यासारितानि तु ॥ १९४ ॥
अथ तत्र मुखे तालौ ध्रुवपातैरेव नियमितौ मानम् ।
तस्य कलामात्राक्षरगुरुलघुवर्णस्थितिं वक्ष्ये ॥ १९५ ॥
ज्येष्ठस्य कला ह्यष्टौ मुखं भवेन्मध्यमस्य सप्त कलाः ।
षष्ठिर्लयान्तरे स्यात पञ्चैव कलाः कनिष्ठस्य ॥ १९६ ॥
आदावन्ते गुरूणि मध्ये तु लघूनि साद्यतः प्रभृति ।
अष्टौ द्वादश षोडश विंशतिरपि चाक्षराणि स्युः ॥ १९७ ॥
आसारितोपवहनेष्वादावासारणानि युक्तानि ।
तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि ॥ १९८ ॥
यथा–अद्धलञ्चञ्जगति लवतदिधि अणुं एततुवाले ज्ञेयं कुत्सवृद्धं धया-
अगतिदितदित गिसलवृद्धमध्येति चावृद्धं भवज्येष्ठम् (?) ॥१९९॥
चत्वारस्तु गुणा युग्मे ओजे षट् परिकीर्त्तिताः ।
पञ्चपाणौ द्वितीये तु सार्द्धाः षट् परिकीर्त्तिताः ।
कनीय एव कर्त्तव्यमक्षरैस्तालमानतः ॥ २०० ॥
देवं देवैः संस्तुतमीशं दैत्यैर्यक्षैः प्रणमितचरणम् ।
त्रैलोक्यहितं हरं शं शरणमहमुपगतः ॥ २०१ ॥
अष्टावेव गणाः कार्याः पूर्वताले यथाविधि ।
द्वादशैव तु कर्त्तव्याः षट् पितापुत्रके गणाः ॥ २०२ ॥
अर्थ त्रयोदश तथा तृतीये वस्तुसंज्ञिनि ।
एवमक्षरविन्यासो मध्यमासारिते स्मृतः ॥ २०३ ॥
यथा–भूताधिपतिं भगनेत्रहरणमीशं देवम् ।
सुरमखमथनं रौद्रं भयदं गजचर्मपटम् ।
शम्भुं त्र्यक्षं ज्वलननिभजटं भुजङ्गपरिकरम् ॥
त्रिदशपरिकरं त्रिदशपरिगणं
दैत्यैर्नित्यं परिपठितचरितममरपतिचरितम्

अभिमतसुखदं रुद्रं पीतं पितृवननिलयं
गङ्गाप्लावनगोभिजटं तं
शरणं गतोस्मि वरदञ्च महेश्वरम् ॥ २०४ ॥
कार्याः षोडश युग्माख्ये ताले तु प्रथमे गणाः ।
चतुर्विंशतिरोजाख्ये द्वितीये वस्तुसंज्ञिते ॥ २०५ ॥
चतुर्विंशतिरर्द्धश्च द्वितीये वस्तुके भवेत् ।
ज्येष्ठेऽप्यासारिते कार्यस्त्वेवमक्षरसञ्चयः ॥ २०६ ॥
यथा—अमरप्रवरं मदनांगहरं भुवनैकनाथ मभयप्रदं
त्रिपुरनाशकरं देवं तमहं प्रणतः सुरगणपितृमुनिगणमहितं
पृथिवीसलिलानलपवनयज्ञाधिपतिस्सूर्यश्चन्द्रोव्योमाख्याः ।
अष्टौ मुनिभिर्यस्य सुतास्त्रैलोक्यगुरुं तमचिन्त्यमजं ।
विद्यानिलयं भैरवरूपं खट्वांगधरं
स्थित्युत्पत्तिप्रलयनिमित्तं सूक्ष्माक्षमचित्यञ्चन्द्रार्धधरम्
त्रिकलार्धधरं नेत्रार्द्धधरं मुञ्चार्धधरम् कान्तार्धधरम् ।
बहुलैर्विविधैर्विधूतैर्विकटैर्मुण्डैर्विमुखैर्विषमैः ।
प्रमथैः परिवृतमहमीशं सततं प्रणतः ॥ २०७ ॥
आसारितानां सर्वेषां त्रयो भेदाः प्रकीर्त्तिताः ।
यथाक्षरद्विसंख्येति त्रिसंख्यातमथापि च ॥ २०८ ॥
तालच्छेदद्विगुणितैः समवर्णैगुणैः कृतः ।
अनिवृताक्षरपदं यथाक्षरमिति स्मृतम् ॥ २०९ ॥
निवृत्त्या यत्समायुक्तं द्विसंख्यातं तदुच्यते ।
निवृत्तित्रयसपन्नं त्रिसंख्यातमितीष्यते ॥ २१० ॥
चतुष्कादौ चतुर्मात्रा यथोक्तगुरुलाघवः ।
यथायोगं कला कार्या गीतेष्वासारिते च ॥ २११ ॥
अक्षैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तथा ।
चित्रे कला भवेद्यातु वृत्ते सा द्विगुणा स्मृता ॥ २१२ ॥
वृत्तौ या वर्णमात्रा तु चतुर्मात्रा प्रकीर्त्तिता ।
द्विगुणा दक्षिणे या तु कला ज्ञेया प्रयोक्तृभिः ॥ २१३ ॥

न मार्गभेदोऽक्षरेषु कश्चिदप्युपपद्यते ।
वर्णमात्रा द्विगुणनात् वर्णभेदः प्रकीर्त्तितः ॥ २१४ ॥
यथाक्षरेषु भूयिष्ठं गीतेष्वारितेषु च ।
विधिरेष समुद्दिष्टो वर्णतालसमाश्रयः ॥ २१५ ॥
द्विसंख्याते निवृत्तिस्तु कार्या चार्द्धवियोगतः ।
द्विसंख्यातकयोगेन त्रिसंख्यातेऽपि चेष्यते ॥ २१६ ॥
न च वृत्तौ त्रिसंख्यातं कदाचिदपि योजयेत् ।
न च वृत्तौ त्रिसंख्यातं गीतेष्वासारितेषु च ॥ २१७॥
दक्षिणे स्यात् त्रिसंख्यातं द्विसंख्यातश्च वार्त्तिके ।
चित्रो यथाक्षरं प्रोक्तं एषां मार्गविनिश्चयः ॥ २१८ ॥
दक्षिणेन तु गीतादौ निवृत्तौ वृत्तिवद्व्रजेत् ।
चित्रवच्च यथान्यायं त्रिसंख्याते विधिः स्मृतः ॥ २१९ ॥
अनेनैव विधानेन द्विसंख्यातमपीष्यते ।
वृत्तौ वा दक्षिणे वापि प्रयोगोऽस्यैव चेष्यते ॥ २२० ॥
वस्त्वादौ वस्तुमध्ये च वस्त्वन्ते वा निवृत्तयः ।
प्रयोक्तव्या प्रयोगज्ञैर्विचार्याङ्गबलाबलम् ॥ २२१ ॥
निवृत्तौ तु कला न्यूना यदा वस्तु वद्भवेत् ।
आ कलापतनात्त्वस्या वर्णः कार्यो निवृत्तिमान् ॥ २२२ ॥
वर्णालङ्कारसौभाग्यं विच्छेदकरणस्य च ।
तत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम् ॥ २२३ ॥
वर्णतालाक्षराणां च संयोगोऽयं मया स्मृतः ।
आसारितेषु गीतेषु वर्धमानेषु चैव हि ॥ २२४ ॥
आसारितानां संयोगो वर्धमानक इष्यते ।
उत्पत्तिं लक्षणञ्चास्य गदतो मे निबोधत ॥ २२५ ॥
निहत्य दारुणं घोरं रुद्रेणामिततेजसा ।
नृत्तमुत्पादितं पूर्वं चित्रताण्डवसंज्ञितम् ॥ २२६ ॥
अथ भूतगणैः सर्वैस्तस्मिन् काले महात्मभिः ।
वर्धमानमिदं सृष्टं पिण्डीबन्धैर्विभूषितम् ॥ २२७ ॥

परितुष्टश्च तं दृष्ट्वा सपत्नीको वृषध्वजः ।
प्रददौ च वरं श्रेष्ठं सह देव्या महासुरः ॥ २२८ ॥
तल्लक्ष्यलक्षणयुतं मार्गयुक्तिविधिक्रमैः ।
वर्धमानं प्रयोक्तारो यास्यन्ति शिवगौरवम् ॥ २२९ ॥
एवमेव पुरा सृष्टं पिण्डीबन्धाय शम्भुना ।
अधुना सम्प्रवक्ष्यामि लक्षणं शृणुत द्विजाः ॥ २३० ॥
चतस्रः कण्टका ज्ञेया वर्धमाने प्रयोक्तृभिः ।
विशाला संमता चैव सुनन्दा सुमुखी तथा ॥ २३१ ॥
ततः पूर्वा नवकला द्वितीयाष्टकला स्मृता ।
तृतीया षोडशकला द्वात्रिंशच्च तथोत्तरा ॥ २३२ ॥
शम्यातालस्तथा शम्या पुनस्ताला यथाक्रमम् ।
त्रिकलः सन्निपातश्च विशालायाः प्रकीर्त्तितः ॥ २३३ ॥
चच्चत्पुटस्तु द्विकलः सङ्गतायाः प्रकीर्तितः ।
उपोहनविधिस्तासामधुना तु मयोच्यते ॥ २३४ ॥
उपोहनं विशालायाः कलापञ्चकमेव हि ।
षट्कलाः सङ्गतायाश्च सुनन्दायाश्च सप्तकम् ॥ २३५ ॥
सुमुख्याश्चोपवहनं नित्यमष्टकलं भवेत् ।
एतेषाञ्चैव वक्ष्यामि गुरुलघ्वक्षरक्रमम् ॥ २३६ ॥
आदौ गुरुद्वयं कार्यं चतुर्दश लघून्यपि ।
उपोहनं विशालायाः पुनरन्ते विधिः स्मृतः ॥ २३७ ॥
चतुर्भिरधिकर्ह्रस्वैर्गुरुत्रयसमान्वितम् ।
सङ्गतायाभिमुनिभिरुपोहनमिति स्मृतम् ॥ २३८ ॥
चतुर्भिरधिकैरेवं लघुभिर्गुरुसंयुतम् ।
सुनन्दयोश्च विज्ञेय उपोहनविधिर्बुधैः ॥ २३९ ॥
अष्टाविंशल्लघूनि स्युः सुमुख्याश्च गुरुत्रयम् ।
उपोहनविधाने तु ज्ञेयं तु द्विजसत्तमाः ॥ २४० ॥
उपोह्यन्ते स्वरा यस्मात् तस्माद् गीतं प्रवर्त्तते ।
तस्मादुपोहनं ज्ञेयं स्थायिस्वरसमाश्रयम् ॥ २४१ ॥

अथवोपोह्यते यस्मात्प्रयोगः सूचनादिभिः ।
तस्मादुपोहनं ह्येतद्गानाभाण्डसमाश्रयम् ॥ २४२ ॥
शम्यातालौ द्विरभ्यस्तौ सन्निपातान्त्य एव च ।
उपोहने विशालायास्तालोऽयं परिकीर्त्तितः ॥ २४३ ॥
द्विकलः संगतायास्तु तालश्चापुटः स्मृतः ।
तस्यैव सन्निपातोऽन्त्ये सुनन्दायास्तथैव च ॥
चञ्चत्पुटस्तु द्विकलः सुमुख्यां स्यादुपोहने ॥ २४४ ॥
उपोहने द्विरभ्यस्तैस्ततः कार्या तु कण्डिका ।
एतान्युपोहनानीह चत्वारि गदितानि तु ॥ २४५ ॥
आनुपूर्व्या प्रयोगश्च कण्डिकानां निबोधत ।
पूर्वं विशाला कर्त्तव्या बालतालप्रयोजिता ॥
अन्तिमात्रकलोपेता बलमासारितन्तु तत् ॥ २४६ ॥
सङ्गताया गृहं गत्वा विशाला सकला यदि ।
युज्यते पूर्वताले तु तदा स्यात्तल्लयान्तरम् ॥ २४७ ॥
सुनन्दा च ततः कार्या सङ्गता पुनरेव हि ।
विशालाञ्च पुनश्चैव समुखीं च प्रयोजयेत् ॥ २४८ ॥
सुमुखी च सुनन्दा च सङ्गता पुनरिष्यते ।
विशालायाः समाप्तिस्तु ज्ञेया अथ निवृत्तयः ॥ २४९ ॥
वर्धमानस्य तालोऽयं कर्णिकायाः पृथक् पृथक् ।
मया प्रोक्तं पुनश्चैव संयुक्तानां निबोधत ॥ २५० ॥
प्रथमं कण्डिकां कृत्वा बालतालप्रयोजिताम् ।
अर्धिमार्धकलाहीनं बालमासारिन्तु तत् ॥ २५१ ॥
द्वितीयां कर्णिकां कृत्वा प्रथमं सकला यदि ।
पूज्यते पूर्वतालेन यदा यत्तल्लयान्तरम् ॥ २५२ ॥
कनिष्ठासारिते कालो यो मया परिकीर्त्तितः ।
वर्धमानां तदा चित्रैर्न विवृत्तेन योजयेत् ॥ २५३ ॥
स हि वर्धमाने वा कनिष्टं नहि दक्षिणे ।
द्विगुणाक्षरसंयोगात् अन्यमाश्च(?) प्रयोजनम् ॥ २५४ ॥

वृत्तकालविशेषाच्च बालताललयान्तरम् ।
कनिष्ठासारिते तालो यो मया परिकीर्त्तितः ॥ २५५ ॥
स एव सर्वः कर्त्तव्यः प्रथमे कण्डिकाद्वये ।
तृतीया सद्वितीया च प्रथमा चैव तद्भवेत् ॥ २५६ ॥
द्विकलं योगमाश्रित्य मध्यमासारितं तथा ॥
मध्यमासारिते तालो यो मया परिकीर्त्तितः ।
सोऽन्यत्र यस्य कर्त्तव्यः सुनन्दां न्यस्य योक्तृभिः ॥ २५७ ॥
चतुर्थमादितः कृत्वा चतस्रः कण्डिका यदा ।
चतुष्कयोगमाश्रित्य ज्येष्ठमासारितं तथा ॥ २५८ ॥
ज्येष्ठत्वं सारिते तालो निःशब्दः शब्दवांस्तथा ।
स एव सर्वः कर्त्तव्यो बुधैश्चतसृणामपि ॥ २५९ ॥
संयोगे कण्डिकालोपः····परिकीर्त्तितः ।
प्रयोगस्तु यथा त्वेषां पिण्डबन्धैर्विकल्प्यते ॥ २६० ॥
प्रत्येकं ह्यङ्गविन्यासः सर्वेषां च पृथक् पृथक् ।
बालं नवकलं ज्ञेयं दशसप्तलयान्तरम् ॥ २६१ ॥
पञ्चषष्ठकलं ज्येष्ठं त्रयस्त्रिंशच्च मध्यमम् ।
एतत्तालविधानं तु सर्वेष्वासरितेषु च ॥ २६२ ॥
एवमासारिते बद्धं वर्धमानकमुच्यते ।
वर्धताललया ग्रन्थवाद्याभिनयवर्धनात् ॥
पत्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ॥ २६३ ॥
वर्धमानशरीरस्य भवेदासारितस्य च ।
कार्यकारणभावेन परस्परविकल्पना ॥ २६४ ॥
आसारितेषु सर्वेषु वर्द्धमानेषु चैव हि ।
द्विगुणास्तालयोगेन कार्यः सस्वरजो विधिः ॥ २६५ ॥
समासावन्तरहितः सन्निपातो यदा भवेत् ।
अन्त्या कला द्विमात्रा तु तदा कार्या प्रयोक्तृभिः ॥ २६६ ॥
एवमेतन्मया प्रोक्तं वर्धमानकलक्षणम् ।
अत ऊर्ध्वं प्रवक्ष्यामि गीतकानां तु लक्षणम् ॥ २६७ ॥

सर्वेषामेव गीतानां वस्तुष्ववयवेषु च ।
विविधैकैकवृत्तानि त्रीण्यङ्गानि भवन्ति हि ॥ २६८ ॥
एकतन्तुविदार्येका द्वे चापि विविधैःस्मृतः ।
षट्परं त्र्यवरं वृत्तं विदार्यः परिकीर्त्तिताः ॥ २६९ ॥
पदवर्णसमाप्तस्तु विदारीत्यभिसंज्ञिता ।
न्यासापन्याससमंशान्तं वस्तु तत्परिकीर्त्तितम् ॥ २७० ॥
विदारयन्ति यस्माद्धि परमध्यस्वरो यदा ।
तदा विदारी विज्ञेया गुरुवर्णानुकारिणी ॥ २७१ ॥
विविधैककयोः प्रायो मद्रके तु प्रयोजनम् ।
प्रकुर्याच्चापि वस्त्वर्धे पादे रोविन्दकस्य च ॥ २७२ ॥
रोविन्दतोत्तराभ्यां तु वृत्तमुल्लाप्यकस्य हि ।
पाणिकायां बहिर्गीते लास्ये चैव प्रकीर्त्तिते ॥ २७३ ॥
प्रवृत्तमवगाढं च द्विविधं वृत्तमुच्यते ।
आरोहित्वात्वगाढं तु प्रवृत्तमपरोहि च ॥ २७४ ॥
आरोहणं तु द्विविधं तथा चैवावरोहणम् ।
न्यासापन्यासविहितं मार्गान्तरकृतं तथा ॥ २७५ ॥
त्र्यवरैकादशपराः विदार्यः परिकीर्त्तिताः ।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम् ॥ २७६ ॥
अध्यर्धा च तृतीया च सन्निपातप्रमाणतः ।
उल्लोल्यते विदारी तु स्मृता वैहायसं तथा ॥ २७७ ॥
विविधेन च ताः कार्या युग्मवृत्तेषु चैव हि ।
नह्यर्धे सन्निपातस्य भवेदङ्गसमापनम् ॥ २७८ ॥
विवधस्त्रिविधो ज्ञेयः कीर्त्यमानान्निबोधत ।
सामुद्रश्च समुद्रोऽपि विवृत्तश्चेति कीर्त्तितः ॥ २७९ ॥
न्यासतोऽपि विधौ ज्ञेयो मुक्त्वा वै गेयकं सदा ।
आद्या तु मद्रके चैव सामुद्रः परिकीर्त्तितः ॥ २८० ॥
लघुवर्णसमं गेयं सामुद्रे तु विधीयते ।
तत्वन्ते च तृतीये च तद्वै गेयकसंज्ञितः ॥ २८१ ॥

विदार्यङ्गसमोऽर्धं स्यात् अर्धं विसदृशं यथा ।
योगे तु अर्ध सामुद्रस्तथा ज्ञेयः प्रयोक्तृभिः ॥ २८२ ॥
विदारी विषमा ज्ञेया न्यासापन्यास एव च ।
असंप्रयोगबाहुल्यं विवृत्तं परिकीर्त्तितम् ॥ २८३ ॥
द्विविधश्चैकतो वापि विज्ञेयं तु यथाक्रमम् ।
न्यासापन्यासमंशान्तं सदा ज्ञेयं प्रयोक्तृभिः ॥ २८४ ॥
सन्यासश्चैव विन्यासो ह्यङ्गमध्यो यथाक्रमम् ।
विन्यासः स तु विज्ञेयो विदारीमध्यमस्थितः ॥ २८५ ॥
विदारीवज्रविन्यासः पदान्ते क्वचिदेव हि ।
न तद् बाहुल्यमुद्दिष्टं प्रयोगस्य प्रयोक्तृभिः ॥ २८६ ॥
ज्ञेयानि सप्तगीतानि मन्द्रकोऽथोऽपरान्ततः ।
प्रतर्यो वेणको विद्याद् ह्युल्लोप्युश्चोत्तरं तथा ॥ २८७ ॥
द्विविधं मन्द्रकं तत्र चतुर्वस्तु त्रिवस्तु च ।
शीर्षकेण समायुक्तं तत्तु ज्ञेयं त्रिवस्तुकम् ॥ २८८ ॥
पञ्च षट् सप्त वापि स्युः शीर्षकञ्चापरान्तके ।
प्रकर्यामथ चत्वारि स्युस्त्रीण्यर्धाधिकानि वा ॥ २८९ ॥
रोविन्दकस्तु सप्ताङ्गे षोडशाङ्गं परं स्मृतम् ।
द्वौ पादौ समवर्णेन एकैकस्तत्र कीर्त्तितः ॥ २९० ॥
प्रवृत्तं विविधञ्चापि तस्य त्वादौ प्रयोजयेत् ।
ततो देहं ततोऽङ्गानि यथायोगं निवेशयेत् ॥ २९१ ॥
आकारश्चास्य मध्ये स्यात् आकारश्चान्ततः स्मृतः ।
अविकल्पकमन्ते ऽस्य शीर्षकं संप्रयोजयेत् ॥ २९२ ॥
सप्ताङ्गं द्वादशाङ्गं वा प्रोक्तमावेणकं बुधैः ।
तत्र द्व्यङ्गं तु सप्ताङ्गं त्र्यङ्गं द्वादशकं स्मृतम् ॥ २९३ ॥
प्रस्तारसन्धिमाषोस्थोवज्रसंविष्टकं तथा ।
शीर्षकं चतुरस्रञ्च तथा चैवोपवर्त्तनम् ॥ २९४ ॥
उपपातः प्रवेणी च द्व्यङ्गं संहरणं तथा ।

१ ह्यन्तं—ख ।   २ ऽयन्तं—ख ।

अङ्गानि द्वादशाङ्गस्य स्मृतान्यावेणकस्य तु ॥ २९५ ॥
संविष्टकोपपाताभ्यां प्रवेण्या पारवर्जितम् ।
उपवर्त्तविहीनञ्च सप्ताङ्गमपि कीर्त्तितम् ॥ २९६ ॥
विवर्तनं तु सप्ताङ्गं तुल्यवर्णपदं स्मृतम् ।
अनयोर्द्वादशाङ्गे तु यथान्यपदमिष्यते ॥ २९७ ॥
उल्लोप्यकेऽपि चाङ्गानां एष एव विधिः स्मृतः ।
सितं प्रवृत्तञ्च तथा महाजनि मेव च ॥
त्र्यङ्गान्तरःस्यात्तथा ह्यङ्गो महाजानिकवार्जितः ॥ २९८ ॥
स्थितप्रवृत्तसंयोगादेकाङ्गं चापि कीर्त्यते ।
एकाङ्गे संविधातव्यं महाजानिकमेव च ॥ २९९ ॥
ह्यङ्गं सितं प्रवृत्तं वाप्येककाङ्गं प्रकीर्त्तितम् ।
आवेणकस्य संहारो ह्यङ्गेऽप्येकाङ्ग एव वा ॥ ३०० ॥
एकैको विवधो वापि कार्योऽप्यङ्गैर्बुधैः सदा ।
उल्लोप्यकं षडवरं विंशत्यङ्गपरं स्मृतम् ॥ ३०१ ॥
तत्र संहरणं ज्ञेयं मुखप्रातिमुखान्वितम् ।
एकाङ्गं षट्परं ज्ञेयं वैहायसिकमेव तु ॥ ३०२ ॥
उल्लाप्यकोत्तराभ्यां तु मुखप्रतिमुखं स्मृतम् ।
ततोऽङ्गानां समासो वा विस्तारो वा विधीयते ॥ ३०३ ॥
मुखप्रतिमुखे वापि ज्ञेये विवधसंज्ञिते ।
वृत्तं प्रतिमुखे च स्यात अनयोस्तु समासतः ॥ ३०४ ॥
उल्लोप्यके तु शाखाख्यं सोत्तरे सांपरान्तरे ।
प्रतिशाखा तथा चैषां समवर्णपदा स्मृता ॥ ३०५ ॥
उत्तरं द्वादशपरं षडङ्गावरमिष्यते ।
आकारवादहीनेन सह रोविन्दकेन तु ॥ ३०६ ॥
अन्ते चास्याविशेषेण स्थाप्येमध्ये च शीर्षकम् ।
एवमङ्गविधिः कार्यः सप्तरूपे प्रयोक्तृभिः ॥ ३०७ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकल्पनम् ।
कलाः षोडश विज्ञेया मात्राः सर्वेष्ववस्तुषु ॥ ३०८ ॥

तस्याश्चैव चतुर्भागः पादभागः प्रकीर्त्तितः ।
आदौ गुर्वक्षरं कृत्वा न्यसेल्लध्वष्टकं तथा ॥ ३०९ ॥
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये ।
गुर्वक्षरे तृतीये तु ततः स्यात् प्रत्युपोहनम् ॥ ३१० ॥
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चके ।
षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेऽष्टमे ॥ ३११ ॥
ततोऽर्धकलितान् पादान् कुर्याल्लध्वक्षरेषु तु ।
गुर्वक्षरे तालगीते पादास्तु कलिताः स्मृताः ॥ ३१२ ॥
शम्यातालौ तालशम्ये कुर्याद् द्वे वान्न(नु ?)पूर्वशः ।
तालं शम्याञ्च तालञ्च सन्निपातं तथैव च ॥ ३१३ ॥
शीर्षकञ्चास्य कर्त्तव्यं बुधैश्चापपुटेन तु ।
एवमेककलो ज्ञेयस्तालयोगस्तु मन्द्रके ॥ ३१४ ॥
गुरुविश्लेषपादेन[1] द्विकलं परिचक्षते ।
विश्लेषणे कलाश्चात्र यथापूर्वं निवेशयेत् ॥ ३१५ ॥
द्विकले मन्द्रके चैव त्रिकलं स्यादुपोहनम् ।
कलिका द्विकलं चापि भवेच्च प्रत्युपोहनम् ॥ ३१६ ॥
द्विकलैर्गुवक्षरकृतैः पादभागैर्यथाक्रमम् ।
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तु संज्ञितम् ॥ ३१७ ॥
त्रिवस्तु द्विकलं ज्ञेयं पादे पादविधिस्त्वयम् ।
गुर्वक्षरे ये पाताः शम्यातालादयः स्मृताः ॥ ३१८ ॥
तानेव पादभागेषु द्विकलेऽथ प्रयोजयेत् ।
अष्टमी षोडशी शम्या दशमी च यथाक्रमम् ॥ ३१९ ॥
चतुर्दश्यां कलायां तु तालं न द्वादशीयुतम् ।
लघ्वक्षरे पादविधिर्यथापूर्वं प्रकीर्त्तितम् ॥ ३२० ॥
वस्तुत्रयेऽपि द्विकले चैवं पातान् प्रयोजयेत् ।
शीर्षकञ्चैव कर्त्तव्यं षट्कलं पञ्चपाणिना ॥ ३२१ ॥
चतुष्कलं प्रवक्ष्यामि यथावद्द्विजसत्तमाः ।
चतुष्कलैः पादभागैर्यथापूर्वमुदाहृतैः ॥ ३२२ ॥

१ गुरुर्विंशषणादेत्—क ।

चतुर्भिस्तु भवेन्मात्रा त्रिमात्रः स तु संज्ञितः ।
पातांश्चैवं प्रवक्ष्यामि पादभागे यथाक्रमम् ॥ ३२३ ॥
चतुर्थे पञ्चमेऽन्त्ये च शम्या कार्याऽष्टमे तथा ।
दशमेकादशं शम्या द्वितीया नवमे स्मृता ॥ ३२४ ॥
षष्ठे च सप्तमे ताल अन्ते च नवमेऽस्य हि ।
नवमैकादशे चैव द्वितीयः समुदाहृतः ॥ ३२५ ॥
आद्ये तु द्वादशं प्रोक्तं सन्निपातोऽवसानतः ।
एवं पातविधानं स्यात् सर्वं वस्तु प्रयोजयेत् ॥ ३२६ ॥
प्रथमे वस्तुके ह्यादौ कलाष्टकमुपोहनम् ।
प्रत्युपोहनमित्युक्तं द्वितीयं द्विकलंभवेत् ॥ ३२७ ॥
तृतीयं त्रिकलं ज्ञेयं चतुर्थे तु चतुष्कलम् ।
अस्यान्ते शीर्षकं कार्यं षट्पितापुत्रकेन तु ॥ ३२८ ॥
द्विकले तु यथापातं पञ्चपाणि चतुष्टये ।
द्विकेयकं(?) तृतीये चं चतुर्थे च यथाक्रमम् ॥ ३२९ ॥
परिवर्त्तसमाप्तिस्तु चतुर्थे सा विधीयते ।
मन्द्रांशोपहनं वस्तु प्रथमं च द्वितीयकम् ॥ ३३० ॥
चतुर्थस्तु त्रिप्रमाणं त्र्यस्रतालसमुद्भवम् ।
इत्युक्तं मन्द्रकं पातैस्त्रयोदशभिरन्वितम् ॥ ३३१ ॥
गुर्वक्षराणि चत्वारि चत्वारि स्युर्लघूनि च ।
द्वितीये गुरुके शम्या तृतीये ताल एव च ॥ ३३२ ॥
लघ्वक्षरेऽष्टकमितान् पातानेतान् प्रयोजयेत् ।
तालः शम्या च तालश्च सन्निपातोऽन्त्य एव च ॥ ३३३ ॥
त्र्यस्रतालसमुद्भूतं विज्ञेयमवरान्तरम् ।
गुर्वक्षराणि विश्लिष्य विकलं सम्प्रयोजयेत् ॥ ३३४ ॥
पादभागैस्तथा षड्भिः द्विकलं च चतुष्कलम् ।
..................शम्यातालषष्ठो यथाक्रमम् ॥ ३३५ ॥
पूर्ववत् पातविन्यासः षष्ठपञ्चमयोः स्मृतः ।
आवापक्षेपयुतं पातैरेभिश्चतुष्कलम् ॥ ३३६ ॥

---

१ ०पधा०-क ।

चतुष्कलैः पादभागैः षड्भिस्तु समलंकृतम् ।
वस्तुसंख्यश्च षट्पञ्चसप्तमान् सम्प्रयोजयेत् ॥ ३३७ ॥
द्वितीये पञ्चमे ऽन्त्ये च द्वे शम्ये समुदाहृते ।
तृतीये तु भवेदन्त्यं द्वितीये पञ्चमे स्मृतः ॥ ३३८ ॥
आदौ षष्ठे तु तालः स्यात् सन्निपातस्ततोऽन्तिमः ।
पूर्ववस्तुसमुद्दिष्टाः पाता ह्येते श्चतुष्कले ॥ ३३९ ॥
..............योगो गदितः स्वापरान्तके ।
यथा शाखा तथैवास्य प्रतिशाखा विधीयते ३४० ॥
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता ।
शिरश्चैककलेनास्य कर्तव्यं पञ्चपाणिना ॥ ३४१ ॥
यथाक्षरे तु भवेदनयोरुपवर्त्तनम् ।
उपोहनं तु वस्त्वर्धे द्विकलं प्रत्युपोहनम् ॥ ३४२ ॥
द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम् ।
न चात्रोपोहनं कार्यं शेषाणां तु कदाचन ॥ ३४३ ॥
एवं चतुष्कले योगो मया प्रोक्तो परान्तके ।
उल्लोप्यकं तु द्विगुरु द्विलघ्वन्ते गुरु स्मृतम् ॥ ३४४ ॥
शम्यातालौ द्विरभ्यस्तौ सन्निपातोऽन्त्य एव च ॥
प्रत्यक्षरकृतैः पातैः पञ्चभिः समलङ्कृतम् ।
चतुरस्रं समश्चेदं वस्तु ज्ञेयं यथाक्षरम् ॥ ३४५ ॥
पूर्वोक्तेन विधानेन द्विचतुष्कलमिष्यते ।
अन्ते चाङ्गत्रयातीते वैहायसिकमिष्यते ॥ ३४६ ॥
तदेकाङ्गपरं ज्ञेयं द्वादशाङ्गपरं तथा ।
प्रमाणं द्वादशकलं सप्तपातमथापि च ॥
अस्य तु द्विकला शम्या तालश्च द्विकलः स्मृतः ॥ ३४७ ॥
द्विकला च पुनः शम्या तालश्च द्विकलस्तथा ।
ततः शाम्या ततस्तालः सन्निपातमतः परम् ॥ ३४८ ॥
शाखेयं प्रतिशाखे तु नित्यमन्यपदा स्मृता ।
पदा त्वस्य भवेदन्त्ये तदन्ताहरणं बुधैः ॥ ३४९ ॥

यथाक्षरेण कर्त्तव्यं संहार्यः पञ्चपाणिना ।
स्वतालेनान्तहीनस्य संहार्यः परिवर्त्यते ॥ ३५० ॥
द्विप्रकारनिवृत्तश्च त्र्यङ्गोऽन्तस्त्रिविधः स्मृतः ।
त्र्यस्रश्च चतुरस्रश्च मिश्रश्च द्विविधः स्मृतः ॥ ३५१ ॥
स्थितः पृथिव्या तस्याङ्गे माहाजनिक एव च ।
स्यात् पञ्चपाणितालेन तदन्ताहरणं तथा ॥ ३५२ ॥
तथास्थितं भवेद्युग्मं प्रथमस्य विधिस्त्वयम् ।
शम्या तु द्विकला कार्या तालश्च द्विकलः स्मृतः ॥ ३५३ ॥
चतुष्कलः सन्निपातः प्रवृत्तमत इष्यते ।
तस्यापि द्विकला शम्या तालश्चैककलः पुनः ॥ ३५४ ॥
चञ्चत्पुटस्य तालादिः सन्निपातस्ततः परम् ।
स्थिततालो न कर्त्तव्यो महाजनिकमस्य तु ॥ ४५५ ॥
निवृत्ततालः कर्त्तव्यो निवृत्तस्यापि तत्त्वतः ।
स्थितमाहाजनिकयोः प्रायः शस्त्रप्रवर्त्तनम् ॥ ३५६ ॥
आदावुद्धट्टकः कार्यः परिवर्त्तक एव च ।
युग्मे तु मिश्रतालस्त्वायुग्मोऽप्यन्तः प्रयुज्यते ॥ ३५७ ॥
विविधैकैकसंयुक्तः सर्वश्चान्तविधिः स्मृतः ।
यथावदन्ततालोऽयं युग्मे मिश्रे च कीर्त्तितः ॥ ३५८ ॥
अतः परं प्रवक्ष्यामि त्र्यस्रमन्तविधिं पुनः ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥ ३५९ ॥
त्रिकलः सन्निपातश्च प्रवृत्तश्चाप्यतः परम् ।
अतः परं प्रवक्ष्यामि त्र्यस्रमन्तविधिं पुनः ॥ ३६० ॥
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ।
प्रवृत्तमत्र कर्त्तव्यं यथावत् परिवर्त्तनम् ॥ ३६१ ॥
यथाक्षरप्रयुक्तेन समासात् पञ्चपाणिना ।
अन्यापि स्थिततालेन महाजनिकमिष्यते ॥ ३६२ ॥
प्रवृत्तः कालः कर्त्तव्यः तथास्यान्तनिवर्त्तिते ।
द्व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ॥ ३६३ ॥

तत्र युग्मं भवेद्‌घ्यङ्गं त्र्यस्रमेकाङ्गमिष्यते ।
प्रवृत्तमपि विज्ञेयं द्व्यङ्गमेकाङ्गमेव वा ॥ ३६४ ॥
माहाजनिकमेकाङ्गं द्व्यङ्गं संहरणं स्मृतम् ।
स्थितादिकः प्रवृत्तान्तमेवमन्तं विदुर्बुधाः ॥ ३६५ ॥
उल्लोप्यके सदा योज्यमूहापोहविशारदैः ।
यस्तु प्रयोगः कर्त्तव्यः प्रकुर्याद् द्विचतुष्कलम् ॥ ३६६ ॥
न यताक्षरयोगोऽत्र न चात्र द्विकलो भवेत् ।
अद्य मात्रात्रयस्यान्ते शम्यातालौ प्रकीर्त्तितौ ॥ ३६७ ॥
षण्मात्रं पातसंयुक्तं वस्तु कार्यं यथाक्रमम् ।
उपोहनं तु वस्त्वर्धे प्रथमे च द्विजोत्तमाः ॥ ३६८ ॥
शम्या अस्य तु मात्रा स्याद् द्वितीया तालसंयुता ।
मात्रा त्रयस्य चान्त्या स्यात् शम्यैका च पुनस्तथा ॥ ३६९ ॥
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां श्चाष्टमः स्मृतः ।
षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत् ॥ ३७० ॥
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ।
शम्यातालश्च तालश्च शम्यातालस्तथैव च ॥ ३७१ ॥
शम्यातालः सन्निपातः इति वस्तु प्रकीर्त्यते ।
यदा त्वर्धचतुर्थानि वस्तूनि प्रकरीभवेत् ॥ ३७२ ॥
पश्चिमार्धपदस्यैतत्तदार्धं प्राङ्निवेशयेत् ।
कनिष्ठासारितेनास्य तालः संवरणे मतः ॥ ३७३ ॥
पादः पूर्वसमः कार्यस्त्वपरान्तक शाखया ।
आवेणको द्विती यस्य तस्य च प्रतिशाखया ॥ ३७४ ॥
स एव पातविन्यासो माषघातमतः परम् ।
षट्पातो द्वादशकलः तस्य पातविधिस्त्वयम् ॥ ३७५ ॥
कर्तव्या द्विकला शम्या गम्या च द्विकला पुनः ।
ततश्चैककलस्तालः सन्निपातः कलात्रये ॥ ३७६ ॥
प्रायेण माषघातस्तु विविधाङ्गः प्रकीर्त्तितः ।
सन्धिश्चैव हि तस्यान्ते कदाचिदुपवर्त्तनम् ॥ ३७७ ॥

सन्धिर्यथाक्षरेणेव कर्त्तव्यः पञ्चपाणिना ।
एकैकं विविधो नापि तस्याङ्गे समुदाहृते ॥ ३७८ ॥
उपवर्तनवच्चास्य पृथग्विधिरिति स्मृतः ।
अन्तस्य चतुरस्रस्य प्रवृत्ते यो विधिः स्मृतः ॥ ३७९ ॥
विधिनानेन तेनैव चतुरस्रकमिष्यते ।
सन्धिवत् वज्रकालस्य द्विधा संविष्टकं स्मृतम् ॥ ३८० ॥
सप्ताङ्गैर्द्वादशकलं द्वादशाङ्गैर्दशैव तु ।
निष्क्राममादितः कृत्वा शम्यास्तृस्नः प्रयोजयेत् ॥ ३८१ ॥
तालस्तत्र ततश्चैव शम्यातालस्ततः परम् ।
शम्यातालौ ततः कार्यौ सन्निपातोऽन्त्य एव च ॥ ३८२ ॥
आवेणके तु सप्ताङ्गे संविष्टकमिति स्मृतम् ।
द्विशम्यातालयोगेन द्वादशांगेपि चेष्यते ॥ ३८३ ॥
पाता नवैकदश वा संविष्टकमुदाहृतम् ।
वज्रवत् संप्रयोक्तव्यं उपवर्त्तनमेव च ॥ ३८४ ॥
युक्ता विविधवृत्ताभ्यां प्रवेणी विविधा स्मृता ।
पञ्चपाणिः प्रकर्त्तव्यः प्रवेण्या तु यथाक्षरम् ॥ ३८५ ॥
द्विकलो वापि मिश्रो वा प्रयोगोऽङ्गवशानुगः ।
अङ्गं चास्य प्रकर्त्तव्यं कदाचिदुपवर्त्तनम् ॥ ३८६ ॥
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ।
द्वितीयातालपातेन ह्यपपातश्च कीर्त्यते ॥ ३८७ ॥
वज्रतालेन कर्त्तव्यं अन्ताहरणमस्य तु ।
रोविन्दके तु षण्मात्राः पादभागैश्चतुष्कलैः ॥ ३८८ ॥
अर्धेऽन्ते चैव मात्राणां पञ्चानां पात इष्यते ।
तालशम्या च तालश्च शम्यातालस्तथैव च ॥ ३८९ ॥
अन्ते शम्या तथा चैव सर्वासामपि कीर्त्तिता ।
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् ॥ ३९० ॥
चतुर्दशस्तु पञ्चम्या मात्रायां ताल इष्यते ।
चतुष्कला तु तत्तुल्या षष्ठमन्द्रकमात्रया ॥ ३९१ ॥

तथा चाष्टौ कलाः कार्याः प्रथमायामुपोहनम् ।
ततश्चैव प्रयोक्तव्यः द्विकलः प्रत्युपोहनम् ॥ ३९२ ॥
पाताःस्युः सन्निपातान्ता विविधैककयोजिताः ।
वर्णानुकर्षोऽष्टकलः अन्ते प्रस्तार इष्यते ॥ ३९३ ॥
तुल्यवर्णोपवहनो द्वितीयः पाद इष्यते ।
शरीरतालः कर्त्तव्यः प्रस्तारोऽपि विशेषतः ॥ ३९४ ॥
द्विकलेनैव कर्त्तव्यो विशेषात् पञ्चपाणिना ।
कलाद्वादशनिर्दिष्टं प्रमाणञ्चास्य तत्त्वतः ॥ ३९५ ॥
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ।
विविधो वा प्रवृत्तं वा तस्यादौ परिकीर्त्यते ॥ ३९६ ॥
आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ।
तस्योपरि यथेष्टं स्यात् अधस्तादङ्गयोजनम् ॥ ३९७ ॥
अविशेषनिवृत्तन्तु शीर्षकं तु प्रयोजयेत् ।
यथाक्षरेण तच्चैव कर्त्तव्यं पञ्चपाणिना ॥ ३९८ ॥
आदावेकैकमन्तस्य प्रवृत्तो नियमो भवेत् ।
इति रोविन्दकः प्रोक्तः स्यादुत्तरमतः परम् ॥ ३९९ ॥
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम् ।
अस्येदमुत्तरस्याथ मुखं प्रतिमुखं भवेत् ॥ ४०० ॥
उल्लाप्यकपदस्यादौ मात्रा चैका चतुष्कला ।
रोविन्दकपदाकारगणवर्जः प्रयोजयेत् ॥ ४०१ ॥
शाखा षडङ्गा त्वपरा द्वादशाङ्गा परा स्मृता ।
षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः ॥ ४०२ ॥
तस्यास्तु द्विकलस्तालः शम्या चैककला भवेत् ।
तथा च द्विकलस्तालः शम्या च द्विकला ततः ॥ ४०३ ॥
पुनश्चैककलस्तालः सन्निपातः कलात्रये ।
शाखावत प्रतिशाखा च भवेदन्यपदा तु सा ॥ ४०४ ॥
अविशेषानिवृत्तस्याप्यस्यान्ते नियमो भवेत् ।
शीर्षकञ्चैव कर्त्तव्यं अस्यान्ते पञ्चपाणिना ॥ ४०५ ॥

पञ्चपाणिविधानेन प्रतिशाखा ततः परम् ।
द्विकलः पञ्चपाणिस्तु पूर्वपाकैर्यथाक्रमम् ॥ ४०६ ॥
तालोऽयं दक्षिणे मार्गे सप्तरूपस्य कीर्त्तितः ।
य एव दक्षिणे कालः स वृत्तावपि चेष्यते ॥ ४०७ ॥
चित्रेणैव हि सर्वत्र विशेषो यत्र नोच्यते ।
अर्थयोगादेष एव नृत्ततालविधिर्भवेत् ॥ ४०८ ॥
उल्लोप्यकोत्तरमुखे हित्वा युग्मं तथैककम् ।
अर्थयोगस्तु तत्काले द्विकलः सम्प्रकीर्त्यते ॥ ४०९ ॥
चतुष्कलः स्याद् द्विकलो द्वितीयश्च तथाक्षरः ।
रोविन्दकोल्लोप्यकयोर्मन्द्रकोत्तरयोस्तथा ॥ ४१० ॥
शरीरेषु विधिर्ह्येष शेषेषु प्रकृतिर्भवेत् ।
प्रकृतावपि तेषां स्यात् विकलेन चतुष्कलम् ॥ ४११ ॥
कालेनैव भवेद्वृत्तावर्धयोगश्चतुष्कले ।
वार्त्तश्चतुष्कलो योगो दक्षिणे स्यात् कदाचन ॥ ४१२ ॥
मन्द्रकोल्लोप्यकयोर्मुखोपवहनेषु च ।
यो दक्षिणे तालविधिर्वृत्तौ स समुदाहृतः ॥ ४१३ ॥
चित्रैर्व्यस्ते समस्ते वा तावुभौ परिकीर्त्तितौ ।
शाखानिवृत्तमन्यत्र चित्रेऽत्र त्रयमार्गिकः ।
इति मार्गत्रये ह्येतत् सप्तरूपं प्रकीर्त्तितम् ॥ ४१४ ॥
द्विविधा प्रकृतिश्चास्य कुलकं छेद्यकं तथा।
एकार्थं कुलकं तत्र पृथक्छेद्यकमिष्यते ॥ ४१५ ॥
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च।
त्रिविधं चैव विज्ञेयं सप्तरूपं प्रयोक्तृभिः ॥ ४१६ ॥
बहिर्गीताङ्गशाखाभिर्युक्तं निर्युक्तमिष्यते ।
बहिर्गीताविहीनं तु पदनिर्युक्तमिष्यते ॥ ४१७ ॥
बहिर्गीतावहीनञ्चाप्यनिर्युक्तमिति स्मृतम् ।
इत्येतत्सप्तरूपस्य प्रकृतं द्विविधं स्मृतम्॥ ४१८॥
ब्रह्मोक्तं सप्तरूपं हि समवेताद् विनिःसृतम् ।

दैवताराधनं पुण्यमनन्तं गीतवादितम् ।। ४१९ ।।
सर्वेषामेवगीतानामन्तेषु च्छन्दकं स्मृतम् ।
चतुरङ्गं ततस्त्र्यङ्गं नवाङ्गं युग्ममेव च ।। ४२० ।।
ऋग्गाथापाणिकानां च प्रमाणानां तथैव च ।
अनेनैव विधानेन युग्मोजस्त्वं विभावयेत ।। ४२१ ।।
यो गणः पूर्वमुद्दिष्टस्तस्यादौ तु कला भवेत् ।
चतुर्मात्राकृताश्चैव कलाः समवधारयेत् ।। ४२२ ।।
अष्टाङ्गा वा षडङ्गा वा युग्मौ यौ वा प्रमाणतः ।
इति युक्ते तु कर्त्तव्या आन्तिकी चैव पाणिका ।। ४२३ ।।
चतुष्पादा तथैकाङ्गा द्व्यङ्गा त्र्यङ्गा विभावयेत् ।
अङ्गैर्व्यस्तैः समस्तैर्वा युग्मौ यौ वा प्रकीर्त्तितौ ।। ४२४ ।।
तस्य रूपस्य तालोऽयं मया हि परिकीर्त्तितः ।
चतुरस्रा तथा त्र्यस्रा ध्रुवा ज्ञेया प्रयोक्तृभिः ।। ४२५ ।।
तासां तालविधानं तु षट्प्रमाणं समासतः ।
अड्डिता चोत्थिता चैव चतुरस्रा प्रमाणतः ।। ४२६ ।।
चतुर्भिः सान्निपातैश्च ज्ञेया चञ्चत्पुटा स्मृता ।
सुप्रतिष्ठावसानानां सन्निपातेऽन्त इष्यते ।। ४२७ ।।
अपकृष्टा स्मृता त्र्यस्रा तथा चापपुटाश्रिता ।
चतुर्भिः सन्निपातैश्च युक्तो पादान्तमिश्रिते ।। ४२८ ।।
तथाकाशगृहस्तासां तावच्चच्चत्पुटः स्मृतः ।
बिलम्बिता च त्र्यस्रा च स एतद्द्वितयान्विता ।। ४२९ ।।
निष्कामादिप्रयुक्तेन योज्या चापपुटेन तु ।
पादान्ते सन्निपातस्य द्विकलेन यथाविधि ।। ४३० ।।
शीर्षकाणि च योज्यानि द्विविधं पञ्चपाणिना ।
चतुर्भिः सन्निपातैश्च सम्यक्पादान्तसंस्थितैः ।। ४३१ ।।
पादान्तस्यान्ततालस्य द्विमात्रान्तं प्रयोजयेत् ।
मात्राद्वयं च काले तु झंकारौ समतां नयेत् ।। ४३२ ।।
किञ्चिद्विनातिरिक्तायां मात्राभिर्यत्र चेत्कला ।

स्यात्समत्वं नयेत्तां तु क्षयवृद्ध्या प्रयोगवित ॥ ४३३ ॥
वर्णप्रकर्षेण च स्यात् तालानामपि वर्धनम् ।
स्यात् झंकारो नियुक्तानां अक्षरेच कलान्तरम् ॥ ४३४ ॥
कलातालप्रमाणेन यत्स्यात् शुष्ककुट्टनात् ।
तथा ध्रुवानां सर्वेषु कलातालौ प्रयोजयेत् ॥ ४३५ ॥
भङ्गतालश्च कर्त्तव्यो नत्कुटानां यथाविधि ।
कलापातेन संयुक्तस्तालश्चञ्चपुटो भवेत् ॥ ४३६ ॥
एष एव पुनस्त्यस्रः खञ्जखेलेति चेष्यते ।
पुनः प्रकृतयो ह्येष भङ्गस्त्वाक्रीडितो भवेत् ॥ ४३७ ॥
यान्यङ्गानि ध्रुवासु स्युर्ध्रुवास्वथ भवन्ति हि ।
तानि अष्टकयोगेन योजयेत् षट्कलेन वा ॥ ४३८ ॥
एवमेव मया तालो ध्रुवाणां परिकीर्तितः ।
चतुष्पादावसोन तु सम्प्रवक्ष्यामि लक्षणम् ॥ ४३९ ॥
यद्देव्यकुसुमावाद्यः शृङ्गाररससंश्रयः ।
वृत्तं विकल्पितं तस्य काललक्षणमुच्यते ॥ ४४० ॥
नारीप्रयोज्यं न ज्ञेयमाश्रितं तु चतुष्पदम् ।
त्र्यस्रा वा चतुरस्रा वा द्विविधा वा चतुष्पदा ॥ ४४१ ॥
एकस्या वा बहूनां वा द्वयोर्वा वाक्ययोजनात् ।
तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ॥ ४४२ ॥
प्रवृत्तसंज्ञा विज्ञेया तथा च स्थितसंश्रया ।
स्थितप्रवृत्तिसंज्ञा च त्रिविधा स्यात् पुनश्च सा ॥ ४४३ ॥
निष्क्रामश्चैव शम्या च तालशम्या तथैव च ।
ततोत्तमश्च निष्क्रामः सन्निपातस्तथान्तिमः ॥ ४४४ ॥
अष्टाविंशतिकल्पा तु बुधैर्ज्ञेया चतुष्पदा ।
तस्या विकल्पान् वक्ष्यामि यथावदनुपूर्वशः ॥ ४४५ ॥
प्रवृत्तारव्या द्रुतलया स्थितारव्या च विलम्बिता ।
स्थितप्रवृत्तसंज्ञा च ज्ञेया मध्यलयाश्रिता ॥ ४४६ ॥
ज्ञेयश्चञ्चत्पुटस्तस्य तथा चापपुटः पुनः ।

द्विकलेन विधानेन तस्य चापविधिस्त्वयम् ॥ ४४७ ॥
बह्वक्षरा च विपुला मागधी चार्धमागधी ।
समाक्षरपदा चैव तथा च विषमाक्षरा ॥ ४४८ ॥
तस्यात्यन्तापहरणा विज्ञेया वाप्यनीकिनी ।
अवसानापहृणा अन्तापहरणातथा ॥ ४४९ ॥
अभ्यन्तरापहरणा तथा चैवार्धनर्कुटा ।
अर्धखंजा च मिश्रा च तथा चैवान्तगोर्विका (?) ॥ ४५० ॥
एकावसाना विज्ञेया तथा च नियताक्षरा ।
अर्धप्रवृत्ते एतासां लक्षणं श्रूयतामिदम् ॥ ४५१ ॥
व्यक्तवाक् या लघुप्राया लघ्वक्षरसमन्विता ।
द्रुतवाक्या द्रुतलया ज्ञेया वह्वक्षरेति सा ॥ ४५२ ॥
गुरुप्लुताक्षरप्राया स्वल्पवाक्या यदा तथा ।
त्रिलया पृथुलाख्या च सुकुमारविधौ स्मृता ॥ ४५३ ॥
त्रिलया त्रियतिश्चैव त्रिप्रकाराक्षरान्विता ।
एकविंशतिताला च मागधी सम्प्रकीर्त्तिता ॥ ४५४ ॥
गुरुलघ्वरक्षरकृता द्रुतमध्यलयान्विता ।
मागध्ये वार्ध्यताले च युक्ता स्यादर्धमागधी ॥ ४५५ ॥
गुरुलाघवमात्राभिः पदैर्वर्णैस्तथैव च ।
लयतालैः समैश्चैव समाक्षरपदा स्मृता ॥ ४५६ ॥
अक्षरैर्विषमायां तु मात्रापादैस्तथैव च ।
लयतालैरनियमा सा ज्ञेया विषमाक्षरा ॥ ४५७ ॥
स्यात्त्वन्त्यः सन्निपातश्चः स्वानुस्वारोऽन्त्य इष्यते ।
समाद्यन्तापहाराणां सानुस्वारकृता तथा ॥ ४५८ ॥
मध्याद्यन्तैः सन्निपातैरनुस्वारकृताक्षरैः ।
शेषैरनिलया पादैर्विज्ञेया सा त्वनीकिनी ॥ ४५९ ॥
अवसानापहरणा नित्यं ज्ञेयाऽमिताक्षरा ।
अनुस्वारद्रुता चैवमन्तापहरणा स्मृता ॥ ४६० ॥
द्वितीया सन्निपातेन मध्येऽक्षरसमन्विता ।

अभ्यन्तरापहरणा सानुस्वारेव सा स्मृता ॥ ४६१ ॥
अर्धेन भिद्यते या तु विज्ञेया सार्धनत्कुटा ।
त्र्यस्रा ह्यनेन विधिना ह्यर्धखञ्जेन कीर्त्यते ॥ ४६२ ॥
खञ्जनत्कुटनाभ्यां तु मिश्रभावो यदा भवेत् ।
त्र्यस्रा वा चतुरस्रा वा तदमिश्रेव कीर्त्यते ॥ ४६३ ॥
उपक्षेपेण यस्यास्तु स एवार्धः समाप्यते ।
शीर्षकं सा तु विज्ञेया शीर्षितेन विभूषिता ॥ ४६४ ॥
एकपादावसानस्तु यस्य स्यादर्धवर्णतः ।
एतावसानेव बुधैः सा ज्ञेया तु चतुष्पदा ॥ ४६५ ॥
पूर्वपादेन तस्य स्यात् सर्वत्र गुरुलाघवः ।
पादे पादावसाने च सा ज्ञेया नियताक्षरा ॥ ४६६ ॥
यस्या स्थितप्रवृत्तं वा भवत्यर्धनिवेशितम् ।
अर्धप्रवृत्ता सा तु स्यादुभाभ्यामपि वा कृता ॥ ४६७ ॥
निष्क्रामश्चैव शम्या च तालः शम्या तथैव च ।
आवापः सन्निपातश्च षडस्या ग्राहकाः स्मृताः ॥ ४६८ ॥
उपोहनं तु त्रिविधं सुकुमारे प्रकीर्त्तितम् ।
द्व्यवरं त्र्यपरं तस्य कलाभिः प्रत्युपोहनम् ॥ ४६९ ॥
विकलाख्यं चान्तकलं सन्निपातपरं स्मृतम् ।
सन्निपातापहरणा आदौ मध्येऽन्ततोऽपि वा ॥ ४७० ॥
वाक्याद्व्याभिनिष्पन्ना नानावाक्यापि सा स्मृता ।
एकपादा द्विपादा वा त्रिपादा च प्रकीर्त्त्यते ॥ ४७१ ॥
चतुष्पादापि वा भूत्वा नातः परमिहेष्यते ।
कृत्वा तु पादबहुला न शोभां जनयिष्यति ॥ ४७२ ॥
वर्णस्य प्रकृतिर्ह्यन्यद्रङ्गव्यक्तिर्हि···· स्यति ।
तस्मात्स्थिता स्याद् द्विपदा ह्येकेनैव पदा स्मृता ॥ ४७३ ॥
चतुष्पदा प्रवृत्ता तु सम्यक् प्रोक्ता प्रयोक्तृभिः ।
तत्रैकरूपैकपदा स हि पादपता स्मृता ॥ ४७४ ॥
द्व्यत्रिंशत्परमा सा हि सन्निपातपदा भवेत् ।

आभ्यामृध्यप्रमाणे तु त्रिपादः परिकीर्त्यते ॥ ४७५ ॥
सन्निपातप्रमाणेन ज्ञेयो मध्यलयस्तथा ।
लास्यमित्येव यत्पूर्वं मया वः परिकीर्त्तितम् ॥ ४७६ ॥
लक्षणं तस्य वक्ष्यामि प्रयोगञ्च यथाक्रमम् ।
लासनाल्लासमित्युक्तं स्त्रीपुम्भावसमाश्रयम् ॥ ४७७ ॥
भाणवत् चैकहास्यं स्याद्बहुवस्तु च तद्भवेत् ।
एकार्थं पृथगर्थं वा तदङ्गेषु प्रकीर्त्तितम् ॥ ४७८ ॥
अङ्गानि दश चैवास्य तेषां वक्ष्यामि लक्षणम् ।
गेयपादं स्थितं वाद्यं आसीनं पुष्पगन्धिका[1] ॥ ४७९ ॥
प्रच्छेदकास्त्रिमूर्धञ्च सैन्धवाख्यं द्विमूर्धकम् ।
उत्तमोत्तमकं चैव विचित्रपदमेव च ॥ ४८० ॥
उक्तप्रत्युक्तभावञ्च लास्याङ्गानि प्रकीर्त्तिताः ।
लास्ये दशविधं ह्येतदङ्गानिर्देशलक्षणम् ॥ ४८१ ॥
आसीनकाख्यं योज्यं स्यात् प्रयत्नादासनस्थया ।
स्थितवाद्यश्च भौमीभिः····चारीभिर्युतम् ॥ ४८२ ॥
नृत्तकाले च वाद्ये च गृहमोक्षे तथैव च ।
गीताङ्गानां विधिर्यः स्यात् स लासो प्रायशः स्मृतः ॥ ४८३ ॥
अङ्गान्येतानि लास्ये स्युर्दशोक्तानि समासतः ।
एतेषां चैव वक्ष्यामि प्रयोगं लक्षणं तथा ॥ ४८४ ॥
स्थापितैर्भाण्डविन्यासैः पटे चैवापकर्षिते ।
बृंहणः पूर्ववर्षेषु चासने परिकल्पिते ॥ ४८५ ॥
मार्दितेषु मृदङ्गेषु त्रिसाम्नि प्रतियोजिते ।
प्राक् शुष्कासारितं कार्यं तं त्रिवेणुप्रयोजितम् ॥ ४८६ ॥
मार्गसारितताळेन ततश्चासारितं बुधैः ।
परिवृत्तैस्त्रिभिर्युक्तमतश्चोपोहनं भवेत् ॥ ४८७ ॥
त्र्यस्रेण विकलेन स्यात् ततश्च परिधानकम् ।
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्त्तात्मकं तथा ॥ ४८८ ॥

---

१ ०ण्डि०--क ।

परिवर्ते तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
त्रिवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥ ४८९ ॥
कार्यं तथा निर्वहणं प्राप्त्यर्थं परिधानके ।
इत्येतत् प्रथमं ह्यङ्गं गेयपादमिति स्मृतम् ॥ ४९० ॥
स्थितवाद्यस्य वक्ष्यामि विधानञ्चाप्यतः परम् ।
वृत्तमेकमथ द्वे वा योजयेत् पञ्चपाणिना ॥ ४९१ ॥
अतः परञ्च द्वे भूयः खञ्जिते सम्प्रयोजयेत् ।
चञ्चत्पुटेन कर्त्तव्या द्विकलेन ततः परम् ॥ ४९२ ॥
यथाक्षरेण चायुक्ता सन्निपातैस्तथाऽष्टभिः ।
अवसाने च योक्तव्यं चरितं पञ्चपाणिना ॥ ४९३ ॥
द्विकलेनेति योक्तव्यं स्थितवाद्यप्रयोक्तृभिः ।
उपोह्य तालं त्र्यस्रं च बृहत्पादपदैः समैः ।
आसीनवाद्यं युञ्जीत भावैः सर्वैश्च पौरुषैः ॥ ४९४ ॥
गेयं चतुर्भिः पादैस्तु समैरर्थपरानुगैः ।
आसीनवाद्ये कर्त्तव्यः प्रयोगः शीर्षकस्य तु ॥ ४९५ ॥
अष्टभिः सन्निपातैश्च युक्तं तालादिनैव तु ।
अथाक्षरप्रवृत्तेन विधिवत् पञ्चपाणिना ॥ ४९६ ॥
द्वितीयपरिवर्त्तस्य सन्निपाते तथाष्टमे ।
अतीतयुग्मतालेन शोकः कार्यस्ततः परम् ॥ ४९७ ॥
आसीनवाद्ये यद्वाद्यमवनद्धकृतं भवेत् ।
आसीने गोत्रसञ्चारैस्तत्र साम्यं प्रयोजयेत् ॥ ४९८ ॥
अष्टादश द्वादश वा पदानि च ततः पुनः ।
कुर्याद्युत्तरतालेन ततो निर्वहणं भवेत् ॥ ४९९ ॥
एतदासीनवाद्यस्य विधानं परिकीर्त्तितम् ।
विचित्रवृत्तसंयुक्तं पुंस्त्रियोर्गतिचेष्टितैः ॥ ५०० ॥
अन्योन्यान्तरिते नित्यगीतवाद्येन भूषितम् ।
पादे पादेऽङ्गहारैश्च वाद्येन च समन्वितम् ॥ ५०१ ॥

१ वृत्त्या तैस्तैः समैस्तथा--ख ।

स्यात् पुष्पगन्धिका नाम यदङ्गं तन्निबोधत ।
तत्रैकं पौरुषं श्लोकं समवृत्तं प्रयोजयेत् ॥ ५०२ ॥
त्र्यङ्गं द्विधातु प्रच्छेदविद्यालास्यप्रयोगवित ।
ज्योत्स्नायां मन्दिरे वाऽपि सलिले दर्पणेऽथवा ॥ ५०३ ॥
छायां संदृश्य कान्तस्य प्रहर्षणविभूषितम् ।
वृत्तप्रधानं क्रीडाढ्यं हेलादिभिरलंकृतम् ॥
चञ्चत्पुटस्य भेदेन तस्य प्रक्रीडितं स्मृतम् ॥ ५०४ ॥
मात्रावृत्तसमैः पादैः सन्निपातैस्तथाष्टभिः ।
बह्वक्षराभिः संयुक्तं तोटकं पञ्चपाणिना ॥ ५०५ ॥
द्विकलेन प्रकर्त्तव्यं मिश्रेणैककलेन वा ।
शीर्षकं च प्रकर्त्तव्यं गुरुप्रायाऽक्षरान्वितम् ॥ ५०६ ॥
यथाक्षरेण त्र्यस्रेण सन्निपातैस्तथाष्टभिः ।
विविधैकैकसंयुक्तं कैशिकीजातिसंश्रयम् ॥ ५०७ ॥
अङ्गप्रच्छेदकं कुर्यात् युक्तं प्रक्रीडितादिभिः ।
अनिष्ठुरश्लक्ष्णपदं गान्धारीजातिमाश्रितम् ॥ ५०८ ॥
चञ्चत्पुटेन योक्तव्यं त्रिमूढं द्विकलेन तु ।
चतुष्पष्टिः सन्निपातास्तस्मिंश्चैव प्रकीर्त्तिताः ॥ ५०९ ॥
यथामार्गकलोपेता विदारी विविधान्विता ।
अङ्गहाराः सविष्कम्भान्नैव चात्र प्रयोजयेत ॥ ५१० ॥
केवलं पौरुषैर्भावैर्वाद्यं नात्युयुतं नयेत् ।
नत्कुटं खञ्जकं चैव विधाने सम्प्रयोजयेत ॥ ५११ ॥
इति त्रिमूढमुद्दिष्टं नानारससमाश्रयम् ।
नातिस्पष्टाङ्गहारं तु नातिरेचितभूषितम् ॥ ५१२ ॥
सैन्धवीमाश्रितं भाषां ज्ञेयं सैन्धवकं बुधैः ।
रूपकाद्यादिसंयुक्तं सैन्धवं स्यादथोद्धतम् ॥ ५१३ ॥
न वाद्यं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः ।
वितस्तालिप्तलेशाढ्यं सैन्धवे वाद्यमिष्यते ॥ ५१४ ॥

---

१ ०ण्डि०—ख । २ प्ररोचकं—ख ।

मृदङ्गहारबहुलं गुरुप्रायाक्षरान्वितम् ।
आक्रीडितस्य भागेन युग्मतालकृतेन हि ॥ ५१५ ॥
विंशत्याः सन्निपातानां युक्तं सैन्धवकं भवेत् ।
मुखप्रतिमुखोपेतं तथा चापपुटाश्रयम् ॥ ५१६ ॥
यथाक्षरैः सन्निपातैस्तथा द्वादशभिर्युतम् ।
नैकयुक्तिविचित्रार्थं पौरुषं भावमाश्रितम् ॥ ५१७ ॥
एकाङ्गं शीर्षकाङ्गं वा द्विमूढं परिकीर्त्तितम् ।
अथोगमे नत्कुटकवस्त्वाद्यैः सम्प्रयोजयेत् ॥ ५१८ ॥
ततः श्लोकं विचित्रार्थं ततश्चैवोपपादयेत ।
अपरान्तरशाखा च आदौ वस्तु विधीयते ॥ ५१९ ॥
यथाक्षरेण काम्यं तु शीर्षकं पञ्चपाणिना ।
नैकाङ्गाहारग्रहणं हेलाभावविभूषितम् ॥ ५२० ॥
कोपप्रसादबहुलं साधिक्षेपैरुपक्रमैः ।
सल्लापरुचिरैर्नित्यमुक्तप्रत्युक्तमिष्यते ॥ ५२१ ॥
वस्त्वर्धेन[1] प्रकुर्यात्तु तस्य तालविधिः स्मृतः ।
ततश्च तु शीर्षकं कार्यं प्रयुक्तं पञ्चपाणिना ॥ ५२२ ॥
वज्रसंविष्टकं चैव तासां त्र्यस्रोऽत्र एव च ।
उक्तप्रत्युक्त एवं हि प्रसादान्तं प्रयोजयेत् ॥ ५२३ ॥
दशाङ्गं लास्यमित्येतन्मया वः परिकीर्त्तितम् ।
प्रकरणे द्वादशाङ्गानि तथैव च भवन्ति हि ॥ ५२४ ॥
सञ्चार इति विज्ञेयो लास्यच्छेदे विपर्ययात् ।
एवमेतद् बुधैर्ज्ञेयं गीततालविकल्पनम् ॥ ५२५ ॥
ततः कार्यः प्रयत्नस्तु नाट्यताले प्रतिष्ठितः ।
सर्वस्यैव हि नाट्यस्य आतोद्यानां तथैव च ॥ ५२६ ॥
ततः कालेन संयुक्तो भवेन्नित्यं प्रमाणतः ।
हीनं प्रकृष्टवर्णं वा गानं तालेन धार्यते ॥ ५२७ ॥
तस्मादेतत् प्रयत्नेन विज्ञातव्यं प्रयोक्तृभिः ।

---

१ वज्रार्धेन–ख ।

ऋग्गाथा पाणिका चैव सप्तरूपं प्रकीर्णकम् ॥ ५२८ ॥
चतुष्पदा वर्धमाने ताले चैव विभाव्यते ।
तस्मात्पूर्वं प्रयत्नेन कार्यं तालावधारणम् ॥ ५२९ ॥
यस्तु तालं न जानाति न स गाता न वादकः ।
अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः ॥ ५३० ॥
पूर्वोक्तं वै विधानं च तच्च मे सन्निबोधत ।
त्रयो लयाश्च विज्ञेया द्रुतमध्यविलम्बिताः ॥ ५३१ ॥
मार्गेषु व्यक्तिमायान्ति गीतं वाद्योभयात्मकम् ।
तिस्रस्तु यतयश्चान्या मार्गेषु लयसंश्रया ॥ ५३२ ॥
समा स्रोतोगता चैव गोपुच्छेति यथाक्रमम् ।
पादवर्णप्रकर्षाणामक्षराणामथापि च ॥ ५३३ ॥
नियमे या यतिः सा तु गीतवाद्यादिभिः स्मृता ।
छन्दोक्षरपदानां तु समर्थं यत्र कीर्त्तितम् ॥ ५३४ ॥
कलाकालान्तरकृतं स लयो नाम संज्ञितः ।
आद्यन्ते चैव मध्ये च लयवर्णपदैः समा ॥
वाद्यप्रधानभूयिष्ठा चित्रा ज्ञेया समा यतिः ॥ ५३५ ॥
क्वचिच्चैवावतिष्ठेत क्वचिच्चैव प्रधावति ।
वाद्यश्रुतप्रधा(?)वृत्तौ ज्ञेया स्रोतोगता यतिः ॥ ५३६ ॥
गुरुभिर्लघुभिश्चैवमपि भावितमक्षरम् ।
लम्बिता येन भूयिष्ठा गोपुच्छा दक्षिणे यतिः ॥ ५३७ ॥
समपाण्यवपाणिश्च तथा च परिपाणिकम् ।
यत्युपान्त्यक्षराणाञ्च समवायो लयो भवेत् ॥ ५३८ ॥
लयात्प्रभृति एतेषां प्रमाणं परिवर्त्तते ।
गानिः कलांगांक (?) तु शेषेष्वन्येषु पाणिषु ॥ ५३९ ॥
तत्र स्थितिलयो यो वै सन्निपातो भवेदथ ।
तुल्यमध्यबलं प्राप्य सन्निपातश्चतुष्टयम् ॥ ५४० ॥
या तत्र चान्तरकला द्रुत एव लयो हि सः ।
सोपपाणिस्तु विज्ञेयस्तज्ज्ञैर्द्रुतलयाश्रयः ॥ ५४१ ॥

मध्ये च यान्तरकला द्रुकुले(?)च या ।
उपर्युपरि पाणिश्च संज्ञो यो वाद्यसंश्रयः ॥ ५४२ ॥
अत ऊर्ध्वं कलानां तु प्रमाणेन विधीयते ।
यतयः पाणयश्चैव लयाश्चैव प्रयोक्तृभिः ॥ ५४३ ॥
यथाक्रमं हि कर्त्तव्यं गीतयुक्तिमवेक्ष्य च ।
एवं ध्रुवातालविधिः कर्त्तव्यो गानयोगतः ॥ ५४४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि ध्रुवाणामङ्गकल्पनम् ॥ ५४५ ॥

इति भारतीये नाट्यशास्त्रे तालऽध्यरूजको नाम एकत्रिंशोऽध्यायः॥३१॥

---

# अथ द्वात्रिंशोध्यायः ।

ध्रुवेति संज्ञितानि स्युर्नारदप्रमुखैर्द्विजैः ।
यान्यङ्गानीह मुक्तेषु तानि मे सन्निबोधत ॥ १ ॥
या ऋचः पाणिका गाथा सप्तरूपाङ्गमेव च ।
सप्तरूपं प्रमाणं हि सा ध्रुवेत्यभिसंज्ञिता ॥ २ ॥
एभ्यस्त्वङ्गेभ्य उद्धृत्य नानाछन्दःकृतानि च ।
ध्रुवात्वं[1] यानि गच्छन्ति तानि वक्ष्याम्यहं द्विजाः ॥ ३ ॥
मुखं प्रतिमुखं चैव वैहायसिकमेव च ।
स्थिरप्रवृत्ते वज्रश्च सन्धिः संहरणं तथा ॥ ४ ॥
प्रस्तारश्चोपवर्त्तश्च माषघातस्तथैव च ।
चतुरस्रावपाते च प्रवेश्योशीर्षकं तथा ॥ ५ ॥
संविष्टतान्ताहरणे माहाजनिकमेव च ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥ ६ ॥
ध्रुववर्णा ह्यलङ्कारा लया यत्योपपाणयः ।
अपरस्परसम्बन्धा यस्मात्तस्माद् ध्रुवा स्मृता ॥ ७ ॥
ध्रुवाश्च पञ्च विज्ञेया नानावस्थासमाश्रयाः ।
एतासां चैव वक्ष्यामि सप्तरूपाङ्गकल्पनम् ॥ ८ ॥

---

१ काव्यत्वं—ख ।

उपपातः प्रवृत्तश्च प्रावेशिक्यां प्रकीर्त्यते ।
वज्रश्च शीर्षकश्चैव ध्रुवायां शीर्षकस्मृते ॥ ९ ॥
प्रस्तारो माषघातश्च महाजनिकमेव च ।
प्रवेणी ह्युपपातश्च अड्डितायाः प्रकीर्तिताः ॥ १० ॥
यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु ।
तानि छन्दोगतैर्वृत्तैर्विभाष्यन्ते ध्रुवास्तथा ॥ ११ ॥
त्र्यस्रश्च चतुरस्रश्च तालः कार्यो ध्रुवास्वथ ।
षट्कलोऽष्टकलश्चैव यस्तु पूर्वं प्रकीर्तितः ॥ १२ ॥
सर्वेषामेव गीतानां यान्यङ्गानि स्मृतान्यथ ।
तेषां सविविधं एकैकं च भविष्यति ॥ १३ ॥
एतेषां चैव वक्ष्यामि विधिं प्रकृतिसम्भवम् ।
उत्तमानां भवेद्वृत्तं मध्यानां विविधं स्मृतम् ॥ १४ ॥
नीचानामेककं कार्यं ध्रुवा पञ्चविधा बुधैः ।
त्र्यस्रं वा चतुस्रं वा श्लोकं ज्ञात्वा प्रयोगजः ॥
तेन प्रमाणयोगेन ध्रुवा कार्याऽवसानिकी ॥ १५ ॥
गायत्र्याश्चातिशक्कर्या अन्तरे वा व्यवस्थिता ।
तेन पादप्रमाणेन ध्रुवा कार्यावसानिकी ॥ १६ ॥
शक्कर्याश्चातिकृत्या ये.................. ।
नत्ववसानिके तेषां मध्यार्धविहिता ध्रुवा ॥ १७ ॥
यतिच्छन्दोविधानेन गुरुलघ्वक्षरान्वितः ।
कार्यो मात्राप्रमाणेन ध्रुवापादोऽवसानिकः ॥ १८ ॥
मध्योत्तमानां कर्त्तव्या ध्रुवा त्र्यस्राऽवसानिकी ।
अथ पूर्णपदी या तु तस्या वृत्तं प्रवेशनम् ॥
तत्रेष्टवृत्तप्रामाण्याद् ध्रुवा कार्यावसानिकी ॥ २० ॥
ध्रुवाश्च पञ्च विज्ञेया नानावृत्तसमुद्भवाः ।
यथास्थानरसोपेता उत्तमाधममध्यमाः ॥ २१ ॥
कनिष्ठकाग्रहा कापि सन्निपातग्रहापरा ।
तथा पापग्रहा चैव त्रिविधा तु ध्रुवा स्मृता ॥ २२ ॥

प्रावेशिकी तु प्रथमा द्वितीयाक्षेपिकी स्मृता ।
प्रासादिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ॥ २३ ॥
नैष्क्रामिकी च विज्ञेया पञ्चमी च ध्रुवा बुधैः ।
एतासां चैव वक्ष्यामि छन्दोवृत्तनिदर्शनम् ॥ २४ ॥
गान्धर्वं यन्मया प्रोक्तं स्वरतालपदात्मकम् ।[1]
पदं तस्य भवेद्वस्तु स्वरतालानुभावकम् ॥ २५ ॥
यत्किञ्चिदक्षरकृतं तत्सर्वं पदसंज्ञितम् ।
निबद्धञ्चानिबद्धञ्च तत्पदं द्विविधं स्मृतम् ॥ २६ ॥
अतालञ्च सतालञ्च द्विप्रकारञ्च तद्भवेत् ।
सतालञ्च ध्रुवार्थेषु निबद्धं तच्च वै स्मृतम् ॥ २७ ॥
यत्तु वा करणोपेतं सर्वातोद्यानुरञ्जकम् ।
अतालमनिबद्धञ्च पदं तु ज्ञेयमेव च ॥ २८ ॥
नियताक्षरसम्बन्धं छन्दोयतिसमन्वितम् ।
निबद्धन्तु पदं ज्ञेयं नानाछन्दःसमुद्भवम् ॥ २९ ॥
स्वच्छन्दयतिपादं तु तथा च नियताक्षरम् ।
अनिबद्धं पदं ज्ञेयं महाताललयाक्षरम् ॥ ३० ॥
अनिबद्धाक्षराणि स्युर्यान्यजातिकृतानि तु ।
आतोद्यकरणैस्तेषां विधानमपि निर्दिशेत् ॥ ३१ ॥
अपदान्यनिबद्धानि तालेन रहितानि च ।
आतोद्येषु नियुक्तानि यानि तानि तु योजयेत् ॥ ३२ ॥
यानि चैव निबद्धानि छन्दोक्षरविधानतः ।
ध्रुवासंज्ञानि वर्णानि तानि वक्ष्याम्यतः परम् ॥ ३३ ॥
अत्युक्तं च प्रतिष्ठा च मध्यगायत्रिरेव च ।
एताः स्थितापकृष्टासु त्र्यस्रा ज्ञेयास्तु जातयः ॥ ३४ ॥
उष्णिगनुष्टुब् बृहती पङ्क्तिश्चेतीह जातयः ।
एताः प्रसादिकीनां तु युग्मा ज्ञेयास्तु जातयः ॥ ३५ ॥
अनुष्टुब् बृहती चैव जगत्यथ विलम्बिता ।

१ पदतालं प्रकीर्तितम्—ख । २ सतालपतनात्मकम्—ख ।

द्रुता च चपला चैव उद्गता धृतिरेव च ॥ ३६ ॥
ध्रुवाणां जातयो ह्येताः प्रयोगेषु प्रकीर्तिताः ।
प्रावेशिकीनां जातिस्तु उद्धतानां निबोधत ॥ ३७ ॥
पङ्क्तिश्च त्रिष्टुब् जगती तथातिजगती पुनः ।
शक्करी चेति विज्ञेया उद्धतानां तु जातयः ॥ ३८ ॥
सर्वासामेव जातीनां त्रिविधं वृत्तमिष्यते ।
गुरुप्रायं लघुप्रायं गुरुलघ्वक्षरं तथा ॥ ३९ ॥
गुरुप्रायापकृष्टा स्यात् लघुप्राया द्रुता तथा ।
गुरुलघ्वक्षरप्रायाः शेषाः कार्या ध्रुवास्तथा ॥ ४० ॥
वृत्तान्योजःकृतानि स्युर्मुखे यानि भवन्ति हि ।
तानि ध्रुवासु योज्यानि लघुयोगकृतानि तु ॥ ४१ ॥
यानि चाल्पाक्षराणि स्युरल्पच्छन्दःकृतानि तु ।
तानि त्रिकापकृष्टासु कार्याण्याक्षेपिकीषु च ॥ ४२ ॥
गुर्वादिस्तु स्तितः (?) कार्या लघ्वादिस्तु स्थिता भवेत् ।
यान्योजःयुग्मच्छन्दांसि ज्ञेयान्याक्षेपिकी स्मृता ॥ ४३ ॥
लघुयुग्मकृता या स्यात् स्थिता साक्षेपिकी भवेत ।
विषमाक्षरा वापि····पादा येऽर्थवशानुगाः ॥ ४४ ॥
वर्णैः प्रकर्षे तेषां तु शम्यातालेन योजयेत् ।
जातीनामथ सर्वासां छन्दोवृत्तिनिदर्शनम् ॥
स्थानप्रमाणसंज्ञाभिर्गदतो मे निबोधत ॥ ४५ ॥
गुरुगाथांशकौ यस्याः सर्वपादेषु दृश्यते ।
ह्रीरिति ख्यातनामासौ प्रथमा कीर्तिता ध्रुवा ॥ ४६ ॥

यथा—

यो गङ्गाश्रित् ॥ ४७ ॥

तत्राद्युक्तः सर्वे दीर्घाः ॥ ४८ ॥

यथा—

ईशं देवं शर्वं वन्दे ॥ ४९ ॥

यत्पदं मध्यतः ।

स्याल्लघुः सा तटिः ॥ ५० ॥

यथा—

शङ्करः शूलभृत्
पातु मां लोककृत् ॥ ५१ ॥

लघु स्यात् पदादौ
त्रिके या धृतिः सा ॥ ५२ ॥

यथा—

उमेशः सुरेन्द्रः
तवायुर्ददातु ॥ ५३ ॥

लघुनी गुरु चेद्
रजनी खलु सा ॥ ५४ ॥

यथा—

अधिकं विरहे
मदनो दहति ॥ ५५ ॥

मध्येत्युक्ते च ज्ञेया सा एता वै वृत्तजातयः ।
प्रतिष्ठासुप्रतिष्ठानां भूयो वक्ष्यामि लक्षणम् ॥ ५६ ॥

चतुर्णां च पदां यस्य द्वितीयं ह्रस्वमेव वा
प्रतिष्ठायां गतं वृत्तं पुष्पं स्यात् तद्धि नामतः ॥ ५७ ॥

यथा—

संअन्ततो(?) अङ्गअम्मि
वाइ वाओ पुप्फवाही ॥ ५८ ॥

लघुनी प्राग्गुरुणी द्वे
यदि पादे भ्रमरी सा ॥ ५९ ॥

यथा—

वणखण्डे विअसंतो
वणहत्थी परिखिण्णो ॥ ६० ॥

लघू गुरू सदा पदे
भवेत्तु या जया हि सा ॥ ६१ ॥

यथा—

एमाहए वर्णातरे
असूगअं पवंएओ(?) ॥ ६२ ॥

देया: सर्वे दीर्घाः पादे यस्याः ।
नाम्ना विद्युद्भ्रान्ता सा वृत्ते स्यात् ॥ ६३ ॥

यथा—

ए ए गज्जन्ता तोअं मुच्चन्ता
लोअं छाअन्ता मेहा संपत्ता ॥ ६४ ॥

आदिपरे द्वे यस्य हि नित्यम् ।
ह्रस्वविधौ सा भूतलतन्वी ॥ ६५ ॥

यथा—

मेहणिरुद्धे पेक्खिअ वम्म
पंथिअदारा अंसुकिलिण्णा ॥ ६६ ॥

यदि च गुरुः पदनिधने ।
भवति हि सा कमलमुखी ॥ ६७ ॥

यथा—

पवणहओ सलिलहरो ।
भमइ णहे आहिअसमो ॥ ६८ ॥

आद्यमध्यगौ सान्तगौ तथा ।
यत्र वै गुरुः सा तु वागुरुः ॥ ६९ ॥

---

१ जयालक्षणं खपुस्तके-
प्रथमतृतीये यस्यां लघुनी चतुरक्षरे ।
पादे नित्यं भवेतां हि सा जयेत्यभिसंज्ञिता ॥

२ वागुरुलक्षणं खपुस्तके-
प्रथमं च तृतीयं च अन्त्यं चैव यदा गुरु ।
दृश्यते प्रतिपादं च ज्ञेया सा वागुरुर्यथा ॥

यथा—

मेहरादओ णंठरुंणओ ।
णिच्चणिप्पहो एस चंदओ ॥ ७० ॥

द्वितीयं नैधनं चैव चतुर्थञ्च गुरुर्यदा ।
सुप्रतिष्ठाकृते पादे सा शिखा कथिता तथा ॥ ७१ ॥

यथा—

बहालएहिं सगंजिएहिं ।
णहं समंतो वरुज्झइ व्व ॥ ७२ ॥

लघुनी त्वादौ चरणे यस्याः ।
गदिता नाम्ना घनपङ्क्तिः सा ॥ ७३ ॥

यथा—

तडिसंणद्धं घणसंरुद्धं ।
जलधाराहिं रुवदीवं भं ॥ ७४ ॥

एतास्तु जातयो ज्ञेयाः सुप्रतिष्ठाध्रुवास्त्वथ ।
अत ऊर्ध्वं प्रवक्ष्यामि गायत्रीपरिकल्पनम् ॥ ७५ ॥
आद्ये पुनरन्त्ये वा पादे गुरुणी यस्य ।
वृत्तं तनुमध्यं गायत्रसमुत्थम् ॥ ७६ ॥

यथा—

बज्जाहयरुंडो डाहज्जरसुत्तो ।
एसो गिरिराआ भूमिं विसलम्बा ॥ ७७ ॥

आद्यं चतुर्थमन्त्यञ्च गुरूण्येतानि यत्र तु ।
गायत्रीप्रथमे पादे ज्ञेया सा मौलिनी यथा ॥ ७८ ॥

यथा—

वाअपिकीविए वज्जिविणिपातिते ।
एत्थ महाणगे कन्दति हत्थिणी ॥ ७९ ॥

गुरुयुगमन्ते पदि पदि यस्याः ।
यदि कथिता सा मकरकशीर्षा ॥ ८० ॥

---

१ शा०-ख ।

यथा—

सुहासिसिरम्मि मदजणणम्मि ।
कमलवणम्मि विअरइ वाओ ॥ ८१ ॥

लघुनी चतुर्थे चरणे तु यस्याः ।
भवतीह सा वै विमला तु नाम्ना ॥ ८२ ॥

यथा—

कमलाअरेसुं भमरालएसुं ।
मदमुद्वहन्तो पविसेइ हत्थी ॥ ८३ ॥

यत्र स्युश्चरणे त्रीण्यादौ निधनं ।
दीर्घाण्येव तु सा वीर्यो(?)नामकृता ॥ ८४ ॥

यथा—

गज्जंते जलआ णच्चंते सिहिणो ।
गाअन्तो भमरा रम्मे पाउसए ॥ ८५ ॥

त्रिलघुरादितो यदि च पञ्चमम् ।
भवति पादतः प्रकथिता गिरा ॥ ८६ ॥

यथा—

जलदणादअं सुणिअ कुंजरो ।
णददि काणणे पडिगआउलो ॥ ८७ ॥

आद्ये चतुर्थकं अन्ते तथा गुरुः ।
यस्यास्तु पादतो ज्ञेया हि सा जला ॥ ८८ ॥

यथा—

एसा हिमहादाहिं खितअपातअं ।
दट्ठूण पाअवं हंसी परुणिआ ॥ ८९ ॥

ह्रस्वश्चेत् चतुर्थो दीर्घाश्चैव वर्णाः ।
सर्वे यत्र पादे रम्या सा तु नाम्ना ॥ ९० ॥

---

१ विधि—क ।
२ त्रीण्यादौ यदि स्यादन्त्ये च द्वे दीर्घे
ज्ञेयासा विधिज्ञैर्नाम्ना वै सुनन्दा—ख ।

यथा—

एते जङ्गमागा भूअं छादअन्ता।
भीमा कालमेहा उव्वेअं जणेन्ति ॥ ९१ ॥

आद्यचतुर्थे च अन्त्यमुपान्त्यं च।
यत्र गुरूणि स्युः सा खलु वै कान्ता ॥ ९२ ॥

यथा—

साहसंभावं हि एअएतुं रामा।
विरडं बधं चन्दु सुडं भावं मे(?)॥ ९३ ॥

त्रीण्यादौ तु यदि ह्यन्त्यश्चापि गुरुः।
नाम्ना वै कथिता पङ्क्तिः सा तु यथा ॥ ९४ ॥

यथा—

एसा हंसबहू एत्था काणणए।
गंतुं ऊसुअअं कान्तं सङ्गलआ ॥ ९५ ॥

लघुनी च गुरु द्विगुणं यदि चेत्।
चरणे चरणे कथिता नलिनी ॥ ९६ ॥

यथा—

पवणाहिहआ तरुणा तरुणो।
कुसुमागमए विहसंति विव ॥ ९७ ॥

यद् द्वितीयं ह्रस्वं सर्वमन्यद् दीर्घम्
यत्र पादे पाद नीलतोया सा स्यात् ॥ ९८ ॥

यथा—

मन्विदे(?)एसो विक्किरंतो वाउ।
दूसहो आवाइ पाअवाणं लासे ॥ ९९ ॥

गायत्र्या जातयो ह्येता विज्ञेयाः समवृत्तजाः।
अत ऊर्ध्वं प्रवक्ष्यामि उष्णिग्जातिविकल्पनम् ॥ १०० ॥

गुरुनिधनगतं यदि भवति सदा।
भवति तु चपला द्रुतगतिरथवा ॥ १०१ ॥

यथा—

सुरुचिरणअणं वरमणिणियरं ।
मम मदजणणं तव वअणमिदं ॥ १०२ ॥

गुरु चान्त्यपञ्चमं चरणे तृतीयतः ।
गदिता ततस्तु सा विमलेति नामतः ॥ १०३ ॥

यथा—

पिअ वाइ वाअओ सुवसन्तकालओ ।
एअकामुओ विअ मदणं जणंतओ ॥ १०४ ॥

गुरुणा लघुना चैव समाना या हि वा ध्रुवा ।
छन्दस्युष्णिक्कृते पादे सा ज्ञेया कामिनी यथा ॥ १०५ ॥

यथा—

पेक्खिऊण आअअं माहवं बहिंथओ ।
पाअवं पणोल्लिणा वाइ दक्खिणाणलो ॥ १०६ ॥

आद्ये पुनरथान्ते पादे च गुरुणी द्वे ।
ज्ञेया भ्रमरमाला नाम्ना प्रकथिता सा ॥ १०७ ॥

यथा—

हंसागमणधीरं कासं सुअविचित्तं ।
एदं सरअकालं रम्मं सुरहितोअं ॥ १०८ ॥

आद्यचतुर्थसमः अन्तिमकश्च गुरुः ।
यत्र सदा चरणे सा खलु भोगवती ॥ १०९ ॥

यथा—

चक्कसणामबहू कन्तसहाइणिआ ।
णिम्मलमास्सि जले हिंडइ संगमिआ ॥ ११० ॥

आदौ यदि गुरुणी पादे निधनगतम् ।
ज्ञेया मधुकरिका ह्युष्णिग्विनिगदिता ॥ १११ ॥

यथा—

एसा विमलजला रम्माभरणजुदा ।
काले मदजणणे जादा कुसुमवदी ॥ ११२ ॥

द्वितीयञ्च चतुर्थं च अन्त्योपान्त्ये तथैव च ।
पादे यत्र गुरूणि स्युः समुद्रा[1] नामतो यथा ॥ ११३ ॥
यथा—

हिमाहते वणम्मि पणंठपङ्कतोए ।
करेणआ विहीणो उवेदि मत्तहत्थी ॥ ११४ ॥

यदि च भवत्यन्ते पदि पादे दीर्घाणि ।
त्रिगुरुरिह प्रोक्ता कुसुमवती नाम्ना ॥ ११५ ॥
यथा—

जलहरसंणद्धे महिअरकुंजम्मि ।
सहअरिसंजुत्तो पविचरिदो हत्थी ॥ ११६ ॥

द्वितीयं च तृतीयं अथान्त्ये गुरुणी चेत् ।
सदा यत्र तु पादे भवेत्सा मुदिता वै ॥ ११७ ॥
यथा—

दहामेवहआण(?) वलाआवालिणं अ ।
महाभीमणिणाअं वठ्ठणा गअणम्मि ॥ ११८ ॥

चतुर्थं निधनञ्चैव षष्ठञ्चैव गुरूण्यथ ।
यत्र तूष्णिकूकृते पादे नाम्ना सा हि प्रकाशिता ॥ ११९ ॥
यथा—

कुसुमगन्धवाही सलिलरेणुपुण्णो ।
रमणि वादि वाओ मणसिजं जणंतो ॥ १२० ॥

प्रथमे पञ्चमञ्च यदि पादे लघूनि ।
कथिता सा तु दीप्ता सततं चेत्तथोष्णिक् ॥ १२१ ॥
यथा—

पवणो पंथवाही मदणं दीवअंतो ।
अद्दिंशदो···शिशिरे संवलन्ते ॥ १२२ ॥

द्वितीयञ्च चतुर्थञ्च अन्त्योपान्त्यौ तथैव च ।
यत्र पादे तु दीर्घाणि उष्णिक् सा तु विलम्बिता ॥ १२३ ॥

---

१ सुभद्रा-ख ।

यथा—

गलन्तपीअतोआ पिअंणपंधिसधा ।

भमन्तपद्यवाआ ण भादि णिंगआम् ॥ १२४ ॥

आद्यमथ पञ्चमं दीर्घमथ नैधनम् ।

यत्र यदि नामतः पञ्चमगतिस्तु सा ॥ १२५ ॥

यथा—

हेमलअमुक्कओ णिंमलम्भणिग्गओ ।

पुण्णससि सोहइ णहगहअङ्गणे ॥ १२६ ॥

एतास्तु जातयो ज्ञेया स्थिताः प्रासादकीष्वथ ।

अत ऊर्ध्वं प्रवक्ष्यामि अनुष्टुब्लक्षणं पुनः ॥ १२७ ॥

लघुनी गुरु लघुनी यदि वा गुरु चरणे ।

चरणे प्रतिनियता कथिता विमलजला ॥ १२८ ॥

यथा—

विकचाम्बुअसिहरे भमरावलिमुहरे ।

बहुणिम्मलसलिले विहगो पविचरइ ॥ १२९ ॥

यदि खलु पञ्चमकः पुनरपि चान्तगतः ।

भवति च चेत् स गुरुललितगतिःखलु सा ॥ १३० ॥

यथा—

पञ्चमं नैधनञ्चैव पादे स्यातां तु यत्र तु ।

नित्यमानुष्टुभे दीर्घं विज्ञेया ललितेति सा ॥ १ ३१

यथा—

कुसुमसुगंधिअए मणिसिअजीवणए ।

पमदवणगअए विअरइ हंसबहू ॥ १३२ ॥

षष्ठञ्चैवाष्टमञ्चैव यत्र स्यादक्षरं गुरु ।

नित्यमानुष्टुभे पादे मही ज्ञेया तु सा यथा ॥ १३३ ॥

यथा—

बहुकुसुमपसोहिए कमलवणसंडए ।

सहअरसहाइणी पविचरइ हंसिआ ॥ १३४ ॥

---

१ चञ्चल—ख ।

लघुगुण इह षट्को यदि भवति मुखे तु ।
चरणगतिविधौ सा मधुकरसदृशाख्या ॥ १३५ ॥

यथा--

विविहवणविआरी कमलवणसुअंधी ।
कुमुअवणविबोही सरदि सरइ वाओ ॥ १३६ ॥

यदि खलु पञ्चमकं पुनरपि चान्त्यमकम् ।
गुरुचरणे यदा भवति हि सा नलिनी ॥ १३७ ॥

यथा—

पुलिनतलंगणए कमलणिवासिणिआ
पिअअमवासगहे विसरदि सारसिआ ॥ १३८ ॥

आद्यमपि निधनकं दीर्घमथ भवति चेत्
यत्र हि चरणविधौ सा खलु भवति नदी ॥ १३९ ॥

यथा—

हंसदलसमुदिए सारसकुलमुहले
मत्तमहुअरगणे हिंडइ महुअरिआ ॥ १४० ॥

अनुष्टुब्जातयो ह्येताः प्रोक्ताः प्रावेशिकाश्रयाः ।
स्त्रीणामुत्तममध्यानामपकृष्टां निबोधत ॥ १४१ ॥

आद्ये चतुर्थमपि चान्त्ये दीर्घाणि यत्र चरणे तु ।
प्रातिवेशिकी तु बृहती नाम्ना जाता तथैव रुचिरा ॥ १४२ ॥

यथा—

नासानाहूग्गराअहि अपदणहोमिसमि ।
तारागणो धिअसोहो तेजासु पाहिरुदतीव ॥ १४३ ॥

यदि पञ्चमं सह तृतीयं गुरुणी अन्त्ये ।
प्रमितेति सा भवति नाम्ना अपकृष्टजातिरिह पङ्क्तिः ॥१४४॥

यथा—

घणगब्भगेहपरिखित्तो
अरुणप्पहाविहिअसोहो ।
गअणंगणे विहरमाणो

ण विभाति दिशेम्णा(?) रहिएन्दू ॥१४५॥

यदि खलु षष्ठमपि चान्त्ये गुरुरचना या चरणयोगे।
स्थितिलयकृता तु जगती सा भुवि गदिता गतविशोका ॥१४६॥

यथा—

जलहरविदरणविहदसु
रविकिरणजालहिदसोहो।
अहमुहपिणीगणेणविपरीअओ
इचंदो णाहिमिरअणेभसिओ ॥ १४७ ॥

आद्ये चतुर्थदशमाष्टमान्तगा
यस्या गुरूणि च भवन्ति पादतः
ज्ञेया ततोऽनुकरणाद्भवा हि सा
विश्लोकजातिजगतीसमाश्रिता ॥ १४८ ॥

आद्ये चतुर्थनियमं नैधने ह्यष्टमे तथा।
यत्र दीर्घाणि पादे स्युर्जगती ललिता तथा ॥ १४९ ॥

यथा—

एसो वसंतमहुआसिआअणो
सेलो व्व पुव्वपणवस्स छालिओ।
दोवासं हि घनइओगआसणो
रम्मो वणंगणपखाणओ ॥ १५० ॥

यदि पञ्चमं हि सतृतीयनैधनं
नवमं द्वितीयमपि तस्य तादृशम्।
चरणे गुरूणि यदि साऽतिपूर्विका
जगती बुधैर्निगदिता बिलम्बिता ॥ १५१ ॥

यथा—

वणसंव अधणतमावंगसिअं
अवगाहिऊण रअणीमुहं ससी।
इह णिच्च णुकुचिअ मंदजोसिणो
ण विरायदे समधिकं पदीविआ(?)॥ १५२ ॥

एता हि जातयो ज्ञेयाः स्थितानां हि प्रवेशजाः।
आक्षिपिकापकृष्टानां संप्रवक्ष्यामि लक्षणम् ॥ १८३ ॥
संप्रतिष्ठादिकश्चैव अपकृष्टासु योजयेत्।
अत्युक्तादीनि च तथा देवस्तुत्याश्रयाणि च ॥ १५४ ॥
अक्षराणां निवेशेन यतयः पाणयस्तथा।
..........अपकृष्टा तु सा भवेत् ॥ १५५ ॥
स्थायिवर्णास्थितिलया कलान्तरकृतान्तराः।
समपाणिर्यतिश्चैव अपकृष्टा विधीयते ॥ १५६ ॥
अपकृष्टा ध्रुवाणां तु कालान्तरकलान्यथ।
अक्षराणां निवेशस्तु वृत्तजात्योऽभिधीयते ॥ १५७ ॥
अल्पवस्तुपदा नित्यमपकृष्टा विधीयते।
प्रावेशिक्याथ संक्षेपः करणाङ्गपरिग्रहात् ॥ १५८ ॥
एवं ज्ञेयापकृष्टानां जातीनां वृत्तजातयः।
अत ऊर्ध्वं प्रवक्ष्यामि द्रुतानामिह लक्षणम् ॥ १५९ ॥
मुखे तु तोटकं कृत्वा शेषं ह्रस्वं तु योजयेत्।
युग्ममोजस्तु मिश्रं वा तथैव लघुसञ्चयः ॥ १६० ॥
जगत्यादि भवेत्सा तु तथातिधृतिनैधनाः।
यथा द्रुता च छन्दोभिर्नानावृत्तसमुद्भवाः ॥ १६१ ॥

अष्टावादौ यस्मिन् सान्त्यं स्यान्नवमं
दीर्घाणि स्युः शिष्टे द्वे वै चेल्लघुनी।
वृत्ता ह्येषा विज्ञेया गान्धर्वविधौ
यस्मिन्नेवं नित्यं विक्रान्ता जगती ॥ १६२ ॥

यथा—

एसो मेहो णादं धत्ते घूमणिहो
विज्जुज्जुत्तो दारेएहिं भूमिअलं
सिद्धतोधो घोरो हत्थिणिहो
संछादंतो लोआलोअं आदिदुतः ॥ १६३ ॥

अष्टौ पादे दीर्घाणि स्युस्त्वपि च पुनः
स्वान्त्यं दीर्घं दृष्टं च स्यात् खलु विहितम् ।
पादे पादे विज्ञेया सा समचरणा
तज्ज्ञैरेवं विद्युन्मालाप्यतिजगती ॥ १६४ ॥

यथा—
एसो आआदो णंदतो अचलणिहो
लीलाउकोलं दाणंतो सहि रुचिरे ।
वाआलं थोखेपि छाणोपवणजवो
ससारंतो विजृजो अहमतिदुत ॥ १६५ ॥

पञ्च त्वादौ यत्र गुरु ह्यष्टमनवमे
अन्त्यश्चैकं दीर्घकृतं चेत् भवति पदे ।
शक्वर्याख्या छन्दसि चैवं यदि विहिता
नाम्ना वृत्ते भूतलतन्वी स्खलितगतिः ॥ १६६ ॥

यथा—
बालो चन्दो मेहविमुक्को विमलकरो
चिरङ्गो सोहदि कंतोलपरिगऊ
लीलाखिंतो गङ्गधूरणं सरुचिरो
मुलारुहो णगणिवासो अधिकवपुः ॥ १६७ ॥

नवमं नैधनं चैव द्वादशं सत्रयोदशम् ।
गुरूणि यस्याः पादे स्युः शक्वर्या विभ्रमा यथा ॥ १६८ ॥

यथा—
विधदधी तिरणि मलतारे खे
कुमुदवणविकचणिंधसदारोसो
रजतरगिसिहरसंणिहिदो चन्दो
उदयदि वरतनु देहिअ आणंदो ॥ १६९ ॥

आद्यचतुर्थे पञ्चमषष्ठे नवदशमे
अन्त्यतमे चेत् यत्र तु दीर्घे भवति पुनः ।
सा खलु बोध्या पञ्चदशाख्ये पदनिधने
भूतलतन्वी शक्करिसंज्ञा ह्यतिविहिता ॥ १७० ॥

यथा--

पादपसिस्सं कंपअमाणो पट्ठणिणदो
सेलतटेसुं पङ्कअमाणो पविचरिदो।
रेणुसमूहं लंघुअमाणो रुणकविलो
वाअइ वाओ चंडपवाही रुणिअ इव ॥ १७१ ॥

तृतीयञ्च चतुर्थञ्च सप्तमं चाष्टमं तथा।
नवमं द्वादशञ्चैव नैधनं सत्रयोदशम् ॥ १७२ ॥
यत्र दीर्घाणि पादे तु अष्टिछन्दःसमाश्रये।
सा ज्ञेया गीतकविधौ ध्रुवा स्खलितविक्रमा ॥ १७३ ॥

यथा--

तिमिरसअमाणो असुचदो रुचिरो
अधिष्णुबोधअमाणो कुदुमाणउदअतो।
सीहिंकणसूणअणाणंदकरोअवहिसा
अविकरकोसोहइदघेणमही ॥ १७४ ॥

यदि खलु पञ्चममष्टममन्त्यं दशमपरं
पुनरपि तस्य परं गुरुकं चेत चरणविधौ।
इयमिह सप्तदशाक्षरपादे रुचिरमुखी
विकसितपङ्कजपत्रनिभाक्षी मुनिगदिता ॥ १७५ ॥

यथा--

असरणिरवाहओ पातितकुण्डोरणिहरो
सरसिजममदितविहङ्गलो सिअणिअच्चलिअं।
एदअहंरसहआमेघं सिणेहपमुदिओ
गअपरोवपिसिअदाणजउविटवअणो ॥ १७६ ॥

यदि खलु भवति हि चरणविधौ द्वादशपरतः
गुरु गुरु पुनरपिनिधनगतं वै गुरुसहितम्।
इह खलु धृतिरतिनिगदितनामा मुनिविहिता
कविगणमतिमतसमुदितचित्रा करकलता ॥ १७७ ॥

यथा—

पसुदिअगहअणविविअरिअसोअंगअणह
अलविललिअजलहरसमुदअहीणं णअण
अण सह किरणाणिवहणिदतिमिरा सोजणिहो
पसरदि वणरणहलधरलीलो सरसि ससी ॥ १७८ ॥

एता ह्यष्टौ तु विज्ञेया ध्रुवानां मूलजातयः ।
आभ्यो विनिःसृताश्चान्या युग्मौजा विषमाक्षराः ॥ १७९ ॥
एतास्तु जातयस्त्र्यस्रा द्विपादाः परिकीर्तिताः ।
द्विपादाश्चतुरस्राश्च संप्रवक्ष्याम्यतः परम् ॥ १८० ॥
यस्याः पादे ह्यत्याविष्टष्यष्टा जगतो जकाराख्याः ।
सर्वैर्वर्णैर्दीर्घैरन्यैस्सहाष्टौ विभाषिता माला ॥ १८१ ॥

यथा—

एअं लोअं सछादंतो भीमा णदंति गंभीरा ।
विजजो एंका तोअं संमुंचता समुण्णआ मेहा ॥ १८२ ॥

यस्याः पादे नित्यं चतुर्थषष्ठे जकारसंज्ञे तु ।
शेषाण्यन्यानि स्युर्गुरूणि यस्याः प्रभावती नाम्ना ॥ १८३ ॥

यथा—

एदाणि पादसखो एदाणि पुंफाणि मंतगंताणि र्ददं तफंपदि अघा-
सिदाणिसोदतिणोपैापमदतोलअरिसथदं····असो गलंदो माइ रंणमि? १८४॥

यदि खलु भवति युग्मजकारनाम्ना त्रिकाः कृतेः पादे ।
लघुगणतथादौ वदन्ति नाम्ना च मालकितां वै ॥ १८५ ॥

यथा—

परमुदक्षिणदवाआलि दाणिसुखासिरवादसरवो हि दाणिणचकिते
सुरराणि(?) ॥ १८६ ॥

आद्ये चतुर्दशमष्टमाद्यथान्त्यश्च यत्रगुलसिहा
..................................... ॥ १८७ ॥

---

१ ०जविषयाः पराः—ख ।

विलम्बितानामित्युक्ताश्चतुरस्रा हि जातयः ।
अतः परं प्रवक्ष्यामि द्रुतानां जातिलक्षणम् ॥ १८८ ॥
सदसंश्रिता यदि भवति चरणेषु चाकृतिसमुत्था ।
गुरु चान्त्यमेव च यदि तां मनोज्ञगमनां वदन्ति खलु नाम्ना ॥१८९॥
यथा—

कमलाअरम्मि भराइअम्मि अथगिधवमुअमि सरदे ।
णुणुइ जले पिआहिमुही आरमदि कमलहंसी ॥ १९० ॥

यदि पञ्च भवन्ति सकारगणा
यदि वान्ततो भवति गुरुः ।
यदि षष्ठगणश्च जकारकृतो
विकृतिरितस्ततस्तु ललितगतिः ॥ १९१ ॥
यथा—

सहआरमणोहरगन्धवहो
समवाइ रोसमदजलो ।
मदणजणो छव वणपवणो
असुअधिइआसुसुअपिअवो ॥ १९२ ॥

यदि दशमं षष्ठमथ षोडशान्तगतं त्रयोदशमपि तथा गुरु भवति ।
पादविहितं सततं यदि संकृतो न भवति हि रतिः ॥ १९३ ॥
यथा—

जलहरणिणओ तिणिअरञ्जपअसमं थओं पवरिसएदि जलणिहिअं ।
डंमिसुकरिखुभिदाभिदोंबवदाविदोखुअगौमुखो ॥ १९४ ॥

यदि गुरु दशमं हि ससप्तमनिधनगतं
ससप्तमदशममपि च भवति ।
जगौ षष्ठयुतस्त्वयि कृतिरथ
सा तु भुजगमुखी यथा ॥ १९५ ॥
यथा—

जडभरसमं आगअओ
सुरभिकुसुमांकुओ ।

मदणजणगो सओसुतिनासकरो
दंअंजणसहाओ पवणो ॥ १९६ ॥

यदि खलु समप्टु भवति
तथैव गुरुनिधनजं भवति ।
चरणो खलु भवति शेषमथं
सततमुत्कृतिरर्थवशा द्रुतपदगता ॥ १९७ ॥

यथा—

मधुकरगुरु ते एककथित इवासुविकसितं सुमनमुखकमलो
कमलिणि पिआहि परिवुदतणुअपिअयमपि दाइवदुवमसरो ॥१९८॥

एते द्रुतास्तु विज्ञेयाश्चतुरस्राभिजातयः ।
अतः परं प्रवक्ष्यामि उद्धतानां विकल्पनम् ॥ १९९ ॥
अन्तत्रयमथ चान्त्ये द्वे पादे यदि च गुरुणि स्युः ।
ज्ञेया खलु बृहती सा स्यान्नाम्ना कनकलताक्षिप्ता ॥ २०० ॥

यथा—

एसो गअणअले मेहो भीमो भअजणणो दिठ्ठो ।
भूमिं णवजलहरधाराहिं सिंचति सइ गज्जन्तो ॥ २०१ ॥

आदौ द्वे द्वे यतिनिधने त्रीणि
यस्याः पादेष्वथ च गुरूणि स्युः ।
संक्षिप्ता त्रिष्टुभि नियता ज्ञेया
पीनश्रोणी सुरुचिरविचित्रा ॥ २०२ ॥

यथा—

एसो मेहो सिहरिणि होणीणो
धारापातैरदिहस्दो भूमिं ।
आरलीतो पुअससालसो
आमुन्नो गअणअले जादि ॥ २०३ ॥

यदि खलु पञ्चममन्त्यं चरणविधौ यदि गुरूणि ।
भवति तु सा शशिरेखा भुवि बृहती प्रथिता ॥ २०४ ॥

यथा—

गिरिचरवारणरुवं खुहिदमहाणवणादं ।
पटुपवणेण विधूअं भमइ बलाइअयूथम् ॥ २०५ ॥

यदि च खलु षष्ठमन्त्यं पदि पदि गुरूणि नित्यम् ।
इति गदिता हि वृत्ते शलभविचलिता सा ॥ २०६ ॥

यथा—

ससिकिरणलंवहारा उडुगणकआवयंसा ।
गहगणकिअङ्गसोभा युवदि विअ भादि राई ॥ २०७ ॥

यदि खलु चरणविधौ लघुवसुगणसमकम् ।
भवति हि खलु बृहती मणिगणनिकरकृता ॥ २०८ ॥

यथा—

उडुगणकुसुमवती गहगणकिअतिलआ ।
रअणिअरणिहमुही अयि विहरदि रअणी ॥ २०९ ॥

चत्वार्यादौ चरणविधौ दीर्घाणि स्युर्निधनमपि ।
नाम्ना ज्ञेया जगति हि सा सिंहाक्रान्ता खलु बृहती ॥ २१० ॥

यथा—

आवन्तौ धरणिअल
विखोभतो विजूंलोअतपवितो
एसो मोहे पविचरो गअणअल
हरओ णमसवाअहर ॥ २११ ॥

बृहत्यो जातयो ह्येता विज्ञेयाः स्तुतिप्रवेशजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि पङ्क्तिजातिविकल्पनम् ॥ २१२ ॥
आद्यचतुर्थे ह्यथ निधनं पञ्चमकं चेत् गुरु चरणे ।
गीतविधाने भवति हि सा पङ्क्तिकृता वै सुरदयिता ॥ २१३ ॥

यथा—

पंकअसंडे विमलजले
सारसएहिं समणुगओ ।

कुन्दणिआसो सहि धवलो
हंसजुवाणो पविचरिदो ॥ २१४ ॥

दीर्घाण्यथ निधनगतं त्रीणि स्युर्यदि चरणविधौ ।
सा ज्ञेया कुसुमसमुदिता पङ्क्तिच्छेदविकचकुमुदिनी ॥ २१५ ॥

यथा —

वासअतो कुसुमसमुदितो
एदोसो सुमुहि सुरहिणो ।
सासन्तो विअरएदजं
एसं वसोइ असए सरसो ॥ २१६ ॥

सप्तममाद्यचतुर्थयुतं यत्र नैधनमेव गुरु पादविधौ ।
यदि पङ्क्तिविधकृता सा खलु वृत्तमिति प्रथिता ॥ २१७ ॥

यथा —

एस समुणे अम्बरके
मेहरवं सुणिऊण गओ ।
सेरासरवेसणसमुज्जलिओ
हिंडइ काणणए कुविदो ॥ २१८ ॥

त्रीण्यादौ तु भवन्ति गुरूणि षष्ठ्यन्तं नवमम्बरणे तु ।
यस्याः सा खलुगीतविधाने पङ्क्तिः क्षिप्ता कृतोद्धता नाम ॥ २१९ ॥

यथा —

अंहहबधरेपि पिणद्धं पिंज्ञंजो अधणं तयुदीपं ।
वा आधुंणिअं पिअणाअं उंमादेदि वहधिसमूहं ॥ २२० ॥

यदि खलु पञ्चममन्त्यं च
चरणविधावपि दीर्घं स्यात् ।
भवति नवं चाष्टमकं यस्या
विपुलभुंजावपि संक्षिप्ता ॥ २२१ ॥

यथा —

जलहरणादसमुंविण्णो
पगलिअदाणमहगन्धो ।

वणगहणे कुपितो हत्थी
सरसभसंविदअं जाइ ॥ २२२ ॥

आदौ यदि गुरूणी
नित्यं निधनमपि पुरतः ।
वृत्ते कविभिरभिनिगदिता
त्रिष्टुब्गतिरभिहिता यथा ॥ २२३ ॥

यथा--

ए देखि दिघर परिसरि
एहिमापसुपडहसमर
वाणि लासिद खगतिदरसणा
मेहणाहणा अणिममिवदिता ॥ २२४ ॥

यदि खलु मध्ये त्वथ गुरूणि
पुनरपि चान्त्यं गुरु चरणे ।
भवति हि नित्यं रुचिरमुखी
कमललताक्षीत्यभिकथिता ॥ २२५ ॥

यथा--

परिधुणमाणो किरणपहं
अतिरुहमाणो उदअगिरिं ।
उडुगणबन्धू तिमिरभरे
उदअदि चन्दो गअणतले ॥ २२६ ॥

आद्यचतुर्थे नैधनकञ्च
पञ्चमषष्ठे यत्र च दीर्घे ।
पुष्पसमृद्धा संकथिता सा
पङ्क्तिरथैषा गीतकबन्धे ॥ २२७ ॥

यथा--

मेहसमूहे किंणु वलाहे
भीमणिणादं विज्जुपिणद्धं ।

पेखिअ सो भीमणिणादो
धावइ हत्थी रूखवणम्मि ॥ २२८ ॥

यदि खलु पञ्चमकाष्टमं
पुनरपि चान्त्यमञ्च गुरु ।
चरणविधाविह वृत्तगतं
भवति हि सा द्रुतपादगतिः ॥ २२९ ॥

यथा--
गअणतलङ्गणहिंडणओ
किरणसहंसविभूसणओ ।
विहुणिअमेहपडतअओ
उदअदि चंदणडो गअणे ॥ २३० ॥

यदि खलु षष्ठं गुरु युगलं
निधनगतञ्चाप्यथ गुरुकम् ।
भवति हि सैवञ्चरणविधौ
कमलनिभास्ये ह्यतिचपला ॥ २३१ ॥

यथा—
कुसुमसुअंघीअसुपवा
तरुपलासोपमदपणे ।
बहुकुसुमामिणवसरदे
विअरइ रमेणवणे ॥ २३२ ॥

तृतीयञ्च चतुर्थञ्च पञ्चमं षष्ठमेव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा विमला यथा ॥ २३३ ॥

यथा—
कुसुमाकिण्णे णिम्मलसलिले
णलिणीसंडे छप्पअमुहले ।
अदिसअरं मे सारसमुदितं
समदो हत्थी एस विचरिदो ॥ २३४ ॥

चतुर्थं पञ्चमं पूर्वमन्त्योपान्त्ये तथैव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा रुचिरा यथा ॥ २३५ ॥

यथा—

मेहविदाणं अवधुणमाणो
कंपअमाणो कुसुदवणाणि ।
तोअसमूहं अवकिरमाणो
वाअइ वाओ कुविअ इवासु ॥ २३६ ॥

यदि खलु लघुगण इह नियतो
पदि पदि गुरु च हि निधनगतम् ।
भवति हि लगतिरतिचपला
त्वरितगतिरधिकमतिजगती ॥ २३७ ॥

यथा—

विधुणिअ जलहरउमिदपहो
अदिगणम्मणिगणपरिवडितो ।
उदअगिरिसिहरउमहनिलओ
वअरइअरणलअभुमसुखी ॥ २३८ ॥

यदि खलु पञ्चमनिधनगते द्वे
चरणविधौ भवति हि गुरुणी ।
कृतअतिजगती भुवि कथितगुणा सा
मदकलितेति च निगदितनामा ॥ २३९ ॥

यथा—

गअणणतलङ्गणअहिरुहमाणो
रुजतमहागिरिसिहरसरूपो ।
महाणिणिअरणिआ
सोपविअरिदो णवसरदि मिअंको ॥ २४० ॥

नवमं नैधने द्वे च गुरूणी चरणे यदि ।
वृत्तेऽतिजगती सा तु ज्ञेया कमललोचना ॥ २४१ ॥

यथा—

चतिगणिमुनिगणवंदिततेजो
पवितकिरणसविणधो
विधुणिअ तिमिरपडं जगदीवो
उदअदि गअणअले असस्रूरो ॥ २४२ ॥

यदि खलु चरणे तु सप्तमं
पुनरपि नवमं सनैधनम् ।
गुरु तदपरवक्त्रमुच्यते
नियतमपि निदर्शनं यथा ॥ २४३ ॥

यथा—

गिरिअरडविअरघुंणिदो
असणिपणरवेएकपअ ।
अभिपददि मदुममहीअलं
पटुतरणिणदो महाघणो ॥ २४४ ॥

एतास्तु जातयो ज्ञेयाः प्रावेशिक्या द्रुतास्तथा ।
समवृत्तपदानां तु वक्ष्यमाणं निबोधत ॥ २४५ ॥
एतासां लक्षणं सर्वं पूर्वमुक्तं विधानतः ।
प्रतिष्ठादि यथा छन्दः सम्यक् पादविधानतः ॥ २४६

प्रतिष्ठा यथा—

मेहरवणसवरदेणिसमिअ ।
कुद्धो असुहअप्पवरो ॥ २४७ ॥

सुप्रतिष्ठा यथा—

विजृंकसाहिहदंमरुद्ददि ।
वगअणंवामिअगततारे ॥ २४८ ॥

गायत्री यथा—

महरवाउलं कन्दरवसामिअ ।
दिवाअरं रूअदि विअणहअलम् ॥ २४९ ॥

उष्णिग्यथा —

तारावन्धू एस णहे विक्किरमाणो मेहपडं ।
किरणसहं सिंविंठसिओ उदअदि एसो रअणिअरो ॥ २५० ॥

बृहती यथा—

एसो सुमेरुवणअम्मि
देवअसिद्धपरिगीओ ।
अतिसुरभिवणचारि
पविचरदि गअसुवाओ ॥ २५१ ॥

पङ्क्तिर्यथा—

पादवसीसं कंपअमाणो
ससुरभिगण्डसुवासिओ ।
वनतरुगणलासणओ
विअरइ वरतरुवणपवणो ॥ २५२ ॥

त्रिष्टुब् यथा—

कुसुमवणस्स विहूसणओ
णिघुणिअतिमिरपडंगणओ ।
उदअदि गिरिसिहररोही
रअणिअरो सुविमलअरो ॥ २५३ ॥

जगती यथा—

यदिगणमुणिगणततुदओ
तविरकदवरकअअसंणिहिदो ।
दुतमिह णहअलमहिरुहमाणो
विअरदि पदवदि दिअसअरो ॥ २५४ ॥

एतास्तु जातयो ज्ञेयाश्चतुरस्रविवर्धिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि गणमात्राविकल्पनम् ॥ २५५ ॥
सुप्रतिष्ठावसानानां पादो ह्यर्धगणः स्मृतः ।
चतुर्भिश्चरणैस्तासां गणाः प्रोक्ताः षडेव च ॥ २५६ ॥
तथा चैवापकृष्टानां द्वौ गणावर्धमेव च ।
पदानां चैव विज्ञेया प्रमाणेन गणा दश ॥ २५७ ॥

पादेऽङ्कुडितोत्थितानां च त्रयोऽर्धं चैव कीर्तिताः ।
चतुर्दश गणाश्चैव कीर्त्तितास्तत्प्रमाणतः ॥ २५८ ॥
त्र्यस्राणां तु द्विपादानां मध्यषष्ठाः गणाः स्मृताः ।
पादतश्चैव विज्ञेयास्त्वेकादश गणा बुधैः ॥ २५९ ॥
पादाश्च चतुरस्राणां गणाः सार्धाष्टमाः स्मृताः ।
पादद्वयेऽपि केचित् स्युर्गणाः पञ्चदशैव तु ॥ २६० ॥
आद्यासु चतुरस्रासु द्व्यादिर्नवपरस्तथा ।
अक्षराणां भवेत् पिण्डो गुर्वादिलघु नैधनम् ॥ २६१ ॥
त्र्यस्रे त्वक्षरपिण्डे पञ्चादिर्नवपरश्च विज्ञेयः ।
चतुरस्रः सप्तादिर्यो दशपरश्च विज्ञेयः ॥ २६२ ॥
सर्वगुरुः पञ्चादिः सर्वलघुर्नवपरश्च विज्ञेयः ।
सर्वगुरुः सप्तादिस्त्रयोदशपरश्च सर्वलघुः ॥ २६३ ॥
एष त्वक्षरपिण्डो विज्ञेयो वै ध्रुवासु सर्वासु ।
गुणमात्रांशविकल्पं व्याख्यास्यामि द्विपादानाम् ॥ २६४ ॥
एकादशाद्यं त्र्यस्राणां चैकविंशतिनैधनम् ।
पादाक्षरकृतेः पिण्डो गुर्वादिर्लघु नैधनम् ॥ २६५ ॥
षोडशाद्यस्तथा पादे भवेद्विंशति नैधनम् ।
विज्ञेयश्चतुरस्राणां गुर्वादिर्गुरुनैधनम् ॥ २६६ ॥
शीर्षकाणां तु नियमो नैष पादविधानतः ।
गुरुर्गुर्वादिमध्यन्तस्तथा चैव लघुः स्मृतः ॥ २६७ ॥
त्र्यस्रायास्तु गणाः पञ्च सन्निपाताधिके पुनः ।
द्वौ पादौ सन्निपातस्तु ध्रुवाणां सम्प्रकीर्त्तितः ॥ २६८ ॥
द्रुतं च शीर्षकञ्चैव हित्वान्यानि भवन्ति वै ।
अक्षरपिण्डस्त्र्यस्रे वस्वाधिको नवपरश्च विज्ञेयः ॥ २६९ ॥
अष्टपराश्चतुरस्रे त्रयोदशपरश्च विज्ञेयः ।
सर्वगुरुः पञ्चादिः सर्वलघुर्नवपरश्च विज्ञेयः ॥ २७० ॥
सर्वगुरुरष्टादिस्त्रयोदशपरतश्च सर्वत्र लघु ।
एष ह्यक्षरपिण्डो विज्ञेयो वा ध्रुवाविधानज्ञैः ।

गणमात्रांशविकल्पं व्याख्यास्यामि ध्रुवाणां तु ॥ २७१ ॥
अर्धषष्टगणा ज्ञेया सन्निपातो ध्रुवास्त्वथ ।
मात्राश्च विंशतिश्चैव गुरुलघ्वक्षरान्विताः ॥ २७२ ॥
शीर्षको नाम नियमो भवेत्पादविधानतः ।
नाम्ना वृत्तविनिष्पन्नं कुर्याद्वै शीर्षकं बुधः ॥ २७३ ॥
गुरुगुर्वादिस्त्वथाल्पादिर्युग्मः स तु लघुस्तथा ।
चतुर्मानोऽक्षरो ज्ञेयो पूर्वच्छन्दोविकल्पकः ॥ २७४ ॥
अर्धाष्टमगणाः पादाः शीर्षकस्य भवन्ति हि ।
त्रिंशन्मात्राश्च विज्ञेया युग्मौजाक्षरजैः पदैः ॥ २७५ ॥
शीर्षके ह्येकाविंशत्याः षड्विंशतिपरस्तथा ।
अक्षराणां भवेत्पिण्डः पादे ह्येकत्र निर्दिशः ॥ २७६ ॥
युग्मौजमिश्रकाः खलु पादे कार्यास्तु चत्वारः स्युः ।
शीर्षके तु नियमेन पश्चाल्लघुसञ्चयः कार्यः ॥ २७७ ॥
त्रय एव गणास्तु मुखे लघवस्त्रय एवावसाने तु ।
मध्ये चेद् गुरुणी द्वे तच्चपलाशीर्षकं नाम ॥ २७८ ॥
पूर्वे ह्यर्धं तु गुरु ह्रस्वा द्वित्रा गणास्तु चत्वारः ।
पादे भवन्ति नियतं पश्चाल्लघुसञ्चयाः शेषाः ॥ २७९ ॥
एककलस्त्रिकलश्चतुष्कलस्तथाष्टकलः कार्याः ।
ध्रुवाविरामाः कार्याः प्रासादिक्यान्तराक्षेपैः ॥ २८० ॥
त्र्यस्रे विरामस्त्रिकलश्चतुरश्रश्चतुष्कलः ।
प्रावेशिक्या ध्रुवायास्तु नैष्क्रामिक्यास्तथैव च ॥ २८१ ॥
विरामो द्विकलो नित्यं अन्तरायास्तथैव च ।
पादान्ते हि विरामास्तु आक्षिप्तायाः प्रकीर्त्तिताः ॥ २८२ ॥
स्थिरायाश्च तथा ह्यर्धे प्रासादिक्यास्तथैव च ।
कलाकलार्धयोगेन गुरुलघ्वक्षरान्विताः ॥ २८३ ॥
त्रयो ध्रुवाणां संयोगात् विज्ञेया वृत्तसंश्रयाः ।
सर्वदीर्घः सर्वलघुर्गुरुलघ्वक्षरस्तथा ॥ २८४ ॥
गुरुप्रायास्तथा कार्या लघुप्राया द्रुतास्तथा ।

गुरुलघ्वक्षरप्रायाः प्रासादिक्यान्तरास्तथा ॥ २८५ ॥
एवं ध्रुवाणां कर्त्तव्या जातयो वृत्तसम्भवाः ।
अत ऊर्ध्वं प्रवक्ष्यामि शीर्षकाणां तु लक्षणम् ॥ २८६ ॥
आद्यमन्त्यञ्चतुर्थञ्च सप्तमं दशमं तथा ।
गुरूण्येकादशञ्चैव संकृतौ वृत्तसंश्रये ॥ २८७ ॥
लघून्यन्यानि शेषाणि पादे यस्मिन् भवन्ति हि ।
तद् ज्ञेयं शीर्षकं तज्ज्ञैः स्खलितं नामतो यथा ॥ २८८ ॥

पादसमुल्लदवीचीतरंगो पफलिवामणिणिकरजलो
वीचिपरघोणणिणादो पट्टुपवनललितदविहनकुलो ।
मीणकलकुलभीमतरघुगोघुभिदद्यणणणिससरवो
तुगमहीरसमाणणिरुद्धो रुन्धिद इव सपदि सलिलणिहो ॥२८९॥

आद्यचतुर्थे पञ्चमषष्ठे दशममथ च निधनगतम्
ये च तथान्ये ते च लघुत्वं यदि भवति तु चरणविधिविहिते ।
सा विकृतिस्था पुष्पसमुद्धा द्विजगणमुनिगणपरिपठिता
नामविकल्पाद् वृत्तकृता वै विवरं बहुमतपदनियमा ॥२९०॥

यथा—

पुंपविदाणं उद्धुअमाणो रथ इव ददगतिरभिविद्दो
पेंखअमाणो सलिलतलेसु तरुसु अविकिरिअ कमलदलं ।
मेहसमूहं लंदुअमाणो सरसियखुभिदं अजलकलो
भीमणिणादो चडववाही वाअदि वरतणु वणपवणो ॥२९१॥

आद्यमन्त्यं तृतीयं च पञ्चमं सप्तमाष्टमे ।
गुरूणि यस्याः पादे तु सा श्रेणीप्रकृतिर्यथा ॥ २९२ ॥

सागरं समुधंअतोरभइवलघुगतिअभिवदिप-
वदेसहमाणं कोकतरुसुजणअदिचगुणतलइ
तेणुजालअङ्किपतो।दिवसकिरमिदमिणमिन्दुकिरणो
बाधितुअसुलोअकामो विअदि वरुणसुभृपवणो ॥२९३॥

अन्त्ये पञ्चमे षष्ठे च सप्तमं दशमं परम् ।
चतुर्विंशतिके पादे सम्भ्रान्ता नाम सा यथा ॥ २९४ ॥

किरणसहस्सं विकिरमाणो फलिकमणिणिअररूइराणिहो
कुमुअवणाइं वाबाहअहाणो कुमुदाअणिरअसदवहू-
गणआणिवन्धूलो अपदिवोउडुगहणसमभिगतो-
उदयति चंदो रोहिणिकंदो णवसरसिकुमुदिदजणसुहदो॥२९५॥

पञ्चमं द्वादशञ्चैव दीर्घमन्त्यं त्रयोदशम् ।
उत्कृत्या यो भवेत्पादो वृत्तं वेगवती तु तत् ॥ २९६ ॥

यथा—

गगणतलंगणमहिरुहमाणो उडुगणगहणसमुपगतो
हलधरआणणरुचिररूपज्जवलजणसहिदमदकरकरको
किरणपडंसुअपिकिरमाणो रजदगिरिसहिरसदिवसवहू
उदयदि सपदि असुजजगदीवो कुमुदवणरुचिरमविलमलकरो॥२९७॥

प्रकृत्या पञ्चमान्त्ये च अष्टमैकादशे गुरु ।
द्वादशञ्चेति विज्ञेयं नामतश्चपला च सा ॥ २९८ ॥

यथा—

मुणिगणसंथविचथधिअतेजो विघुणिअ तिमिरवघणघतवकं
लपणाइव बोहअमाणो जदिगणमुणिघणपरिपाठितो
भुजगसहविवधिदपादो सुतविदकरणअसुसद्विसवपूक
करणिअरेहिपसदिअलोओ उदअदि वरतणु दिवसअरो२९९॥

पञ्च त्वादौ यत्रच दीर्घाण्यथ नवममपि च सदा
तं दीर्घञ्चान्त्यञ्चाष्टमयुतं लघु भवति रणविधौ संस्तुत्या स्यात्
वृत्तविधिज्ञैःश्रुतिसुखयतिपरविरचितविभवा
क्रौञ्चा नाम्ना छन्दसि चोक्ता द्विजगणमुनिगणपरिपठिता ॥३००॥

यथा—

एसो चंदो णिम्मलदेहो विधुणिअ गणमसिदपडणिलोकाणहदो
लोकवदीवोउडुणगहगणसमुपददोपासाणंकारअमाणो
सिदपडाणिवसणमिवविपुलोआलोअरञ्जअमाणोसिदपडाणिवसणमिवपुलो
आलोअरजअमाणोविअइवतणुगअलचले, ॥ ३०१ ॥

अष्टौ पादौ दीर्घाणि स्युर्यदि च हि भवति लघुगणः
भूयश्चोन्त दीर्घस्त्वेको यदि भवति पदि पदि पुनरपि तदा
मत्ताक्रीडा विद्युन्मालेत्यपि च कविभिरथबहुभिरुदिता
नाम्ना छन्दो वृत्ते ज्ञेया विकृतिगतिविधिषु नययुवतिरिहा सा ३०२॥

यथा—

एसो मे सोलोहोओअसणिमुरजपड्डुपडहसमरपोनाविवुजो
अलोपोहिथणघअड्डुलणिअअजलहरुहरओनाणावणो
तोडङ्गारोपविअरदिरूरकुसुमजधुरोछादतोलो
अचदोपइहरिणिवहइसुतणुलतो ॥ ३०३ ॥

एता ह्यष्टौ बुधैर्ज्ञेयाः शीर्षकाणां तु जातयः ।
पुनर्नर्कुटकानाञ्च लक्षणं सन्निबोधत ॥ ३०४ ॥
अष्टौ नर्कुटकानां तु विज्ञेया मूलजातयः ।
दर्शनं लक्षणञ्चासां नामानि च निबोधत ॥ ३०५ ॥
रथोद्धता बुद्बुदकमुद्गता वंशपत्रकम् ।
प्रमिताक्षरा केतुमती हंस्यास्यं तोटकं तथा ॥ ३०६ ॥
सप्तकं तृतीयकं यत्र चैव नवमं सनैधनम् ।
पादतो गुरु भवेद्रथोद्धता त्रैष्टुभं भवति तत्र नर्कुटम् ॥ ३०७ ॥
प्रथमं च द्वितीयञ्च सप्तमं नवमान्तिकम् ।
गुरूणि त्रैष्टुभे पादे नर्कुटं तद्यथोद्यतम् ॥ ३०८ ॥

यथा—

इंथआकमलङ्कभगहओ
ओअरेणुबीजरिदसारूपंतिआ
सारपड्डरगुणंपहतिआ
हाउदेसरवमिछंपआ ॥ ३०९ ॥

तृतीयं दशमञ्चान्त्यं नवमैकादशं गुरु ।
बुद्बुदञ्चातिजगती विज्ञेयं नर्कुटं तु तत् ॥ ३१० ॥

यथा—

तरुसडं अबुहिएसरोघण
णादभादिहिअमणोहरोअसुदीण

दीणागमणोणुकिदो
समपेइदायिणिकमलभोसपादव ॥ ३११ ॥

तृतीयं पञ्चमञ्चैव नवमं च तथैव च ।
चतुर्दशं द्वादशञ्च नैधनञ्च भवन्ति वै ॥ ३१२ ॥

यस्मिन्नष्टिकृते पादे गुरूण्येतानि नित्यशः ।
छन्दोज्ञैर्ज्ञेयमेतत्तु नत्कुटं ह्युद्गतं यथा ॥ ३१३ ॥

यथा—

कमलाअरं कुसुमिदहलभरसंकुलं
वरहाथिझह कलसीतअसाअरोपमं
असुमंअसुमंमन्दमहुअष्टरवममराणु
कुलदङ्कुरलोलुवेलतरिअसदागमेसरायन्तु ॥ ३१४ ॥

चतुर्थषष्ठदशमैः प्रथमनिधनकैः
भूषितमक्षरै तु कविभिः ।
गुरुभिः कविजनायितं तत्
खलु वंशपत्रपतितं चरणविधिगतम् ॥ ३१५ ॥

यथा—

सूदपणपुंलइतिलातिलअकुरसाहिणं
अचंवसालहोअत्रयिइद कुसुमुदिअं
माहवमासए वणे वणे जुवयिसहअरो
हिंडइ कोइलो सहाकरसासवमंहुरवो ॥ ३१६ ॥

तृतीयं पञ्चमञ्चैव नवमं नैधनं तथा
गरूण्येतानि पादे तु जागते प्रमिताक्षरम् ॥ ३१७ ॥

यथा—

महुकाणणे भमिअ एस चिरं
द्रवईसुहाइकसमंविहिआ
कमलाअरे सुरभिपङ्कअए
अवहीसए सरंइसवयि ॥ ३१८ ॥

आद्ये चतुर्दश च मात्रा
अन्यत्र च षोडश भवन्ति तथः ।
ज्ञेया हि सा विषमपादे
केतुमति नत्कुटं जातिः ॥ ३१९ ॥

यथा—

कुञ्जलवमससेविकपपक
अंश्मिदे मरणिआपकंविहा
अभीभ अभमरि
हरण परिसहिआ ॥ ३२० ॥

द्वितीयसप्तमान्त्याश्च चतुर्थकं
गुरु बुदावि षष्ठो दशमोपि वा ।
अथोदितो हि पादे ऽथ जागते
भवेदितं हंसास्यमिति संस्मृतम् ॥ ३२१ ॥

यथा—

हालहओणतिसमणिओ
सरंमिरमए बुलंअपङ्कएतरङ्गसं
गुलेचपअकालिएविलोह
अन्तओपकसणाहिअ ॥ ३२२ ॥

यदि षष्ठतृतीयकनैधनकै-
र्नवमो च भूमितमषट्पदं(?) ।
गुरुभिः सहितं त्विह तद्गदितं
भुवि तोटकमेव हि नत्कुटकम् ॥ ३२३ ॥

यथा—

अविरमेअतिभीमरवोभव
असजणणोचरकोसिआओसुवा
असएहिपहंथिदओ
सारिमगलकोधरअन्तुरिअ ॥ ३२४ ॥

नत्कुटानां बुधैर्ज्ञेया ह्येता वै मूलजातयः ।
आभ्यो विनिःसृता चान्या युग्मौजा विषमाक्षरा ॥ ३२५ ॥

चतुःषष्टिर्ध्रुवाणां च विज्ञेया मूलजातयः ।
समवृत्ताक्षरकृता ह्यतोऽन्या विषमाः स्मृताः ॥ ३२६ ॥
समवृत्तासु जायन्ते ध्रुवास्तिस्रस्तु नित्यशः ।
युग्मौजौ विषमाणान्तु पञ्चाशीतिः शते स्मृता ॥ ३२७ ॥
एतदेव परीमाणं विषमाणां प्रकीर्तितम् ।
सामान्या एव जायन्ते ध्रुवा विषमवादिका ॥ ३२८ ॥
स्वच्छा नाम्ना तु नामानि तासां कार्याणि वृत्तयः ।
एवन्तु जातयः प्रोक्ता नानावृत्तसमुद्भवाः ॥ ३२९ ॥
अत ऊर्ध्वं प्रवक्ष्यामि विकल्पान् पञ्चहेतुकान् ।
जातिस्थानं प्रमाणञ्च प्रकारो नाम चैव हि ॥ ३३० ॥
ज्ञेया ध्रुवाणां नाट्यज्ञैर्विकल्पाः पञ्चहेतुकाः ।
वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञिताः ॥ ३३१ ॥
समार्धविषमाणाञ्च प्रकारः परिकीर्तितः ।
षट्कलाष्टकले चैव प्रमाणं द्विविधे स्मृते ॥ ३३२ ॥
यथाहेतुकुलाचारैर्नृणां नाम विधीयते ।
एवं स्थानाश्रयोपेतं ध्रुवाणामपि चेष्यते ॥ ३३३ ॥
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ।
गानं पञ्चविधं ज्ञेयं श्रूयतां चास्य लक्षणम् ॥ ३३४ ॥
नानारसार्थयोगं नृणां यो गीयते प्रवेशेषु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥ ३३५ ॥
अङ्कान्ते निष्क्रान्ते या तु भवेत् प्रस्तुतस्तुतियोगे ।
निष्क्रामोपगतगुणा विद्यान्नैष्क्रामिकीं तां तु ॥ ३३६ ॥
क्रममुल्लङ्घ्य विधिज्ञैः क्रियते या द्रुततले तु नृत्तविधौ ।
आक्षेपिकी ध्रुवा सा द्रुता स्थिता वाऽपि विज्ञेया ॥ ३३७ ॥
या च रसान्तरमुपगतमाक्षेपवशात् प्रसादयति ।
रङ्गरागप्रसादजननी ज्ञेया प्रासादिकी सा तु ॥ ३३८ ॥
विषण्णे विस्मृते क्रुद्धे सुप्ते मत्तेऽथ सङ्गते ।
गुरुभारावसन्ने च मूर्च्छिते पतिते तथा ॥ ३३९ ॥

दोषप्रच्छादने या च गीयते सान्तरा ध्रुवा ।
ध्रुवाणां चैवं सर्वासां रसभावसमन्वितम् ॥ ३४० ॥
यथास्थानं प्रवक्ष्यामि यत्र योज्यं विभागतः ।
द्विविधं तु स्मृतं स्थानं परस्थात्मस्थसंश्रयम् ॥ ३४१ ॥
यथाक्षेपसमायुक्तं तच्च मे सन्निबोधत ।
बद्धे निरुद्धे पतिते व्याधिते साधिते मृते ।
अवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ॥ ३४२ ॥
औत्सुक्यं ह्यवहित्थे च चिन्तायां परिदेविते ।
श्रमे दैन्यविषादे च स्थिता कार्या ध्रुवा मता ॥ ३४३ ॥
एतेष्वेव तु भावेषु करुणावेदितेषु च ।
ध्रुवा ध्रुवा तु कर्त्तव्या तथा वेगसमाश्रया ॥ ३४४ ॥
तत्र प्रत्यक्षजं दुःखं मृताभिहितदर्शनात् ।
स्थिता तत्र प्रयोक्तव्या करुणे तु रसे बुधैः ॥ ३४५ ॥
उत्पाते संभ्रमे चैव ह्यमर्षेऽद्भुतदर्शने ।
विषादे च प्रमादे च रोषे सत्त्वप्रदर्शने ॥ ३४६ ॥
रौद्रवीरभयाद्येषु प्रत्यक्षावेदितेषु च ।
ध्रुवा द्रुतलया कार्या ह्यावेगे संभ्रमे तथा ॥ ३४७ ॥
प्रसादने संभ्रमे च तथानुस्मरणेऽपि च ।
तथातिशयवाक्येषु तथा च नवसङ्गमे ॥ ३४८ ॥
गर्वे च प्रार्थने चैव शृङ्गाराद्भुतदर्शने ।
ध्रुवा प्रसादिनी कार्या तज्ज्ञैर्मध्यलयाश्रया ॥ ३४९ ॥
शरीरव्यसने रोषे पुनः सन्धानकर्मणि ।
सानुबन्धा बुधैः कार्या हितज्ञैरन्तरा ध्रुवा ॥ ३५० ॥
अध्रुवास्तु प्रवेशास्तु गायतो रुदतस्तथा ।
सम्भ्रमे प्रेषणे चैव उत्पाते विस्मये तथा ॥ ३५१ ॥
एवमर्थविधिं ज्ञात्वा देशकालमतञ्च यत् ।
प्रकृतिं भावलिङ्गञ्च ततो योज्या ध्रुवा बुधैः ॥ ३५२ ॥
शीर्षकञ्चोद्धता चैव अनुबन्धो विलम्बिता ।

अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवाः स्मृताः ॥ ३२३ ॥
शिरःस्था नीयते ताद्धि यस्मात्ताद्धि च शीर्षकम् ।
उद्धता रुद्धता यस्मात् तस्माद्धेया ध्रुवा बुधैः ॥ ३५४ ॥
अन्यभावेऽपकृष्टा च द्रव्यहेतुषु बाध्यते ।
यस्मात्कारुण्यसंयुक्ता अपकृष्टा भवेत्ततः ॥ ३५५ ॥
आक्रीडितप्रवृत्तोऽयं चतुर्थो लोपकारकः ।
नाट्योपचारजनितः सोऽनुबन्धः प्रकीर्तितः ॥ ६५६ ॥
अड्डिता तूत्कटगुणा शृङ्गारसम्भवा ।
यस्मात्तस्मात्प्रसन्ना च तस्मादेवाड्डिता स्मृता ॥ ३५७ ॥
नातित्वरितसञ्चारा नाट्यधर्ममनुस्मृता ।
अविलम्बितसञ्चारा भवेदथ विलम्बिता ॥ ३५८ ॥
यतो लयवाद्ययतिपदवर्णस्तथाऽक्षरम् ।
अनुबन्धातिगीतेषु अनुबन्धा भवेत्तथा ॥ ३५९ ॥
या तु प्रावेशिकी दीप्ता सा कार्योद्धता नृणाम् ।
या समसितसञ्चारा भवेदथ विलम्बिता ॥ ३६० ॥
यतो लयवाद्ययतिपदवर्णस्तथाक्षरम् ।
अनुबन्धातिगीतेषु प्रकाराः षट् प्रवेशजाः ॥ ३६१ ॥
शीर्षकञ्चोद्धता चैव देवपार्थिवयोः स्मृते ।
दिव्यापार्थिववेश्यानां स्त्रीणां योग्या तथाड्डिता ॥ ३६२ ॥
मध्यमानां प्रवेशे च ज्ञेया द्रुतविलम्बिता ।
नीचानां चैव कर्तव्यं नृणां नत्कुटखञ्जका ॥ ३६३ ॥
खञ्जनत्कुटकञ्चैव स्थाने प्रासादिके तथा ।
तस्माल्ललितभावत्वाद्धास्यशृङ्गारयोर्यतः ॥ ३६४ ॥
कुर्यान्नीचे तथा चैव अनुबन्धाश्रये तु सा ।
स्त्रीणां राजन्यवैश्यानां अपकृष्टास्तथैव च ॥ ३६५ ॥
सन्निपातास्तु चत्वारः प्रावेशिक्या भवन्ति हि ।
शीर्षादि सन्निपाताः स्युः शीर्षकं षट्परं स्मृतम् ॥ ३६६ ॥
स्थितवव्यड्डिता वापि नीचे·········कारयेत् ।

सर्वभावाश्रयगतौ तेषां कार्यं तु नत्कुटम् ॥ ३६७ ॥
त्रयो भावा भवन्त्येषां हास्यवीरभयाश्रयाः ।
एवं भावान् विदित्वा तु ध्रुवा योज्या प्रयोक्तृभिः ॥ ३६८ ॥
वस्तुप्रयोगं प्रकृतं रसभावान्वितं च यत् ।
देशकालमवस्थां च ज्ञात्वा योज्या सदा बुधैः ॥ ३६९ ॥
वस्तुदेशसमर्थं तु नगरारण्यसम्भवम् ।
प्रयोगश्चैव विज्ञेयो दिव्यमानुषसंश्रयः ॥ ३७० ॥
उत्तमाधममध्या तु त्रिविधा प्रकृतिः स्मृता ।
रसभावौ तु पूर्वोक्तौ ऋतुः कालकृतस्तथा ॥ ३७१ ॥
शिशुयौवनवृद्धत्वं वयश्चैव प्रकीर्तितम् ।
कक्ष्यादिभेदजनितो देशस्तु विविधः स्मृतः ॥ ३७२ ॥
कालो रात्रिदिनकृतो मासपक्षविनिर्मितः ।
अवस्था चैव विज्ञेया सुखदुःखकृता तथा ॥ ३७३ ॥
स्थानान्येतानि तु बुधैर्नानावस्थानि नित्यशः ।
प्रयोगे तु प्रयोज्यानि रसभावौ समीक्ष्य तु ॥ ३७४ ॥
यानि वाक्यैस्तु न ब्रूयात्तानि गीतैरुदाहरेत् ।
गतैरेव हि वाक्यार्थैरन्यैः प्रातिबलाश्रयैः ॥ ३७५ ॥
ध्रुवाणामाश्रयाः कार्या ह्यौपम्यगुणसंश्रयाः ।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ॥ ३७६ ॥
चन्द्राग्निसूर्यपवनदैवपार्थिवयोस्तथा ।
दैत्यानां राक्षसानां च मेघपर्वतसागराः ॥ ३७७ ॥
सिद्धगन्धर्वयक्षाणां ग्राहेभवृषभाः स्मृताः ।
तपःस्थितानां सर्वेषां सूर्याग्निपवनः स्मृताः ॥ ३७८ ॥
एतेषां चैव या नार्यस्तासामौपम्यसंश्रिताः ।
विद्युदुल्कार्करामश्च दिव्यानामपि च स्मृताः ॥ ३७९ ॥
देवतायाः प्रयोज्यास्तु नृपाणामपि च ते मताः ।
नागसिंहवृषाश्चैव नैते दिव्येषु कीर्तिताः ॥ ३८० ॥
वारणे राजसिंहश्च नृपाणामपि चेष्यते ॥

महिषा रुरुसिंहाश्च क्रव्यादाः पशवश्च ये ।
हिंस्रसत्त्वेषु ते कार्या यक्षराक्षसभूतजाः ॥ ३८१ ॥
सारसाः शिखिनः क्रौञ्चाश्चक्राह्वाः कुमुदाकराः ।
मध्यमानां प्रयोक्तव्या औपम्यगुणसंश्रयाः ॥ ३८२ ॥
कोकिलः षट्पदो ध्वाङ्क्षः कुररः कौशिकोऽपरः ।
पारावतः सकालम्बो अधमेषु प्रयोजितः ॥ ३८३ ॥
एवमेषां यथोक्तानां स्त्रियामपि भवन्ति हि ।
उत्तमाधममध्यानां तासाञ्चैव निबोधत ॥ ३८४ ॥
शर्वरी वसुधा ज्योत्स्ना नलिनी तरुणी नदी ।
नृपस्त्रीणां भवन्त्येता औपम्यगुणसंश्रयाः ॥ ३८५ ॥
दीर्घिका कुररी वल्ली सारसी शिखिनी मृगी ।
मध्यमानां भवन्त्येता वेश्यादीनां तु नित्यशः ॥ ३८६ ॥
षट्पदीं कुक्कुटीं ध्वाङ्क्षीं परपुष्टाञ्च योजयेत् ।
अधमानां ध्रुवास्वेताः प्रयोज्यास्तु प्रयोक्तृभिः ॥ ३८७ ॥
सत्पथा यमजाः कार्याः श्वपाला ये भवन्ति हि ।
प्रावेशिक्यां बुधैरेव नैष्क्रामिक्यां तथैव च ॥ ३८८ ॥
प्रावेशिक्याश्रयो ये च पूर्वाह्णे चैव ते स्मृताः ।
नक्तंदिवसमुत्थास्तु नैष्क्रामिक्याश्च कालजाः ॥ ३८९ ॥
साम्याः पूर्वाह्णकाले तु मध्याह्ने दीप्तसंश्रयाः ।
अपराह्णे तथा मध्याः सन्ध्यायां करुणाश्रयाः ॥ ३९० ॥
गमनार्थं हि ये प्रोक्ताः प्रावेशिक्यां भवन्ति हि ।
स्थावरा ये च सम्प्राप्ता आक्षेपिक्याश्रया हि ते ॥ ३९१ ॥
आक्षेपिक्याश्रिताः सर्वे द्रुताः स्थितकृतास्तथा ।
आक्षेपो ह्येवमेव स्युर्द्रुताः स्थितगताश्रयाः ॥ ३९२ ॥
रोषामर्षसमुद्भूताः शोकाद्भुतभयानकाः ।
यद् द्रव्यं वसुधासंस्थं मृतदैवतमानुषे ॥ ३९३ ॥
तत्सर्वमपनेयन्तु गाने युक्तोपमाश्रये ।
स्थावरे स्थावरं कुर्यात् गतार्थेषु चलं तथा ॥ ३९४ ॥

सुखदुःखकृतान् भावानौपम्यगुणसंश्रयान् ॥ ३९५ ॥
भूमिरथवाजिकुञ्जरमृगपक्षिशिविकाविमानयानानाम् ।
गतिविक्रमं हि दृष्ट्वा कर्त्तव्याथ ध्रुवा तज्ज्ञैः ॥ ३९६ ॥
रथसिंहपक्षिवारणविमानशिविकान्तरिक्षयानेषु ।
द्रुतपदवर्णविशेषा कर्त्तव्या वै ध्रुवा तज्ज्ञैः ॥ ३९७ ॥
ओजःकृता हि ये वै गुरुवर्णा वृषगजसिंहर्क्षाः ।
सारसवानरहंसैस्तथा मयूरैश्च कर्त्तव्याः ॥ ३९८ ॥
द्रुतगमनेन लघुवर्णविलम्बितकृते तु दीर्घवर्णकृताः ।
एवं स्थिते द्रुतानां ज्ञात्वा भावं द्रुताः कार्याः ॥ ३९९ ॥
नास्ति किञ्चिदवृत्तं हि पदं गानकृताश्रयम् ।
तस्माद्गानमभिप्रेक्ष्य तद्वृत्तं योजयेद[1] ध्रुवम् ॥ ४०० ॥
तस्माद्वाहनगत्यर्था ध्रुवा कार्याक्षरैरथ ।
अङ्गानां समता यत्र भाण्डवाद्ये भविष्यति ॥ ४०१ ॥
तद्वृतं वाहनगतौ ध्रुवामा[2]ने विधीयते ।
तद्वृत्तं तु भवेद्गानं अङ्गपातसमं तथा ॥ ४०२ ॥
पूर्वगानं ततो वाद्यं ततो वृत्तं प्रयोजयेत् ।
गीतवाद्याङ्गसंयोगः प्रयोग इति शंसितः ॥ ४०३ ॥
हृदयस्थास्तु ये भावाः सोऽङ्गैरथ निर्वृत्ताः ।
निवृत्यङ्कुरसूचा सु कार्यास्तेऽभिनयान्विताः ॥ ४०४ ॥
तत्र प्रासादिकी योज्या प्रकर्षाथ गुणोद्भवा ।
आकाशपुरुषो यत्र यत्र चाकाशभाषणम् ॥ ४०५ ॥
अन्वर्था तत्र कर्त्तव्या ध्रुवा ह्याभाषणाश्रया ।
प्रासादिक्याश्रयाश्चापि ईर्ष्याक्रोधाश्रयापि वा ॥ ४०६ ॥
शृङ्गाररसमासाद्य ध्रुवान्वर्था प्रयुज्यते ।
यानि प्रासादकानि स्युः स्थानानि रससंश्रयात् ॥ ४०७ ॥
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी त्वथ ।
भाषा तु शूरसेनी स्यात् ध्रुवाणां सम्प्रयोजयेत् ॥ ४०८ ॥

---

१ तु रता भवेत्—क। २ पादे—ख।

न भाषाश्चैव मागध्यात् कर्त्तव्यं नत्कुटं बुधैः ।
दिव्यानां संस्कृताङ्गानां प्रमाणैस्तु विधीयते ॥ ४०९ ॥
अर्धसंस्कृतमेवं तु मानुषाणां प्रयोजयेत् ।
ये त्वौपम्यकृतौ दिव्या यदि तेषां प्रयोगतः ।
प्रदेशे नाटकेऽपि स्यात् कार्यास्तेषां समाश्रयः ॥ ४१० ॥
यस्त्वेषां सात्त्विके भावः कर्म सङ्कीर्त्तनं च यत् ।
तत्कार्यं गानयोगे तु प्रमाणं विधिसंश्रयम् ॥ ४११ ॥
मालावृत्तं पुटोपेतं विश्लोकश्चूलिकापि च ।
उद्गीतापरवक्त्रे च कर्त्तव्यानि प्रयोक्तृभिः ॥ ४१२ ॥
छन्दःप्रमाणसंयुक्तं दिव्यानां गानमिष्यते ।
स्तुत्याश्रयेण तत्कार्यं कर्म सङ्कीर्त्तनादपि ॥ ४१३ ॥
ध्रुवापादविधौ कार्यं यच्चोपौम्यगुणाश्रयम् ।
माला वक्त्रं पुटं वृत्तं विश्लोकश्चूलिका तथा ॥ ४१४ ॥
उद्गाताऽपरवक्त्रं च कर्तव्यानि प्रयोक्तृभिः ।
विधानं छन्दसामेषां मया पूर्वमुदाहृतम् ।
जयाशीर्वादयुक्तानि कार्याण्येतानि दैवते ॥ ४१५ ॥
ऋग्गाथापाणिका ह्येषां बोद्धव्यास्तु प्रमाणतः ।
विश्राव्यश्चैव यस्मात्तु तस्माद्गीतेषु योजयेत् ॥ ४१६ ॥
गान्धारषड्जमध्यमपञ्चमयुक्ताश्च जातयो याश्च ।
एभिः प्रमाणगानां कर्त्तव्यं दैवतोपेतम्[1] ॥ ४१७ ॥
प्रासादिकं स्थितश्चैव नैष्क्रामं संप्रवेशयेत् ।
प्रमाणं परिकर्त्तव्यं चतुःस्थानसमन्वितम् ॥ ४१८ ॥
प्रायशः संस्कृतं योज्यमनुष्टुप्छन्दसा कृतम् ।
नाना दैवतकार्येषु अन्तरायं विना तथा ॥ ४१९ ॥
वक्त्रं चापरवक्त्रं च माला चेति प्रवेशजम् ।
पुटं च चूलिका चैव नैष्क्रामिकमपीष्यते ॥ ४२० ॥
प्रासादिक्युद्गतावृत्तं स्थितश्चानुष्टुबिष्यते ।

---

१ धै०—ख ।

स्थानान्येतानि योज्यानि प्रामाण्यस्य बुधैरथ ॥ ४२१ ॥
यदनुष्टुप्कृतं गानं स्थितस्थानसमाश्रयम् ।
शापभ्रंशाश्रयकृतं चिन्तादुःखसमन्वितम् ॥ ४२२ ॥
गुरुप्रायाक्षरकृतं करुणस्वरजातिजम् ।
प्रकृष्टवर्णबहुलं स्थितस्थानं भवेत्तु तत् ॥ ४२३ ॥
उन्मादनार्थं नृणान्तु तथापहरणेन च ।
दिव्यान्वयानां कर्त्तव्यं स्थानमानुष्टुभाश्रयम् ॥ ४२४ ॥
मानुषेष्ववतीर्णस्य दिव्यस्य स्मरणाश्रयम् ।
प्रमाणगानं कर्त्तव्यं दिव्येष्वेवं प्रयोक्तृभिः ॥ ४२५ ॥
तस्यैव दुःखविषयं शोकसंतापनाशनम् ।
प्रमाणगानं कर्त्तव्यं शोकावस्थाक्षयाश्रयम् ॥ ४२६ ॥
ध्रुवाणां हि विधानस्य आश्रयस्य विभागशः ।
यथा प्रयोयः कर्त्तव्यः तच्च मे सन्निबोधत ॥ ४२७ ॥
स्थापिते भाण्डविन्यासे त्रिसाम्नि संप्रकीर्त्तिते ।
आश्रावणात् यत् कर्त्तव्यं बहिर्गीतं प्रयोजयेत ॥ ४२८ ॥
पूर्वरङ्गप्रवृत्तेषु नाट्यद्वारं प्रयोजयेत् ।
ध्रुवा यत्र प्रकर्त्तव्या प्रकृतीनां प्रवशेजा ॥ ४२९ ॥
गत्याश्रयेण नाट्यज्ञैर्गानस्य परिवर्त्तकम् ।
परिक्रामात्तु रङ्गस्य तथैवार्थवशेन तु ॥ ४३० ॥
परिवर्त्ताः प्रयोक्तव्याः षडेव तु बुधैरथ ।
तत्र पाताः प्रयोक्तव्याः एकाविंशतिरेव तु ॥ ४३१ ॥
त्र्यस्रा वा चतुरस्रा वा ध्रुवा नाट्यप्रयोक्तृभिः ।
त्रिकलं पादपतने त्र्यस्रायां च विधीयते ॥ ४३२ ॥
चतुरस्रं तु पतनं चतुरस्रा गतिर्भवेत् ।
उत्तमे चतुरस्रा च त्र्यस्रा चैव तु मध्यमे ॥ ४३३ ॥
खञ्जनर्कुटकश्चैव ह्यधमेषु प्रोजयेत् ।
त्रिविधिस्वरगतो ह्येष भवेत् श्वसनपातने ॥

१ प्रायेण—ख ।

संभ्रमोत्पातरोषेषु कलार्धकलमिष्यते ॥ ४३४ ॥
त्रिकलाः द्विकलैककलाश्चतुष्कलाश्चैव पादविन्यासः ।
तत्र च साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४३५ ॥
नह्येककला द्विकला ध्रुवाविरामा भवन्ति नाट्यविधौ ।
तस्मात् साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४३६ ॥
पूर्वोक्ता भावस्थिताश्रया द्रुताश्रया वापि ।
तेषां पातनिपातं ज्ञात्वा साम्यं बुधैः कार्यम् ॥ ४३७ ॥
अपटाक्षेपकृतादत्यधिका हर्षशोकरोषाद्याः[1] ।
तत्र परिच्छेदसमः कार्यस्तज्ज्ञैः प्रवेशस्तु[2] ॥ ४३८ ॥
एवमेता बुधैर्ज्ञेयाः प्रयोगे परिकीर्त्तिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ॥ ४३९ ॥
अभाण्डमेकं गानस्य परिवर्त्तं प्रयोजयेत् ।
यच्चतुर्थे सन्निपाते तस्य भाण्डग्रहो भवेत् ॥ ४४० ॥
सन्निपातग्रहः कश्चित् काश्चिद्वै तर्जिनीग्रहः ।
तथाकाशग्रहः काश्चित् ध्रुवागाने भवन्ति हि ॥ ४४१ ॥
ध्रुवायास्तु ग्रहा यस्मात् कालताललयान्विताः ।
स तु भाण्डेन कर्त्तव्यः तज्ज्ञैर्गतिपराक्रमे ॥ ४४२ ॥
शीर्षकस्योद्धतायाश्च प्रदेशिन्या ग्रहो भवेत् ।
विलम्बिताड्डितायाश्च सन्निपाते तृतीयके ॥ ४४३ ॥
नर्कुटस्याडडितायाश्च प्रासादिक्यास्तथैव च ।
सन्निपाते ग्रहे कार्यः द्रुतायाश्चोद्धतो ग्रहः ॥ ४४४ ॥
नैष्क्रामिक्यानुबन्धानां ग्रहो भाण्डसमो भवेत् ।
न तेषां परिवर्त्तस्तु कार्यो गानप्रयोक्तृभिः ॥ ४४५ ॥
नर्कुटस्य तु चत्वारो ग्रहाः कार्या प्रयोक्तृभिः ।
सान्निपातश्च शम्या च तालश्चाकाशगस्तथा ॥ ४४६ ॥
संभ्रमावेगहर्षेषु प्रवेशा ये भवन्ति हि ।
ग्रहो गानसमस्तत्र उद्घात्यः संप्रकीर्त्तितः ॥ ४४७ ॥

---

१ ०द्८०--क ।   २ ०दे०--ख ।

भूषणवासः पतने वैकल्पे विस्तृते परिश्रान्ते ।
दोषाच्छादनहेतोरुद्धात्योरन्तरायास्तु ॥ ४४८ ॥
एवं प्रयोक्तृभिः कार्याः ध्रुवाणां सन्निवेशनम् ।
यथास्थानाश्रयोपेतं यथावृत्तकृतं तथा ॥ ४४९ ॥
यथावर्णादृते चक्रं शोभते न निवेशनम् ।
एवमेनं विना गानं नाट्यं रागं न गच्छति ॥ ४५० ॥
पूर्वरङ्गविधाने तु कर्त्तव्यो गानजो विधिः ।
दैवपूजाधिकारश्च तत्र सम्परिकीर्त्तितः ॥ ४५१ ॥
ततश्च काव्यबन्धेषु नानाभावसमाश्रयम् ।
ग्रामद्वयं न कर्त्तव्यं तथा साधारणाश्रयम् ॥ ४५२ ॥
मुखे तु मध्यमग्रामः षड्जं प्रतिमुखे स्मृतः ।
साधारितं तथा गर्भे मर्शे कैशिकमध्यमः ॥ ४५३ ॥
कैशिकञ्च तथा कार्यं गानं निर्वहणे बुधैः ।
सन्धिवृत्ताश्रयश्चैव रसभावसमन्वितः ॥ ४५४ ॥
यथारसकृता याः स्युः ध्रुवाः प्रकरणाश्रयाः ।
नक्षत्राणीव गगनं नाट्यमुद्योतयन्ति ताः ॥ ४५५ ॥

पूर्णस्वरं तत्र विलम्बिवर्णं
त्रिस्थानशोभं त्रितयं त्रिमात्रम् ॥
रक्तं समं श्लक्ष्णमलंकृतं च
सुखप्रयुक्तं मधुरञ्च गानम् ॥ ४५६ ॥
गीते प्रयत्नः प्रथमं तु कार्यः
शय्या हि नाट्यस्य वदन्ति गीतम् ॥
गीते च वाद्ये च हि संप्रयुक्तो
नाट्यप्रयोगो न विपत्तिमेति ॥ ४५७ ॥

एतदुक्तं मया सम्यक् ध्रुवाणां लक्षणं महत् ।
अत ऊर्ध्वं प्रवक्ष्यामि गातृवादकयोर्गुणान् ॥ ४५८ ॥
गाता प्रत्यग्रवया स्निग्धस्वरमधुरमांसलोपचितः ।
लयतालकलामानप्रमाणयोगेषु तत्त्वज्ञः ॥ ४५९ ॥

रूपगुणकान्तिसंस्थानधैर्यमाधुर्यसम्पन्नः।
पेशलमधुरस्निग्धानुनादसमरक्तशुभकण्ठः॥ ४६० ॥
अवसितशरीरमनसो सुनिविष्टो मधुरसञ्चारः।
अन्योन्यार्पितकरणा विज्ञेया गायिकाः श्यामाः॥ ४६१ ॥
सुनिविष्टपाणिलययतिविशारदोपमितमधुरलघुहस्ताः।
गात्रगुणैश्चोपेता अवहितमनसो सुसङ्गीतौ॥ ४६१ ॥
स्फुटरचितचित्रकरणौ जितश्रमौ रक्तकण्ठवीणौ च।
चित्रादिवाद्यकुशलौ वीणाया वादकौ भवतः॥ ४६२ ॥
अपि चलितमविच्छिन्नं वर्णालङ्कारमोदकं मधुरम्।
स्निग्धं दोषविहीनं प्रच्छादकवैणवं वाद्यम्॥ ४६३ ॥
बलवानवहितबुद्धिर्गीतलयज्ञस्तथा सुसङ्गीतः।
श्रावकमधुरास्निग्धो दृढानिलो वंशवादी स्यात्॥ ४६४ ॥
प्रायेण तु स्वभावात् स्त्रीणां गानं नृणां च वाद्यविधिः।
स्त्रीणां स्वभावमधुरः कण्ठो नृणां बलत्वञ्च॥ ४६५ ॥
यः स्त्रीणां वाद्यगुणो भवति नृणाञ्च गानमधुरत्वम्।
ज्ञेयः सोऽलङ्कारो नहि स्वभावो भवति तेषाम्॥ ४६६ ॥
यद्यपि पुरुषो नेता गीतविधानं तु लक्षणोपेतम्।
माधुर्यगुणविहीनं शोभाजननं न तद्भाति॥ ४६७ ॥
एवं स्वभावसिद्धं स्त्रीणां गानं नृणाञ्च पाठ्यविधिः।
अपरस्परसम्पन्नं कार्यं वासयनिष्पन्नम्(?)॥ ४६८ ॥
प्रायेण दानवासुररक्षोयक्षोरगा विविधचेष्टाः।
वाक्याश्रिताः प्रयोगे भवन्ति पुरुषाङ्गनाबद्धाः॥ ४६९ ॥
स्त्रीभिः कार्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः।
यस्मात् स्वभावोपहितो विलासः स्त्रीकृतो भवेत्॥ ४७० ॥
नित्यं व्यायामयोग्याभिर्नृणां भवति सौष्ठवम्।
स्वभवतस्तु मधुरं स्त्रीणामङ्गविचेष्टितम्॥ ४७१ ॥
एवं स्त्रीणान्तु पुरुषैरुपदेष्टव्यमेव हि।
गानं वाद्यञ्च पाठ्यं च नानाप्रकृतिसम्भवम्॥ ४७२ ॥

अवैस्वर्यं भवेत् स्त्रीणां गानवाद्यक्रियास्वथ ।
नहि तत् कर्णमाधुर्यं पुरुषेषु भविष्यति ॥ ४७३ ॥
स्मृतिर्मतिश्च मेधा च ऊहापोहस्तथैव च ।
शिष्यनिष्पादनश्चैव षडाचार्यगुणाः स्मृताः ॥ ४७४ ॥
मेधा स्मृतिर्गुणा श्लाघा रागः सङ्घर्ष एव च ।
उत्साहश्च षडेवैते शिष्यस्यापि गुणाः स्मृता ॥ ४७५ ॥
श्रावकोऽथ घनस्निग्धो मधुरस्वरधानवान् ।
त्रिस्थानशोभीत्येवं च षट् कण्ठस्य गुणाः स्मृताः ॥ ४७६ ॥
दूरात्तु श्रूयते यस्मात् तस्मात् श्रावक उच्यते ।
श्रावकः सुस्वरो यस्तु न विक्षिप्तो घनः स्मृतः ॥ ४७७ ॥
स्वराधिको विहीनो वा ह्यविरक्तो विधानवान् ।
सुश्रावः सत्त्वपुरुषस्निग्धस्तज्ज्ञैः प्रकीर्त्तितः ॥ ४७८ ॥
महास्थानेऽप्यवैस्वर्यं यस्याऽसौ मधुरः स्मृतः ॥
त्रिस्थानेऽपि हि माधुर्यं यस्य नित्यं विधीयते ।
त्रिस्थानशोभीत्येवं तु स कण्ठो मधुरः स्मृतः ॥ ४७९ ॥
कपिलोऽप्यवस्थितः काकी तुम्बी संदष्टकस्तथा ।
समासतस्त्वमी पञ्च कण्ठदोषा भवन्ति हि ॥ ४८० ॥
वैस्वर्यं तु भवेद्यत्र तथा गुरुकरार्पितम् ।
तथा च विस्वरश्चैव स काकीति हि संज्ञितः ॥ ४८१ ॥
नासागतस्वरो यस्तु विज्ञेयः स तु तुम्बकः ।
सन्दष्टदशनो यस्तु स सन्दष्ट इति स्मृतः ॥ ४८२ ॥
एते गुणाश्च दोषाश्च कण्ठजा गदिता मया ।
ध्रुवाविधानञ्च मया स्वरतालपदात्मकम् ॥ ४८३ ॥

गान्धर्वमेतत् कथितं मया हि
पूर्वं यदुक्तं त्विह नारदेन ।
कुर्याद्य एवं मनुजः प्रयोगं
सम्मानमग्र्यं कुशलेषु गच्छेत् ॥ ४८४ ॥

इति भारतीये नाट्यशास्त्रे ध्रुवाविधानं नाम द्वात्रिंशोऽध्यायः ॥३२॥

# अथ त्रयस्त्रिंशोऽध्यायः ।

अथातोद्यविधिस्त्वेष मया प्रोक्तः समासतः ।
अवनद्धविभागेन लक्षणं कर्म चैव हि ॥ १ ॥
आतोद्यानां प्रवक्ष्यामि विधिं वादनमेव च ।
मृदङ्गपणवानाञ्च दर्दुरस्य तथैव च ॥ २ ॥
गान्धर्वञ्चैव वाद्यञ्च स्वातिना नारदेन च ।
विस्तारगुणसम्पन्नमुक्तं लक्षणकर्मतः ॥ ३ ॥
अनुवृत्त्या तथा स्वातेरातोद्यानां समासतः ।
पौष्कराणां प्रवक्ष्यामि निर्वृत्तिं सम्भवं तथा ॥ ४ ॥
अनध्याये कदाचित्तु स्वातिर्वै दुर्दिने दिने ।
जलाशयं जगामाथ सलिलानयनं प्रति ॥ ५ ॥
तस्मिन् परो निषण्णे तु प्रहृष्टः पाकशासनः ।
धाराभिर्महतीभिश्च कर्तुमेकार्णवं जगत् ॥ ६ ॥
पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करीणां कलरवः पत्रिणामभवत्तदा ॥ ७ ॥
तेषां धीरं कलं शब्दं निशम्य सहसा मुनिः ।
आश्चर्यमिति सम्प्राप्तं अवधारितवान् स्वयम् ॥ ८ ॥
*ज्येष्ठमध्यकनिष्ठं तु पत्राणामवधार्य च ।
गम्भीरमधुरं हृद्यमाजगामाश्रमं ततः ॥ ९ ॥
गत्वा सृष्टं मृदङ्गानां पुष्करानसृजत्ततः ।
पणवं दर्दुरांश्चैव सहितो विश्वकर्मणा ॥ १० ॥
देवानां दुन्दुभिं दृष्ट्वा चकार मुरजं ततः ।
आलिङ्ग्यमूर्ध्वकं चैव तथैवाङ्किकमेव ॥ ११ ॥
क(च)र्मणा चावनद्धांस्तान्मृदङ्गान्दर्दुरांस्तथा ।
तन्त्रीभिः पणवं चैवमूहापोहविशारदः ॥ १२ ॥

---

* एतच्चिन्हमध्यगतोऽशः कपुस्तके नोपलभ्यते ।

भूयश्चान्यान्यपि तथा काष्ठायसकृतान्यथ ।
झल्लरीपटहादीनि चर्मनद्धानि तानि तु ॥ १३ ॥
आतोद्यन्समया(?)ये तु यानि वाद्यानि वादकैः ।
अङ्गप्रत्यङ्गयोगेन गदतो मे निबोधत ॥ १४ ॥
विपञ्ची चैव चित्रा च दारवीष्वङ्गसंज्ञिते ।
कच्छपीघोषकादीनि प्रत्यङ्गानि तथैव च ॥ १५ ॥
मृदङ्गो दर्दुरश्चैव पणवेष्वङ्गसंज्ञिते ।
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च ॥ १६ ॥
अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि ।
शङ्खस्तु डक्किनी चैव प्रत्यङ्गे परिकीर्तिते ॥ १७ ॥
नास्ति किञ्चिदनायोज्यमातोद्यं दशरूपके ।
रसभावप्रयोगं तु ज्ञात्वा योज्यं विधानतः ॥ १८ ॥
उत्सवे चैव याने च नृपाणां मङ्गलेषु च ।
शुभकल्याणयोगे च विवाहकरणे तथा ॥ १९ ॥
..........उत्पन्ने सङ्ग्रामे शुद्धसङ्कुले ।
ईदृशेषु च कार्येषु सर्वातोद्यानि वादयेत् ॥ २० ॥
स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत् ।
उत्थानकाव्यबन्धेषु सर्वातोद्यानि वादयेत् ॥ २१ ॥
अङ्गानां तु समत्वार्थं छिद्रप्रच्छादने तथा ।
विप्राप्तिहेतोः शोभार्थं भाण्डवाद्यं....जायते ॥ २२ ॥
तत्रावनद्धं वक्ष्यामि विधिस्वरसमुत्थितम् ।
नानाकरणसंयुक्तं मानजातिविभूषितम् ॥ २३ ॥
यावन्ति वम(चर्म)नद्धानि ह्यातोद्यानि द्विजोत्तमाः ।
तानि त्रिपुष्कराद्यानि त्ववनद्धमिति स्मृतम् ॥ २४ ॥
एतेषां तु पुनर्भेदाः शतसंख्या प्रकीर्तिताः ।
किंशु(?)त्रिपुष्करस्यत्ते(?) लक्षणं प्रोच्यते मया ॥ २५ ॥
शेषाणां कर्मबाहुल्यं यस्मादास्मिन्न दृश्यते ।
न स्वरास्तत्र हाराश्च नाक्षराणि न मार्जना ॥ २६ ॥

भेरीपटहझझ्झाभिस्तथा दुन्दुभिडिण्डिमैः ।
शैथिल्यादायतत्वाच्च स्वरे गाम्भीर्यमिष्यते ॥ २७ ॥
प्रायशः स्वानि कार्याणि कालं कार्यं समीक्ष्य तु ।
किं तु त्रिपुष्करस्यास्य श्रूयतां यो विधिः स्मृतः ॥ २८ ॥
वास्वात्मको भवेच्छन्दः स वापि द्विविधः स्मृतः ।
स्वरवांश्चैव विज्ञेयस्तथा चैवाभिधानवान् ॥ २९ ॥
तत्राभिधानवान्नाम नानाभावसमाश्रयः ।
स्वरवानपि विज्ञेयो नानातोद्यसमाश्रयः ॥ ३० ॥
शारीर्यामिव वीणायां स्वराः सप्त प्रकीर्तिताः ।
तेभ्यो विनिःसृताश्चैवमातोद्येषु द्विजोत्तमाः ॥ ३१ ॥
पूर्वं शरीरादुद्भूताः स्वरा गच्छन्ति दारवीम् ।
ततः पुष्करतं(?) चैवमनुयान्ति घनं पुनः ॥ ३२ ॥
एषां बाह्यैरणैर्ज्ञेया प्रहारा वचनाश्रयाः ।
युद्धादिभिः सदा योस्या(ज्या) वीणा वाद्येषु योक्तृभिः ॥३३॥
शारीर्यामथ वीणायां झिटुं जगति कादिति(?) ।
भवेद्वाष्करणं तत्र नानाकरणसयुंतम् ॥ ३४ ॥
यं यं गाता स्वरं गच्छेत्तमातोद्यैः प्रयोजयेत् ।
यतिपाणिसमायुक्तं गुरुलघ्वक्षरान्वितम् ॥ ३५ ॥
पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम् ।
विधानं तु प्रवक्ष्यामि दर्दुरस्य तथैव च ॥ ३६ ॥
षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च ।
विलेपनं षट्करणं त्रियति त्रिलयं तथा ॥ ३७ ॥
त्रिगतं त्रिप्रका(चा)रं च त्रियोगं च त्रिपाणिकम् ।
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ॥ ३८ ॥
विंशत्यलंङ्कारं च त(?) तथाष्टादशजातिकम् ।
एभिः प्रकारैः सम्पन्नं वाद्यं पुष्करजं भवेत् ॥ ३९ ॥

तत्र षोडशाक्षरमिति यत्तदनुव्याख्यास्यामः —

क-ख-ग-घ,ट ठ ड ढ,त-थ-द-ध-य-र ल-ह,इति षोडशाक्षराणि स्युः।

पुष्करवाद्ये नित्यं वाष्करणे संविधेयानि ॥ ४० ॥

चतुर्मार्गं नाम—

आलिप्तादितगोमुखवितस्तालपत्वा[नि] चत्वारो मार्गाः ।

विलेपनं नाम—

वामोर्ध्वकप्रलेपात् ।

षट्करणं नाम—

रूपं कृत[प्रतिकृत] प्रतिभेदो रूपशेषमोघः प्रतिशुक्लेति ।

त्रियति नाम—

समा श्रोतागता गोपुच्छेति अन्वयात् ।

त्रिलयं नाम—

द्रुतमध्यविलम्बितयोगात् ।

त्रिगतं नाम—

तत्त्वं घनमोघश्चेति ।

त्रिप्रचारो नाम—

समप्रचारो विषमप्रचारः समविषमप्रचारश्चेति ।

त्रिसंयोगं नाम—

गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति ।

त्रिपाणिकं नाम—

समपाणिः अवरपाणिः उपरिपाणिश्चेति ।

पञ्चपाणिप्रहतं नाम—

समपाणिरर्धपाणिरर्धार्धपाणिः पार्श्वपाणिः प्रदेशिनीतः इति ।

त्रिप्रहारं नाम—

निगृहीतोऽर्धनिगृहीतो मुक्तश्चेति ।

त्रिमार्जनं नाम—

.................................................. ।

[विंशत्यलङ्कारं नाम—]

.................................................. ।

[अष्टादशजातिकं नाम—]

.................................................. ॥

अभिव्यक्तानि पूर्वं यान्येतानि षोडशाद्यानि ।
तान्यक्षराणि जानीत पुष्करेषु यथाक्रमम् ।
पणवे दर्दुरे चैव मृदङ्गेषु तथैव च ॥ ४१ ॥
कटरतघजस्तु दक्षिणमुखेऽत्र गहथाश्च वामकेतिवताः (?) ।
थकारो(?) चैवोर्ध्वे करणध्वलाश्वस्युरालिङ्गचे(?) ॥ ४२ ॥

एतेषामक्षराणां स्वरसंयोगं च व्याख्यास्यामः—

तत्र–अ-आ इ-ई उ-ऊ-ए-ऐ-ओ औ-अं-अः–इति स्वरा व्यञ्जनैः सह संयोगं गच्छन्ति ।

तत्र अकारेकारोकारैका[रौका]रांकाराः ककारे यथा–'क कि कु के को कं' इति ।

इकारोकारौकाराः खकारे यथा—'खि खु खो' इति ।

उकारैकारौ(कारा) गकारे यथा–गु गे गो' इति ।

अकारैकारौकारा घकारे यथा–'घ घे घो' इति ।

अकारेकारौकारांकाराः टकारे यथा–'ट टि टो टं' इति ।

अकारेकारौकाराङ्काराः ठकारे यथा—'ठ ठि ठो ठं' इति ।

अकारौकारौ डकारे यथा–'ड डो' इति ।

अकाराकारेकारैकारास्तकारथकारयोर्यथा–'त ता ति ते थ था थि थे' इति ।

अकारोकारैकारौकारा दकारे यथा—'द दु दे दो' इति ।

अकारेकारौकाराङ्कारा धकारे यथा—'ध धि धो धं' इति ।

अकाराकारेकारैकारा रेफे यथा—'र रा रि रे' इति ।

अकाराकारेकारैकारा लकारे यथा—'ल ला लि ले' इति ।

हकारमँकारौ शुद्धौ (?) ।

तत्र–ककारघकारनकारथकारधकाराणां रेफोऽनुच्छमः(बन्धः) यथा–'भ्रु क्रं त्रेघ्न घ्न त्रघ्न' इति(?) ।

ककारस्य लकारोऽप्यनुबन्धो यथा—..................'क्लंक्ल' इति ॥

एवमेतैः संयोगैर्द्विहस्तसंयुक्तान्यक्षराणि भवन्ति ।

तत्र—अङ्किके मृदङ्गे द्विपुष्करे समहस्तनिपाताद्धङ्कारः ।

तत्र—अङ्गुलिचलनात्कुकारः । तत्रैव—अवष्टम्भाद्यकारः ॥

तत्रैव—अर्धनिगृहीतस्थकारः । तत्रैव—दक्षिणमुखे पार्ष्णिपीडितः क्लकारः ।

तत्रैव—अङ्गुलिकूजनात्क्षकारः । ऊर्ध्वकवामकयोः समहस्तनिपाताद्धङ्कारः प्रदेशिन्या वालिङ्गये क्लेकारः । *

केचिदेकवक्त्रजं केचित् त्रिवक्त्रजं केचिन्निर्वक्त्रजं इति यथा रेफः सर्ववक्त्रेषु दकारावलिंग्यवामके आलिंग्य दक्षिणे मकारः वामोर्ध्वमोकारः क्वचिदालिंगेपि लाघवार्थं धकारः कर्त्तव्यः । एवं तत्र प्रतिषेधेन कार्य इति उक्तः स्वरव्यञ्जनसंयोगजः

पञ्चपाणिप्रहतानां समपाणिरर्धपाणिरर्धार्धपाणिः पार्श्वपाणिः प्रदेशिनी चेति । एते च निगृहीतार्धार्द्धगृहीतमुक्ता भवन्ति । तत्र समपाणिहतो मकारः स निगृहीतः । गकारदकारधकाराः अक्षरार्धगृहीता अर्धपाणिप्रहताश्च ककारखकारणकारडकाराः पार्श्वपाणिप्रहता निगृहीताश्चा तकारथकारहकारा अर्धाधपाणिप्रहताश्च प्रदेशिन्या हतश्चालिङ्गं कारथंकारणाकारमुक्ताश्च विहस्तप्रहस्तप्रहतां अविभृङ्काङ्गीतमुक्ताश्च कुत्सर्धइत्यर्धपाणिप्रहता निगृहीताश्च । एवमेतेष्वक्षरेषु प्रयोगवशेन कार्यं प्रहितम् । कुतः ?

षोडशैव तु दृष्टानि वाद्यजान्यक्षराणि तु ।
अनेनैव तु योगेन योज्यं वा कारणं बुधैः ॥ ४३ ॥

चतुर्मार्गमिति यदुक्तं तदनुव्याख्यास्यामः ॥

अड्डितालिप्तमार्गौ तु वितस्तो गोमुखस्तथा ।
मार्गाश्चत्वार एवैते प्रहारकरणाश्रयाः ॥ ४४ ॥

तत्रालिङ्गमृदङ्गाङ्गहारयुक्तस्त्वड्डितोमार्गः । प्रहारयुक्तस्त्वालिप्तमार्गः । ऊर्ध्वाञ्चितक्षिप्तप्रहतो वितस्तमार्गः । आलिङ्गकरणबहुलः सर्वपुष्करप्रहतो गोमुखमार्ग इति ।

तत्राड्डितप्रकारजो यथा—मट्टंकथितघट्टघंटाघट्टंगतिथित्युंगतिथमगद्यसन्धित्थ इत्यड्डितो मार्गः ।

---

* एतच्चिह्नमध्यगतोंऽशः(पृ०४२९-४३४) कपुस्तके नोपलभ्यते ।

इदानीमालिप्तः—दध्रोमामाद्रोंमंगुदुर्पेंगुदुरनन्दुं धेंप्रेंद्रंघेंद्रोमां आलिप्तमार्गेवाद्यं विज्ञेयं वादकैरेवम् ।

इदानीं वितस्तमार्गः--तत्र नितान्तकितत्सेन्ताकिनान्धिसङ्केताइदुहुदुकेन्तांतस्ते स्यात् ॥

अङ्गुलिप्रचालनाद्वर्चितो हकारोमुक्तश्च स एव स्वस्तिकोनोर्ध्वांकियोरधैंनिगृहीतः । तयोरेवं समहस्तदर्शनात् ।

प्रचलनात् हाकारो मुक्त इति धित्थतित्थडित्थाकिताखदेर्ङखदेर्ङगुघुङुलेञ्जचितिदिमावुणुमध्येधेघो विधातव्याः । एवं वितस्तमार्गे गणे लमरवर्जिताप्रहाराः स्युः । ऊर्ध्वमार्गेण विशेषाः कार्याश्च गोमुख्या खटमत्थिमट्टघण्ठांखेट्टङखड़मांवुणकितिकित्तिकिटिमांखुखुणुद्धेघेधोघो विधातव्याः ।

इदानीं गोमुखीवाद्यं ठढणघेण्ढणुखन्दुलङदुखेन्दंघटमट्टाइदुणुधुणांत्थिघटंघिटिमांकक्कुटान्दुणुघेर्ङकिटिमार्ङघेधेकोखोमखोमगोमुख्या ।

ये त्वालिप्तसमुत्थाः सर्वे मार्गैस्तु ते विधातव्याः ।
ग्रहणाक्षरसन्धाने ह्यादमृदङ्गात्तु ग्रहो भवति ॥ ४५ ॥
एतेषां तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्गुणामपि मार्गाणां अक्षरग्रहणं यथा ॥ ४६ ॥

घृङघृङघटघेङमत्थिमत्थिभटामदर्थिंठिङमनखेङक्रङकथिकटाङत्वडितेवाघगेन्द्रातकिताघृङध्रोकिनिघण्ङांङगान्धकिटिकेस्थायकुताकिताकिरिदामितिसंयोगोऽपि तस्तेतुडामाङगुदर्धेङघेवेघण्डाघेघटदुमा आलिप्ते संयोगो कार्योऽयं वादने तज्ज्ञैः ।

घैघोटात्थिकटांहिहुटाघेङघेटाघण्डान्धिमाधस्थितं केसटेघेगघेणोणणोमिति

गोमुख्या उक्तो यो मार्ग एतेषां पुष्कराणाम् ।
त्रिविधस्तत्र प्रचारः सम विषमः समविषम इति ॥ ४७ ॥
वामोर्ध्वगयोर्वामसव्ययोरङ्किितामार्गोऽपि ।
कार्यः समप्रचारस्त्वालिप्ते वाद्यकरणे तु ॥ ४८ ॥
वामोर्ध्वापसव्यानां प्रहतो वामस्तु कर्त्तव्यः ।
सव्योर्ध्वगमनानां सव्यो विषमप्रचारे तु ॥ ४९ ॥
एवं स्वस्तिकयोगात् द्वाभ्यामपि यत् भवेत्तु हस्ताभ्याम् ।

माने वितस्तिसंज्ञे प्रहते विषमप्रचारः सः ॥ ५० ॥
स्वच्छकस्तु करयोः शेषः प्रहतेषु मार्गकरणेषु ।
अङ्कितगोमुखयोगात् समविषमो हस्तसञ्चारः ॥ ५१ ॥
शृङ्गारहास्ययोगे वाद्यं योज्यं तथाङ्किते मार्गे ।
वीराद्भुतरौद्राणां वितस्तमार्गेण वाद्यं स्यात् ॥ ५२ ॥
करुणरसेऽपि च कार्यं वाद्यं चालिप्तकरणमार्गेण ।
बीभत्सभयानकयोस्तथैव नित्यं हि गोमुखो मुख्याम् ॥ ५३ ॥
रससत्त्वभावं दृष्ट्वाभिनयं गतिप्रचारश्च ।
वाद्यं नित्यं कार्यं यथाक्रमं स्थानसंयोगात् ॥ ५४ ॥
प्रहतविधानं कार्यं मार्गाश्रितै रसैः सम्यक् ।
वक्ष्याम्यतश्च भूयो दर्दुरपणवाश्रितं वाद्यम् ॥ ५५ ॥
अतिवादितमनुवाद्यं समवादितमुच्यते तथा वाद्यम् ।
तत्रातिवादितं स्यात् मुरवाणामग्रतो यत्र ॥ ५६ ॥
यत्त्वनुगतैर्मृदङ्गैरनुवादितमुच्यते तु तद्वाद्यम् ।
समवादितं मृदङ्गैर्ज्ञेयं साम्येन यद्वाद्यम् ॥ ५७ ॥
कखगापं पणवमुरवाङ्कोग्रहणात् त्रहुलाम् ध्राहुलां ।
एते वर्णा नित्यं पणववाद्ये प्रयोक्तव्याः ॥ ५८ ॥

किरिघन्टां थो थो णोधो त्रहुलां किरिघन्टां णोणोणञ्चाकारकण्डा मटामटत्थितेटदोप्माम् पणववाद्यम् ।

तस्य प्रहते कार्यं कनिष्ठकानामिकाग्रकेणैव ।
नानाकरणविभागः पणवे शिथिलायते तज्ज्ञैः ॥ ५९ ॥
वादककनिष्ठिकाभ्यां शीघ्रगताभ्यां तु करणरागवर्णाः ।
शेषास्तु वादनकृताः स्मृताः प्रकारश्च वाद्यानाम् ॥ ६० ॥
कोणानामिकवाद्यं मध्याङ्गुल्यादि वादने कार्यम् ।
कोणाऽनामिकवाद्यं शुद्धं प्रहतं भवेदेतत् ॥ ६१ ॥
भ्रान्तकरणयोगात् कुलहामीत्येतत् भ्रान्तवदनाग्रकृतम् ।
रभितकरणोऽनुबन्धास्तत्राभ्यस्तोरकारस्तु ॥ ६२ ॥
मिश्रकरुणानुबन्धे द्रेकारस्तूर्ध्वहस्तसंयोगात् ।

अनुवादकेन वाद्यो धुर्येण विषमतः कार्यः ॥ ६३ ॥
स्वं चित्रकरणरम्यं कार्यस्तथा कनिष्ठिकाग्रेण ॥
तत्रैकार्या दो ष्णिमथाणिणिकृत्त प्रहारवै
भृन्तकरणे तथाञ्चिसकथा पशिथिन्न वा(?) ॥ ६४ ॥
अञ्चितकक्ष्ये पणवेयेकंकार एकप्रकारस्तु ।
तथेऽन्ततः प्रहारः पणवे कार्यः प्राशिथिलपक्ष्ये ॥ ६५ ॥
कखटेकृताः प्रहाराः सोच्छ्वासे पणवे विधातव्याः ।
थोकारोऽनुस्वारजे पणवे कक्ष्याञ्चितेन सम्भवति ॥ ६६ ॥
णै णैकारो युक्तो ह्व इति पणवप्रकारः स्यात् ।
तिर्यक्गृहीतवादनरववर्त्तितमिष्यते प्रहारोऽयम् ॥ ६७ ॥
कहुलं क्रुकुलां क्रमासति क्रकुलां इत्थंप्रकारः स्यात् ।
एवञ्च संकरकृताः प्रहारा शुद्धाः प्रकीर्त्तिताः तज्ज्ञैः ॥ ६८ ॥
दर्दुरपणवमृदंगैः मिश्रितवाद्यं प्रवक्ष्यामि ।
तत्र विभागं केचित् वाद्ये गच्छन्ति मिश्रिताः केचित् ॥ ६९ ॥
केचिद्युगपत्करणाः केचित् पर्यायकरणास्तु ।
एकैकसंप्रयुक्ता वर्णा नगरास्तथैव संप्रयोक्तव्याः ॥ ७० ॥
घेंका कथं त्रेखो कहुलं तकितामृदंगेषु ।
अथ दर्दुरो दङ् श्येङ् रङ् कहुलां मटं कि पणवे च ॥ ७१ ॥
थंमटत्थिडांकहुलाम् मटात्थिदेङ् विमिश्रितस्तु ।
एभ्यो येन्ये शेषास्ते मिश्रा एव नित्यशः कार्याः ॥ ७२ ॥
पूर्वेऽपि च मिश्रत्वं व्रजन्ति सर्वे यथायोगम् ।
अथ युगपत् करणं कहुलां णणणां खुखुणेखे ॥ ७३ ॥
द्रोमादोणं थेघोघोर्थिद्वयोज्यं पणवे बाद्यं ।
धुर्यक्तृतञ्च क्रमश करणं परिवादकेन कर्त्तव्यम् ॥ ७४ ॥
टटटे घोणणण किरिणि किण्णा कृतं चेति ।
पणवस्याचारवन्धे कार्यं न्नुखुखुणेति वाद्यं तु ॥ ७५ ॥
भूयः कृतञ्च प्रतिकृतमार्दंगिकदार्दुरिकाभ्यां तु ।
यद्यत् कुर्यान्मुरवप्रहारजातं गतिप्रचारेषु ॥ ७६ ॥

अनुगतमक्षरवृत्तं तदेव वाद्यन्तु पणवेन ।
न हि चित्रं कर्त्तव्यं गतिप्रचारेषु वाद्यतत्त्वज्ञैः ॥ ७७ ॥
समसाहितं तत्र हितं न लक्ष्यते पादसञ्चारे ।
उपरिकरं यथेष्टं कर्त्तव्यं पणवमृदंगे च ॥ ७८ ॥
तद्वत् प्रकारकरणं मृदंगवाद्ये विधातव्यम् ।
प्रायेण सर्ववाद्येष्वादौ पणवग्रहः प्रयोक्तव्यः ॥ ७९ ॥
वक्ष्याम्यतः परमहं दसत्सेन्ततिताएत्सदेवेदे ।
रेभिनृत्तातिमथि इति दर्दरे प्रहारः ॥ ८० ॥
तयोर्मुक्तेनिषण्णे च कार्यस्तत्र णणण्णारे ।
मधीकीर्तीतिदक्षिकरेण वा ते तु त्सिद्धि ॥ ८१ ॥
संतत्ववृष्टौ कराग्रेण मुक्ते न मितिचैवं निगृह्य ।
शीघ्रंकरणानुबन्धस्थितिरेवहितां स्यात् ॥ ८२ ॥
इति दर्दुरे प्रहारे वक्ष्याम्यूर्ध्वकरणजातम् ।
रूपकृतं प्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी वै प्रतिकृतिशुष्केभ्यो ज्ञेयं करुणजातम् ॥ ८३ ॥

तत्र रूपं नाम विहस्तनकरणकरणं यथा—तंखुखुण खुधं क्रयं त्थिमंन्थेचरं घटां घत्तिमात्ति घण्डाकटशुद्धरणकिटि घंघेकटं केकमितिरूपं ।

प्रतिकृतन्नाम यत्रैकं करणं त्रिपुष्कर मुद्भावयति यथा—थंघुकण खुमं क्रमथिव गोंर घटांट घट त्थिघंत्सां इदुखैं कुखलांण्णं दोधोण इति कृतप्रतिकृताख्यम् ।

प्रतिभेदो नाम युगपत् कृतेकरणे मृदंगानां यदुपरि करणेन गच्छेति यथा—धोधोणाखोलालणाणात्थिटघि घण्डां एभिः करणविशेषः प्रतिभेदो नाम विज्ञेयः ।

रूपशेषं नाम विरामकृतं यथा—खुखुणोण्णामटघें घेण्डामटघोटामत्थिआल्याम् घोमिति वाद्यं रूपशेषं ।

प्रतिशुष्कं नामानुस्वारोमार्दंगिके पाणविकदार्दुरिकाणां यथा—घट मटत्थिद्रुणथेर्जकिटिकेघेङ् घोङ् घोण्डाघोण खोखोख कुटाकिट वखत्थिणणत्थि ।

चतुष्काख्ये सर्वभाण्डविरामे द्रुततालकलययोगे घोघादोघो यथा–थंकिटि मंथिहि किटिघेङ् घण्डाणं घोण्डा घोणघोण घट घट घदु घेंङ् घंघे किरिणि णगेहं थोथोतथोतथौघश्च ।

करणानां समयोगं करणेषु विधीयते ।
अनेनैव विधानेन योज्यं वा करणं बुधैः ॥ ८४ ॥

यतिर्नाम समा स्रोतोगता गोपुच्छा चेति । यतिपाणिना त्रिविधसंयोगः । स च त्रिप्रकारो भवति । यथा–राद्धं विद्धं शय्यागतम् । एवं त्रिप्रकारः संयोगः करणेषु विधीयते ।

अवपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः ।
गोपुच्छा च यतिर्वाद्यं तद्वै शय्यागतं भवेत् ॥ ८५ ॥
यथा च गीतिप्राधान्यं मार्गश्चैव दक्षिणः ।
अत्युक्तमेवातोद्येषु वाद्यं शय्यागतं भवेत् ॥ ८६ ॥
स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ॥ ८७ ॥
वार्त्तिको वृत्तिमार्गः स्याद्दक्षिणो गीतवाद्ययोः ।
पात्रेषूत्तममध्येषु विद्धं वाद्यमुदाहृतम् ॥ ८८ ॥
तथा वाद्यप्रधानञ्च परिपाणिः समा यतिः ।
भूतश्चापि लयो यत्र राद्धं वाद्यं तु तद्भवेत् ॥ ८९ ॥
स्थिताल्लयात्प्रभृत्येषां प्रमाणं संप्रवर्त्तते ।
कार्यहानिः कलानाञ्च शेषेष्वन्येषु पाणिषु ॥ ९० ॥
यतयः पाणयश्चैव लया वाद्यसमाश्रयाः ।
यथाक्रमं हि कर्त्तव्यं नाट्ययुक्तिमवेक्ष्य तु ॥ ९१ ॥

तिस्रो मार्जना नाम—

मायूरी ह्यर्धमायूरी तथा कर्मारवी पुनः ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ ९२ ॥
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
ऊर्ध्वगे [1]मध्यमश्चैव मायूर्यश्च स्वराश्रयाः ॥ ९३ ॥

---

१ पञ्चम० ख ।

सामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।
धैवतश्चोर्ध्वगे कार्यः अर्धमायूरकाश्रयाः ॥ ९४ ॥
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगे कार्यः कर्मारव्यः स्वराश्रयाः ॥ ९५ ॥
एतेषामनुवादी तु जातिरागस्वरान्वितः ।
आलिङ्गे मार्जनं प्राप्य निषादस्तु विधीयते ॥ ९६ ॥
मायूरी मध्यमे ग्रामेऽप्यर्धा षड्जे तथैव च ।
कर्मारवी चैव कर्त्तव्या साधारणसमाश्रयाः ॥ ९७ ॥
स्वरा ये स्थायिनो यान्ति श्रुतिसाधारणाश्रयाः ।
त एवं मार्जनं कृत्वा शेषाः सञ्चारिणः स्मृताः ॥ ९८ ॥
वामेऽर्धगाभ्यामाहार्याः कार्या वै लेपनाः स्वराः ।
शैथिल्यादायतत्वाच्च कार्यास्त्वालिङ्गकाङ्क्षिते ॥ ९९ ॥
शैथिल्यश्चायतश्चैव वध्वापीडनमार्दवम् ।
एवं स्वरोद्भवः कार्यो मार्जनासम्प्रयोक्तृभिः ॥ १०० ॥
मार्जना तु कृता कार्या वामगोर्ध्वगयोस्तथा ।
लक्षणं मृत्तिकायास्तु गदतो मे निबोधत ॥ १०१ ॥
निःशर्करा निःसिकता निस्तृणा निस्तुषा तथा ।
न विच्छिन्ना न विशदा न क्षारकटुका तथा ॥ १०२ ॥
नावदाता न वा कृष्णा नाम्ल नैव च तिक्तिका ।
मृत्तिका लेपने ह्येषां यथाकार्यन्तु मार्जनम् ॥ १०३ ॥
नदीकूलप्रदेशस्था श्यामा सा मृत्तिका भवेत् ।
तोयापसरणश्लक्ष्णा तया कार्यन्तु मार्जनम् ॥ १०४ ॥
बहुकार्यावदाता तु कृष्णा गुर्वी न च स्थिरा ।
सतुषा नस्वनकरी श्यामा यत्र न दृश्यते ॥ १०५ ॥
तत्र गोधूमचूर्णं वा यवचूर्णं च दापयेत् ।
यवगोपुच्छचूर्णं तु कदाचिदुपभुज्यते ॥ १०६ ॥
एकस्तस्य च दोषः स्यादेकस्वरकरो भवेत् ।
एवं तु मार्जनायोगात् श्यामा स्वरकरी भवेत् ।

त्रिसंयोगस्य वक्ष्यामि लक्षणं द्विजसत्तमाः ॥ १०७ ॥

त्रिसंयोगो नाम गुरुलघुसञ्चय गुरुसंचयो लघुसंचयो इति । तत्र गुरुसञ्चयो नाम उरुस्थितिलयवृत्ते यथा—

स्थितटान्तक्रियाम्ताकिटाघटातित्थिमस्थिमतस्थित्वं घटमथिमावेङघटा स्यामेवं गुरुलघु स्यात् ।

लघुसञ्चयो नाम द्रुतलयप्रवृत्ते यथा—

घटमटकटघटमात्थिमटाथिघटघटद्रुते लघुसञ्चयः
इति संयोगा ज्ञेया मृदङ्गवाद्यप्रयोगज्ञैः ।
त्रिप्रकृतिं नाम तत्त्वमनुगतमोघश्चेति ।
अक्षरसदृशं वाद्यं पदवर्णसमं तथैव प्रवृत्तं ।
सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम् ॥ १०८ ॥
समपाण्यवपाणियुतं स्फुटप्रकारकरणानुगतं भवेत् वाद्यम् ।
अनुगतश्च नैककरणाश्रयमुपर्युपरिपाणिसमञ्चेति विज्ञेयम् ॥१०९॥
यद्वृत्तन्तु भवेद्गानं गुरुलघ्वक्षरान्वितम् ।
यद्वृत्तन्तु भवेद्वाक्यं तदक्षरसमं स्मृतम् ॥ ११० ॥
ध्रुवाणां ग्रहमोक्षे तु कलान्तरकलासु च ।
यदङ्गं क्रियते वाद्यं तदङ्गं सम उच्यते ॥ १११ ॥
यत्प्रमाणं भवेद्गानं कलाकालप्रमाणतः ।
यत्प्रमाणं तु यद्वाक्यं तद्वै तालसमं भवेत् ॥ ११२ ॥
समा स्रोतोगता वापि गोपुच्छा च यतिर्यथा ।
यद्विपन्तु भवेद्वाद्यं तद्वै यतिसमं भवेत् ॥ ११३ ॥
न्यासोपन्यासयोगस्तु स्वराणां हि यथा भवेत् ।
वंशवैणोद्भवं वाद्यं न्यासापन्यासजं तथा ॥ ११४ ॥
समपाण्युपपाण्योक्तं तथैवोपरि पाणिजम् ।
गीतानुगश्च यद्वाद्यं स्मृतं पाणिसमन्तु तत ॥ ११५ ॥

अष्टादशजातिकिमिति यदुक्तं तदनुव्याख्यास्यामः ।

शुद्धा एकरूपा देशानुरूपा देशादपेतरूपा पर्यायो विष्कम्भः पर्य-

स्ता संरम्भः पार्ष्णिसमस्ता दुष्करकारणा ऊर्ध्वगोष्टिका उच्चितिका एवं वाद्या मृदङ्गपणवा अवकीर्णा अर्द्धावकीर्णा संप्लवा विधूतमिति : एतासां जातीनां लक्षणमभिव्याख्यास्यामः ।

तत्र—

एकाक्षरं द्व्यक्षरं वा यद्वाद्यं सर्वमार्मिकम् ।
भवेत् करणयोगे तु शुद्धा नामतो यथा ॥ ११६ ॥
खोखोथंक्त्वामेभिर्जात्यक्षरैः समायुक्ता ।
सा शुद्धा विज्ञेया मध्यस्त्रीणां भवेज्जातिः ॥ ११७ ॥
गोममङ्कितालिप्तोवितस्ता वाश्रितायदा ।
यन्त्रितथैकैक एकरूपा हि सा यथा ॥ ११८ ॥
द्रोङ्घोङ्दोङ्घोङ्घेघेङ्अङ्कितमार्गाक्षरैः समायुक्ता ।
सा त्वेकरूपा जतिर्नृणाङ्गीतविधानतः कार्या ॥ ११९ ॥
सर्वास्वपि प्रकृतिषु प्रयोज्या सा स्थिता यद्द्रुता वापि ।
देशकालमवस्थां ज्ञात्वा मध्येऽपि विनियोज्या ॥ १२० ॥
सर्वातोद्यानि यत्रैकं कारणं भावयन्ति ।
मृदङ्गवाद्यानुगमादेकरूपा तु सा स्मृता ॥ १२१ ॥
अङ्कितमार्गविभक्ता सम्भोगकृते भवति शृङ्गारे ।
देशानुरूपजातिः स्थितिलययुक्ता च कर्त्तव्या ॥ १२२ ॥
यथा—मीमत्थित्थमभूत्थिकिमा एभिर्जात्यक्षरैः समायुक्ता ।
देशानुरूपजातिः शृङ्गारे चोत्तमे स्त्रीणाम् ॥ १२३ ॥
वामोर्ध्वगप्रवृत्तवोधा क्षिप्तापकृष्टलय युक्ता ।
उपदेशादुपेतरूपा करुणरसे सा भवेज्जातिः ॥ १२४ ॥
यथा—घेद्रङघेद्राङघेघेमेभिर्जात्यक्षरैः स्समायुक्ता ।
देशादपेतरूपा सा कार्या वाद्ययोगेषु ॥ १२५ ॥
पर्यवगच्छति पूर्वा यस्मिन् सिद्धैस्तु करणजातम् ।
त्रिविधेऽपि च लययोगे पर्याया नाम सा जातिः ॥ १२६ ॥
यथा—घोदाङ्क्वेदेङ्गुदुघोङप्राया वामोर्ध्वगवामहस्तसञ्चारः ।
पर्यायकृता जातिः वीराद्भुतरौद्रयोगेषु ॥ १२७ ॥

गुरुयुग्मं लघुयुग्मं तथैव च लघुगुरुणि चैव गुरु लघुश्चैव यथा १२८
सिङ्माङ्कटचेन्द्रगुदुघेङ्कमत्थिमेत्थं ।
विष्कंमाख्या जातिः शृङ्गारे चोत्तमस्त्रीणाम् ॥ १२९ ॥
एकैकाक्षरणयोगाच्चाद्यं सर्वमार्गसंयुक्तम् ।
पर्यस्ताजातिः समहस्ता विचारसंयुक्ता ॥ १३० ॥
आकाशे रथ विमानऋषिविद्याधरभुजङ्गमादीनाम् ।
चरिते गतिविन्यासे यथारायाश्चैव पर्यस्ता ॥ १३१ ॥
यथा—घङ्ताङ्कोङ्कभेभिर्जात्यक्षरैःसमायुक्ता ।
अधमस्त्रीणां योज्या संरम्भा नाम वै जातिः ॥ १३२ ॥
ऊर्ध्वांगदक्षिणः मुखैः क्षिप्ता प्रभूता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जातिः कार्या शृङ्गारहास्यगतौ ॥ १३३ ॥
यथा—

तत्थिकटंमंच्छिकरणैसपार्ष्णिनिष्पीढैः ।
धीन्द्राडः गुधेङ्गूधिताङ्पार्ष्णिसमस्ता पुनर्जातिः ॥ १३४ ॥
स्थितिलयगतिविन्यासे शृङ्गारे भवेत्तु योत्तमप्रकृतौ ।
धीरोत्तमपर्यस्ता जातिर्वै साधमपुरुषेषु कर्त्तव्या ॥ १३५ ॥
अवपाणिकरयुक्ता ह्यादौ मध्यमलयेन यत्तुल्यम् ।
आरम्भं तं विद्यादन्तेवासि श्रुतं यस्याः ॥ १३६ ॥
यथा—मगठं कुयुथकिम् पुरुषाणामन्येषां दानवादीनां ।
सहस्तिकहस्तविचारास्सर्वमार्दङ्गप्रकारसंयुक्ता ॥ १३७ ॥
सत्रिलयवाद्ययुक्ता दुष्करकरणा भवेज्जातिः ।
यथा दुणुदुणुदुणाकिंकधिमघेङ्घोटेङ्मदत्थिदुघकिटिघेङ् ॥१३८॥
एभिर्जात्यक्षरयोगे दुष्करकरणा भवेज्जातिः ।
दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ॥ १३९ ॥
गतिविन्यासे कार्या दुष्करकरणा भवेजातिः ।
ऊर्ध्वाङ्गदक्षिणमुखोक्षिप्तप्रहिता वितस्तमार्गा च ॥ १४० ॥
अङ्कोर्थप्रवृत्ता दक्षिणवामप्रवृत्ता च ।
प्रायेणान्तमार्गा वितस्तमार्गाश्रया तु दिव्यानाम् ।

घृङ्प्राया जातिरियमूर्ध्वेङ्कोषा स्यात् ॥ १४१ ॥
सर्वैर्मार्गैः समुद्घृत्य यद्वाक्यं करणं भवेत् ।
उच्चितिकां विजानीयात् गूढशृंखलिकाकृताम् ॥ १४२ ॥

यथा—

केन्ताकेन्नाङ्गदितामेभिर्जात्यक्षरैः समायुक्ता ।
राज्ञां स्वभावगमने जातिः कार्याविर्तास्तिकृता ॥ १४३ ॥
गोमुख्यक्षरसहिता सर्वमृदङ्गप्रकारसंयुक्ता ।
कुहकाभिनये योज्या वैलम्बिकदृष्टलिङ्गेषु ॥ १४४ ॥

यथा—

घण्डाज्जातोदकीताद्येङ्केङ्मदाथि घट इङ्के ।
एभिस्त्वक्षरयोगैरेवंवाद्या भवेज्जातिः ॥ १४५ ॥
वामनविह्वलखञ्जस्युधाङ्गेघचशह्यहतपादाम् ।
एवं वाद्या जातिरेषा गमने तु कर्त्तव्या ॥ १४६ ॥
पृथिवी वादितं यत्र पर्वतोऽन्येषु दृश्यते ।
मृदङ्गपणवादीनां सा जातिः सार्वमञ्चिकी ॥ १४७ ॥

यथा—

थ्रोंथ्रोंटेंटें एभिर्जात्यक्षरैः समायुक्ता ।
मृदङ्गपणवानां स्त्रीणां जातिरवकीर्णा ॥ १४८ ॥
यद्वाद्यं त्रिगुणैर्वाद्यकरणैर्मृदङ्गानाम् ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जातिः ॥ १४९ ॥

यथा—

केन्तां केन्तां एभिर्जात्यक्षरैस्तु संयुक्ता ।
गोमुखमार्गे जातिः सा चैवंगुणा विधातव्या ॥ १५० ॥
अर्धकीर्णविधैः करणैरिह मार्गयोगलघुयुक्तैः ।
दर्दरपणवमृदङ्गैरर्धार्धं वादने कार्यम् ॥ १५१ ॥

यथा—

थङ्गदघेण्डासेन्द्रामेभिर्जात्यक्षरैस्तु संयुक्ता ।
संप्लवमिति विज्ञेया कर्त्तव्या वानरैः करणैः ॥ १५२ ॥

दिव्यैर्नानाकरणैश्चित्रैर्मृदङ्गप्रहारसंयुक्तैः ।
स्वाभाविकोत्तमगतैर्विधूतजातिर्विधातव्या ॥ १५३ ॥

यथा—

ददिगे गुदुघेङ् एभिर्जात्यक्षरैः समायुक्ता ।
तिरिथिक्कामटत्थिकणंकुक्कां........
एभिः स्वरसंयोगैर्विधूतजातिर्विधातव्या ॥ १५४ ॥
एता गतिप्रचारेषु विज्ञेया जातयो बुधैः ।
याश्च योष्कामया(?) चास्मिन् ता ग्राह्या लोकतोऽर्थतः ॥ १५५ ॥
एवमेतेन विधिना कर्त्तव्यं वादनं बुधैः ।
गतिप्रचारे गीते च दशरूपे तथैव च ॥ १५६ ॥
सप्तरूपे विधाने च छन्दः सारितकेषु च ।
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ॥ १५७ ॥
गतिप्रचारे कर्त्तव्यं गानं सौम्यार्थदर्शनात् ।
तत्त्वं चानुगतं चैव तथौघं करणाश्रयम् ॥ १५८ ॥
राज्ञां ललितभावत्वात् योज्यं वाद्यं स्वभावजम् ।
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत् ॥ १५९ ॥
तृतीये त्वोघसंज्ञं तु वाद्यं गतिपराक्रमैः ।
शेषाणां छन्दसश्चित्रं ध्रुवाणां संप्रयोजयेत् ॥ १६० ॥
अथ स्थितापकृष्टानां वाद्यञ्चानुगतं भवेत् ।
प्रावेशकीनां कर्त्तव्यं लयश्चानुगतं तथा ॥ १६१ ॥
नैष्क्रामिक्यन्तरगतं कार्यं त्रिलयवादितम् ।
द्रुतं प्रासादिकीनाञ्च ध्रुवा पञ्चविधा भवेत् ।
एकध्रुवाणां कर्त्तव्यं वाद्यं प्रकरणाश्रयम् ॥ १६२ ॥
यो मात्रांशविकल्पस्तु ध्रुवापादे भवेदिह ।
स तु भाण्डेन कर्त्तव्यस्तज्ज्ञैर्गतिपरिक्रमः ॥ १६३ ॥
एवं गतिप्रचारेषु वाद्यं योज्यं प्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ॥ १६४ ॥
शम्यातालग्रहाः केचित् तथाकाशग्रहः पुनः ।

तत्र शम्याग्रहा ज्ञेयाः नित्यं दक्षिणपुष्करे ॥ १६५ ॥
वामोर्ध्वगे ग्रहाश्चापि ज्ञेया स्तालग्रहा बुधैः ।
तर्जनीग्रहका नित्यमालिङ्गे परिकीर्त्तिताः ॥ १६६ ॥
तथाऽऽकाशग्रहः प्रोक्तो निष्क्रामे वा प्रयोजितः ।
आसारिता नित्यशम्या द्या(द्वि)तालास्तु ध्रुवाङ्गजाः ॥ १६७ ॥
लयश्च न ग्रहं गानं तत्र स्यात्तर्जनीग्रहाः ।
शीर्षञ्चोद्धता चैव प्रदेशिन्या ग्रहा स्मृताः ॥ १६८ ॥
नत्कुटस्याङ्कितायाश्च प्रासादिक्यास्तथैव च ।
सन्निपातग्रहा ज्ञेयास्तथैवैककलो विधिः ॥ १६९ ॥
आकाशग्रहका ज्ञेयाश्चतुर्द्विकलयोगजाः ।
तथा चाङ्गनिबन्धानि शीतकानि यथाक्रमम् ॥ १७० ॥
एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रयाः ।
ताण्डवे सुकुमारे च वाद्यं वक्ष्याम्यतः परम् ॥ १७१ ॥
अभाण्डमेकगानस्य परिवर्त्तं प्रयोजयेत् ।
तस्यान्ते सान्निपातस्तु कार्यो भाण्डग्रहो बुधैः ॥ १७२ ॥
अथवा नृत्तशोभार्थमङ्गाङ्गपरिवर्त्तनम् ।
सङ्गीतकं प्रकर्त्तव्यं लयस्य परिवर्त्तनम् ॥ १७३ ॥
यत्राभिनेयमङ्गं तु वाद्यं तत्र प्रयोजयेत् ।
यत्राङ्गहारवृत्तं तु तत्र वाद्यं प्रयोजयेत ॥ १७४ ॥
यथा भीतिवशादङ्गं भूयो भूयो निवर्त्तते ।
तत्राद्यमभिनेयं तु शेषं नृत्तेन योजयेत् ॥ १७५ ॥
यद्वृत्तन्तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम् ॥ १७६ ॥
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरयोजितम् ।
मुखोपवहनं कार्यं प्रकृष्टं वर्णतस्तथा ॥ १७७ ॥
स्थिते त्वल्पं प्रहारं तु मध्याक्षरसमं तथा ।
कार्यं तु गीतके वाद्ये द्रुते चोपरिपाणिकम् ॥ १७८ ॥
समं रक्तं विभक्तञ्च स्फुटं शुद्धप्रयोगजम् ।

नृत्ताङ्गग्राहि लोकज्ञैर्वाद्यं योज्यं तु ताण्डवे ॥ १७९ ॥
स नृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं भवेत् ।
अनृत्तेषु प्रयोगेषु तत्त्वमोघश्च वादयेत् ॥ १८० ॥
स्थिते मध्ये द्रुते चापि यथा गानं तु वादयेत् ।
पदनृत्ताङ्गहारे तु तेनैव प्रक्रमेण तु ॥ १८१ ॥
यो विधिर्गानवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारेषु कर्त्तव्यो नाट्ययोगतः ॥ १८२ ॥
एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् ॥ १८३ ॥

अथ प्रकाराः ।

चित्रः समः विभक्तः छिन्नः छिन्नविद्धः अनुविद्धः स्वरूपानुगतः अनुसृतः विच्युतः दुर्गः अवकीर्णः अर्धावकीर्णः एकरूपः परिक्षिप्तः साचीकृतः समलेखः चित्रलेखः सर्वसमवायः दृढ इति ।

तत्र

निर्वर्तितादिभिः प्रयुक्तं चित्रैः करणैरनेकविधहस्तैः ।
त्रिलयं त्रिपाणियुतं चित्रं वाद्यं बुधैर्ज्ञेयम् ॥ १८४ ॥
दर्दरपणवमृदङ्गैर्नानाकरणैस्तुयः सम्यक् ।
तालाङ्गवंशानुयुक्तः स तु विज्ञेयः समो नाम ॥ १८५ ॥
नात्यायतश्च यः स्यात् संस्थानतः समं विभक्तश्च ।
अक्षरपाणिलयेषु च विभक्तकरणे विभक्तस्तु ॥ १८६ ॥
वाद्यं तु त्रिलयं यत्र सहसा च विवर्द्धते ।
सर्वातोद्यैः प्रवृत्तं तु प्रकारश्छिन्न एव सः ॥ १८७ ॥
अवपाणि मृदङ्गानां पणवोपरिपाणि च ।
भवतो यत्र वाद्ये तु च्छिन्नविद्ध इति स्मृतः ॥ १८८ ॥
मृदङ्गकरणं वाद्यं पणवो वेधयेद्यदि ।
सूचीवेधैर्विचित्रैस्तु करणैर्विद्ध एव सः ॥ १८९ ॥
विद्धानुविद्धं यद्वाक्यं सर्वातोद्येषु दृश्यते ।
परस्परविरोधे तु अनुविद्धं तु स स्मृतः ॥ १९० ॥

विशुद्धवाद्यं प्रकृतिः समतालकृतस्तथा ।
स्वरूपानुगतश्चैव स्वरूप इति स स्मृतः ॥ १९१ ॥
मुरवान् पणवो वापि पणवो दुर्दुरोऽपि वा ।
तथानुयायादातोद्यं स्वरूपानुगतस्तु सः ॥ १९२ ॥
अनुगत्य मुदाऽऽतोद्यं गच्छेद्यत् समयं पुनः ।
श्रुतवत्समता वाद्ये तदानुसृत उच्यते ॥ १९३ ॥
एकैकानुगतं वाद्यं वाद्यजातिसमान्वितम् ।
कृत्वाऽन्यजातिकं कुर्यात् तदानुसृताविच्युतः ॥ १९४ ॥
यत्र प्रचारविषमं सर्वमार्गप्रबोधनम् ।
अविभक्ताक्षरकृतं तद् दुर्गं वाद्यमुच्यते ॥ १९५ ॥
समवृत्ते मृदङ्गस्तु वाद्यते पणवैर्यदा ।
नानाविचित्रकरणैरवकीर्णस्तदा स्मृतः ॥ १९६ ॥
द्रुतं लयं समारुह्य पणवो दर्दुरोऽपि वा ।
अवसानोऽपि यत्र स्यादर्धकीर्णा तु सा यदा ॥ १९७ ॥
सर्वातोद्यानि यत्रैकं कारणं भावयन्ति च ।
समवृत्तपदान्येव एकरूपमिति स्मृतः ॥ १९८ ॥
पणवैश्चोदितं यत्र वाद्यमल्पं मृदङ्गजम् ।
सुविभक्ताक्षरपदं परिक्षिप्तस्तु स स्मृतः ॥ १९९ ॥
चित्रं हि करणं यत्र पदैर्नैकेन वाद्यते ।
नृत्ताङ्गहारानुगतं ज्ञेयं साचीकृतं तु तत् ॥ २०० ॥
कृत्वोपरिगतं वाद्यं पणवो दर्दुरोऽपि हि ।
यत्रोदीक्षेत मुरवान् समलेखस्तु स स्मृतः ॥ २०१ ॥
सर्वमार्गकृतो यस्तु सर्वपाणिलयाश्रयः ।
विचित्रश्च विभक्तश्च स सर्वसमवायकः ॥ २०२ ॥
यस्तु मध्यलयोपेतः समः सुविहिताक्षरः ।
गतिप्रचारविहितः प्रचारो दृढ एव सः ॥ २०३ ॥
एवमेतेप्रकारास्तु कर्तव्या नाट्यसंश्रयाः ।
गतिप्रचारे गेये च रसभावौ समीक्ष्य तु ॥ २०४ ॥

एते प्रकारा जात्यश्च सर्वमार्गेषु संस्मृताः ।
ये वै गतिप्रचारेषु शुद्धास्ते केवलाः स्मृताः ॥ २०५ ॥

एतेषां प्रयोगमिदानीं वक्ष्यामि। तत्रोपविष्टः प्राङ्मुखो रङ्गे कुतपविनिवेशषः कर्त्तव्यः। तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतपविन्यासः। स्वरङ्गाभिमुखमार्दंगिकपाणविकदार्दरिकेषु गायकगायिकावंशिकवैणिकसहितेषु आशिथिलायततन्त्रीवद्धास्तानितेषु आतोद्येषु यथाग्रामरागमूर्च्छनामार्जनानुलिप्तेषु मृदङ्गेषु धारया निपीडितनिगृहीतार्थगृहीतमुक्तप्रकारकृतेषु दर्दरवाद्यमुख्यविन्यस्तहस्तैः वादनकैर्दैवतानामावाहनविसर्जनार्थं प्रथममेव त्रिसामः कर्त्तव्यः। स तु सर्वसचराचरोऽल्पस्थितिप्रलयकर्त्तुर्ब्रह्मणोऽभिसत्त्वेन प्रथमेन साम्ना वामपार्श्वे चन्द्रं संप्रीणयति दक्षिणेन पन्नगान् अर्धान्तरेण जलसाम्ना मुनीनायतेन बृहत्साम्ना दैवतेन च—

एवं प्रीणयते यस्मात् दैवतानि यथाक्रमम् ।
तस्मात् त्रिसाम विज्ञेयं त्रिसामित्वं बुधैरिह ॥ २०६ ॥
एवञ्च श्रूयते यस्मात् ब्रह्माणं केशवं शिवम् ।
तस्मादेतत् त्रिसामं तु ऋषिभिः परिकीर्त्तितम् ॥ २०७ ॥
चतुर्णामपि वेदानामादावोङ्कार उच्यते ।
तथात्र सर्वगीतानां त्रिसाम परिगीयते ॥ २०८ ॥
त्रिप्रकारं त्रिलयकं तथा चैवाड्डिताश्रयम् ।
षट्कलं त्रिकलं चैव त्रिसाम परिकीर्त्तितम् ॥ २०९ ॥
त्रिविधं साक्षरविधोः गुरुलघ्वक्षरान्वितः ।
अकारश्च मकारश्च त्रिकैः त्रिगुणितं भवेत् ॥ २१० ॥

तस्यैव चान्ते पूर्वरङ्गविधानमनुप्राप्य च्छन्दःसमेनाक्षरसमेन च वाद्यम्। बहिर्गीतिविधानं तु त्रिलयं वर्त्तनीयम्। तत्र च सारितम् वियोगश्च तथानुगतं वाद्यं प्रायः प्रयोक्तव्यम्। वृत्ते वस्तु त्रिसाम्ना च प्रकृत्याहारोऽयं वर्त्तनम्। को गीतितावद्वाद्यं प्रवर्त्तते यत्रादौ वामोर्ध्वगप्रचारयुतम्(?)। पश्चादालिंगनविमर्दनं गोपुच्छायति सामाद्यविचित्रकरणयुतं चतुर्मार्गं विपञ्चिवाद्यं प्रवर्त्तयितव्यम्। पूर्वं भाण्डेनाभिव्यञ्जिते रङ्गे ध्रुवाविधिः।

स्त्रीबालं मुक्त्वा विकीर्णे च रङ्गे कुतूहलमुत्पन्नार्थम् ।

भवत्यपि ।

आचार्याः सममिच्छन्ति पादच्छेदं तु पण्डिताः ।
सुकुमारं स्त्रियश्चैव विकृष्टमितरे जनाः ॥ २११ ॥

तत्र भाण्डे ताण्डवप्रयोगमधिगत्यावतरणकाले लघुवर्णसञ्चयमर्दिकै-रङ्गुलिप्रचनप्रायं वाद्यं योज्यम् । तत्रान्तराभिमुखो गायकस्य वामपार्श्वे वैणिको वैणिकस्य दक्षिणे मृदङ्गवादकः ।

गातुरभिमुखान् गायकान् नर्त्तक्यवतरणगीतान्ते सन्निपाता ज्ञेयाः। लास्यनृत्ताङ्गहारानुगतं वाद्यं करणधातुसंयोगजमित्युच्यते समं रक्तमित्यादि । तत इदानीं सामोर्ध्वगप्रहारसंयुक्तमालिप्तमार्गदेशकरणसंश्रयं समुत्थापनकेन वाद्यं योज्यम् ।

यथा—

घेङ् मति घम्मथां घेङ् धितिटित् संक्रंकंखोकणेदेव्यांकेन्ताकेन्तां किटधेङ् इति ।

पूर्वरङ्गलयपातनिर्दिष्टप्रयोगसमुत्थापनके वाद्यं योज्यमिति । तयोः परं यत् परिवर्त्तनं च मार्दाङ्गिकं शुद्धजात्याश्रयं यथाप्रोक्तम् ।

खोखोणां खोखोणां थखोखो श्रुततद्रव्यैर्यद् वाद्यं स्यात्। पुनस्त्रयो न्यासात् थोखोदोखोखकेणां घएयन्तां घनपुंसकपादे ।

यथा—

खरखोङमार्ग इति चतुर्थकारप्रवेशे च वाद्यं वस्तूत्थापनके चापकृष्टायामर्धमपि चार्यग्रहो

यथा—

घेघेन्तां घेघेङो घखणादोणांदोघदोघेघघे इति ।

शुष्कापकृष्टायां यथा—

थोघो थोखेखधोधेङ् णादम्यङ्खोद्धोकेताखखेखेणकसुगुकघेङ्णो खिखेङ्ताङ्खेङणम् किटिकिटिडघेङ्के घेकटुकघुगुदुकंलबलाखोखोखोवाध्रु-नेटा माणिणम्मां किटिबत्थि इति ।

सन्निपातग्रहणो यथा वामकरणे—

खोखोणंदोदोदोकः मोकःदहेणणाथोथोणोघोघटमटत्थिघं घोघोकटकटझंको खेथितकटकटां घटकमत्थिघोघोमित्थिणांकिटिकिणांखकक्लं इति ।

अलिप्तमार्गत्रिकं वाद्यमतः परमुदाहार्यम् । वितस्तमार्गस्थितिकं वाद्यं प्रदेशिन्या ग्रहो यथा—

णणणखोकणणोमधुणांखोखोमथितकितांताकितांकिटिकितोंखोखोमतितांमत्थित्रमतितिकिन्तिकेन्तांकेन्तांद्रेन्तांनतकेन्तांटघेतान्द्रांक्रन्तां द्रान्तांकिण्णां केण्णां मुद्रांभ्रेंभ्रेंक्लेंध्रुंध्रुंद्राद्रांधद्रेद्रांघेन्द्रांघेन्द्राघङ क्लेङ इति ।

पक्षेपणत्सिद्धिरेतावच्चतुरस्रे पूर्वरङ्गविधाने भाण्डवाद्यं प्रयोजयेत ।

त्र्यस्रे तदेव कालाव्यवहितं पुनश्च नाटकाद्येषु धीरोदात्तधीरोद्धतधीरललितप्रकारान्तानां चतुर्णां नायकानां गतिप्रचारे स्वस्थावस्थासु निर्गतं वाद्यमुपदेक्ष्यामः। तत्र ब्रंध्रंध्रंध्राद्रंप्रायो देवानां गतौ प्रयोज्यम्। घेन्तां प्रयोज्यं राज्ञाम् । ध्रंक्लंघटुघेङ्घेङ्टत्थिदुनकिटीद्रांणांणांध्रद्रा प्रायोमध्यमपुरुषे वाद्यम् । पुनरेव स्थितायां वाद्यविधानं वक्ष्यामि ।

त्रिकद्विकलैककला चतुष्कलाश्चैव पादविन्यासाः ।
तत्र तु साम्यं कार्यं कार्यं भाण्डेन प्रसन्नगानेन ॥ २१२ ॥
स्वस्थो गतिप्रचारो वाद्यं त्रिकलञ्चतुष्कलं वापि ।
लययतिविधानं समीक्ष्य तज्ज्ञैः प्रयोक्तव्यम् ॥ २१३ ॥
नह्येकाद्विकला वा ध्रुवाविरामा भवन्ति वाद्येषु ।
तस्माद्भाण्डेन च तं.... साम्यं न गानेन ॥ २१४ ॥
सर्वत्रत्वरितगमनेषु पाताः पूर्वकाये गतिप्रचारेषु ।
ध्रङ्घङ्घङ्घेङप्रायस्तत्र च वाद्यं प्रयोक्तव्यम् ॥ २१५ ॥
गौरं विमानयाने पक्षिचलाकाशजगुलिचलनात् ।
कार्यं वाद्यञ्चतुष्केप्यन्योन्यकरामिह तं वाद्यम् ॥ २१६ ॥

दुःखार्त्तिव्याधितशापक्लेशनिपतितेष्टजनविभवनाशवधबन्धप्रातीनियमोपवासयुक्तेषु पूर्वालिप्तामार्गाश्रितमुत्थापनवाद्यं प्रयोज्यं स्यात् । दैत्यदानवयक्षराक्षसभूतपिशाचग्रहादीनां घृङ्द्रुङ्खदसंयुक्तं घटुतुतन्ततेतोद्रां

इत्येवमादिकारणैर्गतिर्वाद्यं प्रयोजयेत् । खञ्जविकलवामनकुब्जादीनां प्रवृत्तगमनेषु घेतां कटकामिति वाद्यं प्रयोक्तव्यम् ॥

यतिमुनिशाक्यादीनां लिङ्गिनां दोखोद्धित्विखिदगुदुवोओक्लन-दोधन्तिकितिकि वाद्यं प्रयोक्तव्यम्। विदूषकोपस्थापकण्डवनिर्मुषवरादी-नां घे घेंस्ताणोण्णादोण्णण्णामिति वाद्यम् । पुनश्चैवाथ वृद्धश्रोत्रियकञ्चु-किस्थूलादीनां ध्रींध्रोंध्रांङ्ड्रोङ्धिङ्द्रोणांखोखोणा इति वाद्यं प्रयोक्तव्यम्।

अथ राज्ञां अविघद्रोंकंखुखु इति वाद्यं प्रयोज्यम्। अथ मध्यमानां वेश्याशिल्पकारिकाणां नाटकीयानां घखुखुधिकिटमथिकिणटोणांधो इति।

एवं तावत् समासादभिहितं स्त्रीणामवस्थान्तरितानाञ्च । एत एव पौरुषवाद्यविशेषाः तस्मात् सामान्यतो हि भयक्लेशशोकक्रोधादयो विभावाः समुत्पद्यन्ते । तत्र भावापेक्षं मार्गाश्रितं वाद्यं योज्यम् । भवत्यपि च

जातिमार्गप्रचारैस्तुकरणैरक्षरै स्तथा ।
वादयद्भिस्तुसङ्कीर्णं स श्रेष्ठो वादकः स्मृतः ॥ २१७ ॥

अन्तर्वाद्यानि च अनुबद्धं विप्रहारिकं सिद्धग्रहणं परिच्छिन्नमिति । तत्रानुबद्धसञ्ज्ञानामन्तर्वाद्यम् ।

यथा–खोखोणेखेघे इति ।

वाद्यविप्रहारिका यथा––ध्रंद्रांखोखो इति

सिद्धिरपि

ऐश्वर्ये विस्मृते श्रान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वा तत्र कर्त्तव्या नानाकरणसंश्रया ॥ २१८ ॥

सा च सिद्धिर्यथामार्गकरणाश्रया कार्या चित्रकरणा पञ्चषट्कला ।

अथ परिच्छिन्नं सार्वभाण्डिककृतध्रुवाभूयोपगमनगभीरधीरप्रहार-मुद्धतं यथा––

पञ्चषट्कलञ्च तत्रोत्तमानावितस्तभुजाश्रितं घुंघुंघुंल्कइति । अथो-त्तमस्त्रीणामडुंडितवाद्याश्रितं यथा–णणांखोखोणण्णामिति । अथाधमानां खण्डननत्कुटविषयं यथा–सङ्केतकिटिविण्णामिति । अवस्थान्तरेषु पुनरेत-देवार्धकृतम् ।

भवत्यपि च--

वाद्यविरामे वाद्यं साधनकृते विरामे च ।
वस्त्राहरविनिपाते नर्कुटस्य च संयमनकाले ॥ २१९ ॥

अथः प्रासादिक्यां समपादो विभक्त्यन्तरेण वाद्यं योज्यम् । द्रुतायामुपरि पाणिकश्चित्रकरणं अड्डितायामवकृष्टयामेकसन्निपातकृतमिति ।

एवमेतत्प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ।
प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च ॥ २२० ॥
अभाण्डमेकं गीतं तु परिवर्त्य प्रयोजयेत् ।
सन्निपातावसानेषु भाण्डवाद्यग्रहो भवेत् ॥ २२१ ॥

अड्डितायाञ्च णः देदेदेदेखो दण्णंधुंधुं इति । अथ नर्कुटखञ्जयोः णण्णावुवुणाणाखोणाण्णा देदेदेदेखोखोखोखइति ।

अथोद्घत्यम्--

संक्रमावेगामर्षार्थविस्मयोत्साहशोकजम् ।
भोगायतस्य यत् वाद्यं तमुद्घात्यं प्रकीर्त्तितम् ॥ २२२ ॥

मोक्षमिदानीमुपदेक्ष्यामः । तत्राड्डितां किन्ताकिन्तां इति असतस्थितायां घततामिति अपकृष्टायां ववतामिति ।

एवमेते ग्रहा मोक्षा द्रुतपत्राणां गदिता मया ।
निष्क्रामे च प्रवेशे च आक्षेपिक्यन्तरासु च ॥ २२३ ॥

एवं तालकालस्वराज्ञाननुमार्दङ्गिकेन भवितव्यम्

भवन्ति चात्र श्लोकाः--

अकालज्ञमतालज्ञमशास्त्रज्ञश्च वादकम् ।
चर्मघातकमित्येवं प्रवदन्ति मनीषिणः ॥ २२४ ॥
अनेनैव विधानेन योज्यं वाद्यं प्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि आतोद्यानां तु लक्षणम् ॥ २२५ ॥
त्रिविधा क्रिया मृदङ्गानां हरिदक्रियवाश्रया ।
तथा गोपुच्छरूपा च भवत्येषां स्वरूपतः ॥ २२६ ॥
हरीतक्या तु तिस्त्वङ्क्या यमयध्यस्ततध्वकः ।
आलिङ्गश्चैव गोपुच्छा कृतिरेषां प्रकीर्तिताः ॥ २२७ ॥

तालास्त्रयो ध्वताश्च मृदङ्गाङ्कित इष्यते ।
मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥ २२८ ॥
तयोर्ध्वकश्च कर्त्तव्यश्चतुस्तालप्रमाणकम् ।
मुखं तस्याङ्गुलानि स्युः अष्टावेव समासतः ॥ २२९ ॥
पणवश्चापि कर्त्तव्यो दीर्घत्वात् षोडशाङ्गुलः ।
कृशो मध्याङ्गुलस्याष्टौ पञ्चाङ्गुलमुखं तथा ॥ २३० ॥
ओष्ठं तस्य च कर्त्तव्यं तज्ज्ञैरध्यार्धमङ्गुलम् ।
मध्ये तु सुषिरं तस्य चत्वारो वाङ्गुलानि तु ॥ २३१ ॥
दर्दरस्य घटाकारो भवत्यष्टिमुखस्तथा ।
मुखं च तस्य कर्त्तव्यं घटस्य सदृशं बुधैः ॥ २३२ ॥
द्वादशाङ्गुलविस्तीर्णं पीनोष्ठञ्च समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥ २३३ ॥
न जीर्णोपहतञ्चर्म न च काकमुखावहम् ।
न मेदोपगतं किञ्चित् न च धूमादिदूषितम् ॥ २३४ ॥
षड्भिर्दोषैर्विनिर्मुक्तं चर्म निर्वर्त्तितं गवा ।
देवताभ्यर्चनां कृत्वा ततः स्थाप्य महीतले ॥ २३५ ॥
चित्रायामथवा हस्तेऽहनि पुण्ये शुभे तिथौ ।
उपाध्यायः शुचिर्भूत्वा कुलीनो रागवर्जितः ॥ २३६ ॥
घनज्ञो गीततत्त्वज्ञो मधुरो नियतेन्द्रियः ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ॥ २३७ ॥
मण्डलत्रयमालिख्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥ २३८ ॥
आलिंग्य स्थापयेत्पूर्वं ब्रह्माणं पूर्वमण्डले ।
उर्ध्वगं तु द्वितीयेऽस्मिन् रुद्रनाम्ना निपातयेत् ॥ २३९ ॥
तिर्यक्कृतां गतिं सम्यक् वैष्णवे मण्डले न्यसेत् ।
बलिपुष्पोपहारैश्च नानापुष्पैर्विचित्रितैः ॥ २४० ॥
आलिंगे च बलिं दद्यात् मधुपायससिश्रितम् ।
आपूपोल्लपिकामिश्रा मांगिके सम्प्रदापयेत् ॥ २४१ ॥

अनन्तरञ्च दातव्यः सर्वमेवोर्ध्वेग बलिः ।
स्वस्तिका धूपिकधूपरूपकैश्चालितैः सह ॥ २४२ ॥
उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषितैः ।
बलिः कार्यः प्रयत्नेन रक्तो रक्ताम्बरैः सह ॥ २४३ ॥
वैष्णवे मण्डपे स्थाप्य सर्ववीजकृतोहितम् ।
शुद्धस्यालम्बनैः पीतैः चरुभिश्च सपायसैः ॥ २४४ ॥
वाचयित्वा द्विजान् स्वस्ति दत्वा पूर्वप्रदक्षिणान् ।
पूजयित्वा तु गन्धर्वान् पश्चाद् वाद्यं समाचरेत् ॥ २४५ ॥
तन्त्रीभिः पणवन्तु स्यात् मृष्टाभिः समन्ततः ।
घातपुष्करिकाश्चैव योजयेत्तत्र कर्मणा ॥ २४६ ॥
मृदङ्गपणवा वापि कर्त्तव्या दर्दुरास्तथा ।
दैवतानि च वक्ष्यामि यान्येषाञ्च भविष्यति ॥ २४७ ॥
लक्षश्लक्ष्णश्शंकुकर्णे भ्रामणी तु तथा महान् ।
एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ॥ २४८ ॥
दृष्ट्वा मृदङ्गपणवदर्दरञ्च महामुनिः ।
मेघैस्तु रससंवादान् मृदङ्गो नाम वापरान् ॥ २४९ ॥
विद्युज्जिह्वा भवेद्वामो मेघस्य तु महात्मनः ।
एरावणो महामेघः तथा चोर्ध्वगतो भवेत् ॥ २५० ॥
आलिङ्गे च तडित् ख्याता नाम्ना मेघो बलाहकः ।
दक्षिणे पुष्करो मेघः कोकिला नामतः स्मृतः ॥ २५१ ॥
मृदङ्गश्चैव नाम्ना च ऊर्ध्वगो नान्यथोच्यते ।
अङ्गारस्मिरिरत्यैव मालिङ्गश्चाष्ट पिङ्गलः ॥ २५२ ॥
तत्प्रियोऽपि बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ।
पूजयित्वा तु तां देवीं प्रेक्षां रङ्गे प्रकल्पयेत् ॥ २५३ ॥
रीषस्य संघाते मृदङ्ग स्थापयेद् बुधः ।
नाटकेऽङ्के प्रकरणे वीत्थ्यां भाणे डिमे तथा ॥ २५४ ॥
मृदङ्गपणवांश्चापि दर्दरं चोपकारयेत् ।
एवमेतद् बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ॥ २५५ ॥

अत ऊर्ध्वं प्रवक्ष्यामि उपहस्तस्य लक्षणम् ।
कर्तरी समहस्तश्च हस्तपाणित्रयं तथा ॥ २५६ ॥
वर्त्तनाद् दण्डहस्तश्च पश्चक्षिज्ञाकरस्ततः ।
तर्जन्याङ्गुष्ठयोगेन स्वत्रे जातिगतिस्ततः ॥ २५७ ॥
पर्यागापतनैर्ज्ञेया कर्तरी हस्तयोर्द्वयोः ।
समयोः समतालेन द्वयोर्हस्तसमाश्रयोः ॥ २५८ ॥
पर्यायतः प्रभातो यः समहस्त इति स्मृतः ।
विभावितव्या वामस्य पार्ष्णिनाङ्गुलिभिस्तथा ॥ २५९ ॥
सकृद्दक्षिणहस्तस्य हस्तपाणित्रयं भवेत् ।
पूर्वदक्षिणहस्तेन क्रमाद्वामेन पादतः ॥ २६० ॥
चत्वारो यत्र वर्तन्ते वर्त्तनाद्वर्तनाः स्मृताः ।
प्रथमं वामहस्तेन गृहीत्वा दक्षिणेन तु ॥ २६१ ॥
प्रहाराः क्रमपादेन दण्डहस्तः समस्तयोः ।
सौष्ठवं लाघवञ्चैव बाहुल्यं दृढतापि च ॥ २६२ ॥
सर्वेषाञ्चैव हस्तानां गुणाश्चत्वार ईरिताः ।
एवमेतन्मया प्रोक्तं हस्तानामपि लक्षणम् ॥ २६३ ॥
अत ऊर्ध्वं प्रवक्ष्यामि वादकानां तु लक्षणम् ।
गीतवातकलावातगृहमोक्षविशारदः ॥ २६४ ॥
अथ लघुहस्तश्चित्रपाणिर्विधिज्ञः सिद्धिस्थाने ।
ध्रुवाकुशलःकलाभिरतःमधुरहस्तःसुनिविष्टो मार्जनो बलवान् २६५॥
सुविहितशरीरबुद्धिः संसिद्धो वादकः श्रेष्ठः ।
आलेपनप्रमाणश्च चतुर्मार्गकृताश्रयः ॥ २६६ ॥
प्रग्रहीता सिद्धानामाङ्गदोषविवर्जितः ।
निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी च प्रशस्यते ॥ २६७ ॥

एतत्सर्वं नाट्ययोगं समीक्ष्य
प्रोक्तं वाद्यं सर्वलोकानुमानात् ।
नोक्तं यच्चेदागमाच्छास्त्रबुद्ध्या
सद्भिः कार्यं मार्गजार्ताः समीक्ष्य ॥ २६८ ॥

स्फुटप्रहारं विशदं विभक्तं
रक्तं विघुष्टं करलेपनं च ।
त्रिमार्जनं पूरितरागयोगं
मृदङ्गवाद्यं गुणतो वदन्ति ॥ २६९ ॥
वाद्येषु यत्नः प्रथमं तु कार्यः
शय्या हि नाट्यस्य वदन्ति वाद्यम् ।
वाद्येऽपि गीतेऽपि च संप्रयुक्ते
नाट्यस्य योगो न विनाशमेति ॥ २७० ॥

इति श्रीभारतीये नाट्यशास्त्रे वाद्याध्यायो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

# अथ चतुस्त्रिंशोऽध्यायः ।

अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां तु लक्षणम् ।
समासतस्तु प्रकृतिस्त्रिविधा परिकीर्तिता ॥ १ ॥
पुरुषाणामथ स्त्रीणामुत्तमाधममध्यमा ।
जितेन्द्रिया ज्ञानवती नानाशिल्पविचक्षणा ॥ २ ॥
दक्षिणाऽथ भगालक्षा (?) दीनानां परिसान्त्विनी ।
नानाशास्त्रार्थसम्पन्ना गाम्भीर्योदार्यशालिनी ॥ ३ ॥
धैर्यत्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा ।
लोकोपचारचतुरा शिल्पशास्त्रविशारदा ॥ ४ ॥
विज्ञानमाधुर्ययुता मध्यमा प्रकृतिः स्मृता ।
रूक्षा वचसि दुःशीलाः कुसत्त्वाः स्वल्पबुद्धिकाः ॥ ५ ॥
क्रोधना घातकाश्चैव मित्रघ्नाश्छिद्रघातकाः ।
पिशुना उद्धता वाक्यैरकृतज्ञास्तथालसाः ॥ ६ ॥
मान्या मानविशेषज्ञाः स्त्रीलोलाः कलहप्रियाः ।
सूचकाः पापकर्माणः परद्रव्यापहारिणः ॥ ७ ॥
एभिर्दोषैस्तु सम्बद्धा भवन्ति ह्यधमा नराः ।
एवञ्च शीलतो नृणां प्रकृतिस्त्रिविधा स्त्रियः ॥ ८ ॥

स्त्रीणां पुनस्तु प्रकृतिं व्याख्यास्याम्यनुपूर्वशः ।
मृदुभावा त्वचपला स्मितभाविन्यनिष्ठुरा ॥ ९ ॥
गुणानां वचने दक्षा सलज्जा विनयान्विता ।
रूपाभिजनमाधुर्या गुणैः स्वाभाविकी स्मृता ॥ १० ॥
गाम्भीर्यधैर्यसम्पन्ना सा ज्ञेया प्रमदोत्तमा ।
नात्युत्कृष्टैरशिथिलैरेभिरेव वृता गुणैः ॥ ११ ॥
अल्पदोषानुविद्धा च मध्यमा प्रकृतिः स्मृता ।
अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता ॥ १२ ॥
विज्ञेया सैव नारीणामधमानां समासतः ।
नपुंसकस्तु विज्ञेयः सङ्कीर्णोऽधम एव च ॥ १३ ॥
चेट्यादेरपि विज्ञेया सङ्कीर्णा प्रकृतिर्द्विजाः ।
विदूषकः शकारश्च ये चान्येप्येवमादयः ॥
सङ्कीर्णा नाटके ज्ञेयास्ते तज्ज्ञैर्नाटके बुधैः ॥ १४ ॥
एता ज्ञेयाः प्रकृतयः पुरुषस्त्रीनपुंसकाः ।
आसां तु सम्प्रवक्ष्यामि विधानं शीलसंश्रयम् ॥ १५ ॥
तत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः ।
मध्योत्तमायां प्रकृतौ नानालक्षणलक्षिताः ॥ १६ ॥
धीरोद्धता धीरललिता धीरोदात्तास्तथैव च ।
धीरप्रशान्तकाश्चैव नायकाः परिकीर्तिताः ॥ १७ ॥
देवा धीरोद्धता ज्ञेया ललितास्तु नृपाः स्मृताः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥ १८ ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ।
एतेषां च पुनर्ज्ञेयाश्चत्वारश्च विदूषकाः ॥ १९ ॥
लिङ्गानि ते वरजवा शिष्टाश्चेति यथाक्रमम् ।
देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत् ॥ २० ॥
विप्रलम्भे सुहृद्दासी सङ्कथालापपेशला ।
व्यसनी प्राप्तदुःखा वा युज्यते भूमिपेन सा ॥ २१ ॥
तथा पुरुषबाहुल्यप्रधानो नायकः स्मृतः ।

तत्रानेकस्य भवतो व्यसनाभ्युदयौ पुनः ॥ २२ ॥
प्रकृष्टौ यस्य तौ स्यातां स भवेत्तत्र नायकः ।
एते तु नायका ज्ञेया नानाप्रकृतिलक्षणाः ॥ २३ ॥
धीरा च ललिता च स्यात् उदात्ता निभृता तथा ।
दिव्यानां जातयस्तैस्तैर्गुणैर्युक्ता भवन्ति हि ॥ २४ ॥
उदात्तनिभृता चैव भवत्येव कुलाङ्गना ।
ललिता चाप्युदात्ता च गणिका शिल्पकारिका ॥ २५ ॥
प्रकृतीनां तु सर्वासामुपचारो द्विधा स्मृतः ।
बाह्यश्चाभ्यन्तरश्चैव तयोर्वक्ष्यामि लक्षणम् ॥ २६ ॥
तत्र राजोपचारस्तु यो भवत्यान्तरंस्तु सः ।
ततो बाह्योपचारस्तु यः स बाह्यक उच्यते ॥ २७ ॥
तत्र राजोपचारं तमन्तःपुरसमाश्रयम् ।
स्त्रीविभागं प्रवक्ष्यामि अन्तःपुरसमाश्रयम् ॥ २८ ॥
महादेव्यस्तथा देव्यः स्वामिन्यः स्थापिता अपि ।
भोगिन्यः शिल्पकारिण्यो नाटकीयाश्च नर्त्तिकाः ॥ २९ ॥
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः ।
तथा सञ्चारिकाश्चैव तथा प्रेषणचारिकाः ॥ ३० ॥
महत्तर्यः प्रतीहार्यः कुमार्यः स्थविरा अपि ।
आयुक्तिकाश्च नृपतेरयमन्तःपुरो जनः ॥ ३१ ॥
तत्र मूर्द्धाभिषिक्ता या कुलशीलसमन्विता ।
गुणैर्युक्ता वयःस्था च मध्यस्था क्रोधना तथा ॥ ३२ ॥
मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समम् ।
शान्तिस्वस्त्ययने भर्त्तुः सततं मङ्गलैषिणी ॥ ३३ ॥
शान्ता पतियुता धीरा अन्तःपुरहिते रता ।
एभिर्गुणैस्तु सम्पृक्ता महादेव्य उदाहृताः ॥ ३४ ॥
एभिरेव गुणैर्युक्ता सत्संस्कारैस्तु वर्जिताः ।
गर्वितास्त्वपि सौभाग्यात् प्रीतिसम्भोगतत्पराः ॥ ३५ ॥
शुचिनित्योज्वलाकाराः प्रतिपक्ष्याभ्यसूयिकाः ।

वयोरूपगुणाढ्यास्तु यास्ता देव्यः प्रकीर्तिताः ॥ ३६ ॥
सेनापतेरमात्यानां भृत्यानामथवा पुनः ।
भवेयुस्तनयास्तास्तु प्रीतिसम्मानवर्धिताः ॥ ३७ ॥
शीलरूपगुणैर्यास्तु सम्पन्ना नृपवल्लभाः ।
स्वगुणैर्लब्धमाहात्म्याः स्वामिन्य इति ताः स्मृताः ॥ ३८ ॥
रूपयौवनशालिन्यः कर्कशा विभ्रमान्विताः ।
अतिसम्भोगकुशला प्रतिपक्ष्याभ्यसूयिकाः ॥ ३९ ॥
दक्षा भर्त्तुश्च चित्तज्ञा लेख्यालेख्यविचक्षणाः ।
शयनासनभोगज्ञा मधुराश्चतुरास्तथा ॥ ४० ॥
दक्षाः सौम्याः स्फुटाः श्लक्ष्णा निभृताः शिल्पकारिकाः ।
स्वरतालयतिज्ञाश्च तथाऽऽचार्योपसेविकाः ॥ ४१ ॥
चतुरा नाट्यकुशलाश्चोहापोहविचक्षणाः ।
रूपयौवनसम्पन्ना नाटकीयाश्च नर्तकी ॥ ४२ ॥
हेलाभावविशेषज्ञाः सत्त्वेनाभिनयेन च ।
माधुर्येण च सम्पन्ना ह्यातोद्यकुशलास्तथा ॥ ४३ ॥
अङ्गप्रत्यङ्गसम्पन्नाश्चतुष्षष्टिकलान्विताः ।
चतुराः प्रश्रयोपेतास्त्रिदोषैश्च विवर्जिताः ॥ ४४ ॥
समाः प्रागल्भ्ययुक्ताश्च त्यक्तालस्या जितश्रमाः ।
नानाशिल्पप्रयोगज्ञा नृत्तगीतविचक्षणाः ॥ ४५ ॥
अर्थरूपगुणौदार्यसौभाग्यधैर्यवीर्यसम्पन्ना ।
पेशलमधुरा स्निग्धा न च विकला चित्रकर्मकुशला च ॥ ४६ ॥
समागतासु नारीषु रूपयौवनकान्तिभिः ।
न दृश्यते गुणैस्तुल्या यस्याः सा नर्तकी स्मृता ॥ ४७ ॥
सर्वावस्थोपचारेषु या न मुञ्चति पार्थिवम् ।
विज्ञेया दक्षिणा दक्षा शय्यापाली तथाच्युता ॥ ४८ ॥
रसव्यञ्जनधारिणी संवाहिनी गन्धयोक्त्री तथा ।
तथाभरणयोक्त्री च मालासंयोजिका तथा ॥ ४९ ॥
एवंविधा भवेयुर्यास्ता ज्ञेयाः परिचारिकाः ।

नानाकक्ष्याविचारिण्यस्तथोपवनसञ्चराः ॥ ५० ॥
दवतायतनक्रीडाः प्रासादपरिचारिकाः ।
यामकिन्यस्तथा चैव याश्चैवंलक्षणाः स्त्रियः ॥ ५१ ॥
सञ्चारिकास्तु विज्ञेया नाट्यज्ञैर्भोगवारिताः ॥
प्रेक्षणैः कामसंयुक्तैर्युक्ता गुह्यसमुत्थितैः ।
प्रेक्षणीया नृपैर्यास्तु ता ज्ञेयाः परिचारिकाः ॥ ५२ ॥
सर्वान्तःपुररक्षास्तु स्तुतिस्वस्त्ययने च याः ।
या वृद्धिमभिनन्दन्ति महत्तर्यस्तु ताः स्मृताः ॥ ५३ ॥
पूर्वरङ्गनयाभिज्ञाः पूर्वराज्ञाभिपूजिताः ।
सर्वानुचरितज्ञाश्च ता वृद्धा इति संज्ञिताः ॥ ५४ ॥
भाण्डागारेष्वधिकृताः सायुधा विकृतास्तथा ।
फलमूलौषधीनाञ्च तथा चैवान्नवीक्षणाः ॥ ५५ ॥
गन्धाभरणमाल्यानां वस्त्राणां चैव चिन्तकाः ।
वह्वाश्रयास्तथा युक्ता विज्ञेया युक्तिकाः स्मृताः ॥ ५६ ॥
इत्यन्तःपुरचारिण्यः स्त्रियः प्रोक्ताः समासतः ।
विशेषणं विशेषेण तासां वक्ष्यामि वो द्विजा ॥ ५७ ॥
या नियुक्ता नियोगेषु प्रयोगेषु न चोद्भटाः ।
न चोद्भ्रान्ता न लुब्धा च नातिनिष्ठुरमानसाः ॥ ५८ ॥
शान्ताः क्षान्ताः प्रसन्नाश्च जितक्रोधा जितेन्द्रियाः ।
अकामाश्चापि पूज्याश्च स्त्रीदोषैश्च विवर्जिताः ॥ ५९ ॥
अनुरक्ताश्च भक्ताश्च नानापार्श्वसमुत्थिताः ।
ता नियोगेषु योक्तव्याः सर्वदोषविवर्जिताः ॥ ६० ॥
या सा नपुंसका नाम तृतीया प्रकृतिः स्मृता ।
साऽप्यन्तःपुरसञ्चारे योज्या पार्थिववेश्मनि ॥ ६१ ॥
कारकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः ।
औपस्थायिकनिर्मुण्डाः स्त्रीणां प्रेषणकर्माणि ॥ ६२ ॥
रक्षणे च कुमारीणां बालिकानाञ्च योजयेत् ।
अन्तःपुराधिकारो हि राजभार्यानुवर्तनम् ॥ ६३ ॥

सर्ववृत्तान्तयोगज्ञं नाट्यागारे निवेशयेत् ।
वनितास्वल्पसत्वा ये ये क्लीवा स्त्रीस्वभावकाः ॥ ६४ ॥
जात्या न भाषिणश्चैव ते वै वर्षवराः स्मृताः ।
ब्राह्मणाः कुशला वृद्धाः कलादोषविवर्जिताः ॥ ६५ ॥
प्रयोजनेषु देवीनां नियोक्तव्या नृपैः सदा ।
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ॥ ६६ ॥
अतः परं प्रवक्ष्यामि बाह्यपूरुषसञ्चरम् ।
राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा ॥ ६७ ॥
सचिवाः प्राड्विवाकास्तु कुमारकृतस्तथा ।
एते चान्ये च बहवो मान्या ज्ञेया नृपस्य तु ॥ ६८ ॥
विशेषमेव वक्ष्यामि लक्षणानि निबोधत ।
बलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः ॥ ६९ ॥
दक्षः प्रगल्भो मतिमान् विक्रान्तो मतिमान् शुचिः ।
दीर्घदर्शी महोत्साहो कृतज्ञः प्रियवाक् पटुः ॥ ७० ॥
लोकपालव्रतधरः कर्ममार्गविशारदः ।
उत्थितश्चाप्रमत्तश्च वृद्धः स्मृत्यर्थशास्त्रवित् ॥ ७१ ॥
परदोषेऽङ्गिताभिज्ञः शूरः रक्षासमन्वितः ।
ऊहापोहविचारी च नानाशिल्पप्रवर्तकः ॥ ७२ ॥
नीतिशास्त्रे च कुशलो गुणैरेभिर्भवेन्नृपः ।
बुद्धिमान्नीतिसपन्नो विक्रान्तः स्यात् प्रियंवदः ॥ ७३ ॥
अर्थशास्त्रे च कुशलो ह्यनुरक्तः प्रजासु च ।
यो धार्मिकस्तथामात्याः कर्तव्या भूमिपैः सदा ॥ ७४ ॥
व्यवहार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ॥
मध्यस्था धार्मिकधियः कार्याकार्यविचक्षणाः ॥ ७५ ॥
क्षान्ता दान्ता जितक्रोधाः सर्वत्र समदर्शिनः ।
ईदृशाः प्राड्विवाकाश्च स्थाप्या धर्मपरैर्नृपैः ॥ ७६ ॥
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितश्रमाः ।
स्निग्धाः क्षान्ता विनीताश्च मध्यस्थाः निपुणास्तथा ॥ ७७ ॥

नयज्ञा विनयज्ञाश्च ऊहापोहविशारदाः ।
सर्वशास्त्रार्थसम्पन्नाः कामाद्यविकृतास्तथा ॥ ७८ ॥
वृहस्पतिमतादेतान् गुणांश्चाप्यभिलक्षयेत् ।
विज्ञेयं चापधूर्यं च सभास्तारविकल्पनम् ॥
अत ऊर्ध्वं प्रवक्ष्यामि लक्षणं भूमिकास्वपि ॥ ७९ ॥

इति भारतीये नाट्यशास्त्रे प्रकृतिविचारो नाम
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥



## अथ पञ्चत्रिंशोऽध्यायः ।

भूभागं भूमिकानां तु संप्रवक्ष्यामि नाटके ।
यादृशैरेव कर्त्तव्या पुरुषैर्भूमिकास्तथा ॥ १ ॥
गतिवागङ्गचेष्टाभिः सत्त्वशीलसमासतः ।
मन्थरं वामनं कुब्जं विकृतं विकृताननम् ॥ २ ॥
विसृष्टनेत्रकार्याणां स्थूलं विहनुनासिकम् ।
दुर्वेषि दुःस्वभावञ्च विकृताकारमेव च ॥ ३ ॥
दासभूमौ प्रयुञ्जीत बुधो दासाङ्गसंयुतम् ।
प्रकृत्या तु कृशं क्षामं तत्र श्रान्तेषु योजयेत् ॥ ४ ॥
तथा च पुरुषं स्थूलं ह्यरोगेषु प्रयोजयेत् ।
यदि वा नेदृशा सन्ति प्रकृत्या पुरुषा द्विजाः ॥ ५ ॥
आचार्यबुद्ध्या योक्तव्या भावचेष्टास्वभावतः ।
या यस्य सदृशी चेष्टा स्वभावः कर्म वा तथा ॥ ६ ॥
या यस्य सदृशी चेष्टा उत्तमाधममध्यमा ।
सा तथा चान्ययोगेन नियम्या भावभाविनी ॥ ७ ॥
एवमन्येष्वपि तथा नाट्यधर्मी प्रशस्यते ।
देशवेषानुरूपेण पात्रं योज्यं हि भूमिषु ॥ ८ ॥
बहुबाहो बहुमुखस्तथा च विकृताननः ।
पशुश्वापदासिंहाश्च खरोष्ट्रा वारणास्तथा ॥ ९ ॥

एते चान्ये च बहवो नानारूपा भवन्ति ये ।
आचार्यबुद्ध्या कर्त्तव्या मृत्काष्ठजनचर्मभिः ॥ १० ॥
स्वाभाविकेन भावेन प्रविशेद्रङ्गमण्डपम् ।
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ॥ ११ ॥
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ।
वयोवेषानुरूपेण प्रयुक्तं नाट्यकर्मणि ॥ १२ ॥
यथा जन्तुस्वभावं हि परित्यज्यान्यदेहिकम् ।
परभावः प्रकुरुते परदेहं समाश्रितः ॥ १३ ॥
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन् ।
वागङ्गगतिलीलाभिश्चेष्टाभिश्च समाचरेत् ॥ १४ ॥
अनुरूपा विरूपा च तथा रूपानुसारिणी ।
त्रिप्रकारा भवेन्नॄणां प्रकृतिस्त्वपि भाविता ॥ १५ ॥
नानावस्थावयोपेता भूमिकादिकृतास्तथा ।
समुद्योतमये नाट्ये स्वभावकरणाश्च याः ॥ १६ ॥
स्त्रियस्तु स्त्रीगते भावे पुरुषाः पौरुषे यथा ।
यथा वयस्तथा तस्मिन् अनुरूपेति सा स्मृता ॥ १७ ॥
यो बालः स्थाविरीं भूमिं वृद्धो वा बालभूमिकाम् ।
तद्भावैः कुरुते नाट्यं सा विरूपेति कीर्त्तिता ॥ १८ ॥
पुरुषः स्त्रीगतं भावं यो वा प्रकुरुते पुनः ।
रूपानुसारिणी ज्ञेया प्रयोगे भरतोत्तमैः ॥ १९ ॥
छन्दतः पौरुषीं कुर्यात् भूमिकां स्त्रीप्रयोगतः ।
न परस्परचेष्टाभिः कुर्यात्तौ वृद्धबालिशौ ॥ २० ॥
भूमिकं सुकुमारञ्च नित्यं स्त्रीभिरनुष्ठितम् ।
अत्यर्थं मानुषीणान्तु दिव्यमानुषयोस्तथा ॥ २१ ॥
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् ।
तथैव मानुषे लोके राज्ञामन्तःपुरेष्वपि ॥ २२ ॥
उपदेष्टव्यमार्यैस्तु शास्त्रबुध्यांगनासु च ।

१ अयं श्लोकः खपुस्तके न दृश्यते ।

सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः ॥ २३ ॥
शृङ्गाररसमासाद्य तान्नारीष्वेव योजयेत् ।
यस्मात्स्वभावोपनतो विलासः स्त्रीषु दृश्यते ॥ २४ ॥
तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् ।
पौरुषं यत्तु ललितं सोऽलंकारपरो भवेत् ॥ २५ ॥
स्वयं तु भूमिकान्यासं बुधः स्त्रीणां प्रयोजयेत् ।
तुल्योपि स्थापकोपेतो भूमिकान्यास इष्यते ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥ २६ ॥
संगीतक्रमपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ।
मधुरककर्कशत्वं भवति नाट्यप्रयोगेन ॥ २७ ॥
प्रमदा नाट्यविलासैर्लतेव कुसुमैर्विचित्रलावण्याः ।
कामोपचारकुशला भवन्ति काम्ये विशेषज्ञाः ॥ २८ ॥
योग्यासु च प्रयत्नः कर्त्तव्यः सततमप्रमादेन ।
न हि योग्यां विना भवति भावरससौष्ठवं किञ्चित् ॥ २९ ॥
प्रयोगो द्विविधश्चायं विज्ञेयो नाट्यमन्वितः ।
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ॥ ३० ॥
नाटकञ्च प्रकरणं भाणो वीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ॥ ३१ ॥
युद्धोद्धता वेगकृतासंरम्भबहुलाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः प्रयोज्याः पुरुषैर्हि ते ॥ ३२ ॥
न चाविद्याङ्गभावस्तु च्छेद्यभेद्याहवात्मिकम् ।
मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपिनम् ॥ ३३ ॥
पुरुषप्रायसञ्चारमल्पस्त्रीकमनोद्धतम् ।
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ॥ ३४ ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतासां विद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ३५ ॥
एषां प्रयोगः कर्त्तव्यो देवदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः ॥ ३६ ॥

एवं प्रयोगः कर्तव्यो भूमिकानां विकल्पनम् ।
अत्रोच्यते यथानाट्यमाहार्यगुणसम्भवः ॥ ३७ ॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः ।
अत्रोच्यते यथा लोके नाट्यधर्मिप्रवृत्तिता ॥ ३८ ॥
तदेवं सर्वसंपन्नं नाट्यमेतन्मया कृतम् ।
वर्णकैश्छादितस्तत्र भूषणैश्चाप्यलंकृतः ॥ ३९ ॥
गाम्भीर्याहार्यसंपन्नो राजचिह्नो भवेन्नटः ।
सप्तद्वीपाश्रयश्चैवमथवैको भवेन्नरः ॥ ४० ॥
वर्णकैर्याति तेनेह कार्यं त्वङ्गविचेष्टितम् ।
आचार्यबुद्ध्या कर्त्तव्यं सौष्ठवाङ्गपुरस्कृतम् ॥ ४१ ॥
राजवत् भरतस्तस्मात् राजापि नटवत् भवेत् ।
यथा नटस्तथा राजा यथा राजा तथा नटः ॥ ४२ ॥
द्रव्याणां यः परीवारो पार्थिवानां स एव हि ।
नाटके संप्रयोक्तव्यो देशभाषावयोऽन्वितः ॥ ४३ ॥
एवं राजोपचारे तु कार्यः पुरुषसंश्रयः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रयोक्तॄणां तु तद्गुणान् ॥ ४४ ॥

तत्र सूत्रधारगुणान् वक्ष्यामः । पुण्याभिधानमेव तल्लक्षणं अभिमतवाक्संस्काराः तालविधानज्ञता स्वरवादित्रतत्त्ववेदनञ्च ॥

चतुरातोद्यकुशलः शास्त्रकर्मसुशिक्षितः ।
नानापाषण्डकार्यज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ ४५ ॥
वेश्योपचारनिपुणः कामशास्त्रविचक्षणः ।
नानागीतप्रचारज्ञो रसभावविशारदः ॥ ४६
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः ।
पादच्छन्दोविधानज्ञः सर्वशास्त्रविचक्षणः ॥ ४७ ॥
ग्रहनक्षत्रतत्त्वज्ञो देहव्यापारपण्डितः ।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च ॥ ४८ ॥
प्रमाणचरितज्ञश्च राजवंशप्रसूतिवान् ।
श्रोता शास्त्रार्थकाराणां श्रुत्वा चैवावधारकः ॥ ४९ ॥

अवधार्य प्रवक्ता च शक्तश्चैवोपदर्शने ।
एवंगुणस्तथाचार्यः सूत्रधारो विधीयते ॥ ५० ॥
स्वाभाविकान् गुणांश्चैव गदतो मे निबोधत ।
स्मृतिमान् मतिमान् धीर उदारः स्थितवाक् कविः ॥ ५१ ॥
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः ।
मन्युदोषविनिर्मुक्तः सत्यवाक् दक्षिणः शुचिः ॥ ५२ ॥
अलुब्धप्रतिपत्तौ च स्वाभाविकगुणास्त्वमी ।
सूत्रधारगुणैश्चैव किञ्चिदूनैः समन्वितः ॥
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्विकः ॥ ५३ ॥
उज्ज्वलो रूपवांश्चैव दृष्टोपकरणक्रियः ।
मेधावी च विधानज्ञः स्वकर्मकुशलो नरः ॥ ५४ ॥
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ।
वेश्योपचारकुशलः मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत् ॥ ५५ ॥
उज्वलवस्त्राभरणः क्रुद्धत्यनिमित्ततः प्रसीदति च ।
अधमो मागधभाषी भवति शकारो बहुविकारः ॥ ५६ ॥
वामनो दन्तुरः कुब्जो द्विजिह्वो विकृताननः ।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः ॥ ५७ ॥
कलहप्रियो बहुकथो विरूपो गन्धसेवकः ।
मान्यामान्यविशेषज्ञश्चेटोऽप्येवंविधः स्मृतः ॥ ५८ ॥
एवं गुणैश्च संयुक्तो नाट्ययोगविचक्षणः ।
कलाप्रयोगे चाचार्यैस्तोषिताभिरतः सदा ॥ ५९ ॥
लीलया हावभावाभ्यां सत्त्वेन विनयेन च ।
माधुर्येण च संयुक्ताश्चतुष्षष्टिकलान्विताः ॥ ६० ॥
राजोपचारकुशलाः स्त्रीदोषैश्च विवर्जिताः ।
प्रियवादिनी प्रियकथा प्रियदक्षा जितश्रमा ॥ ६१ ॥
एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ।
रूपगुणशीलयौवनमाधुर्यशक्तिसंपन्ना ॥ ६२ ॥

विशदा स्निग्धा मधुरा पेशलवचनाभिरक्तकण्ठी च ।
योग्या यामक्षुभिता लयतालज्ञा रसैस्तु संयुक्ता ॥ ६३ ॥
एवंविधगुणैर्युक्ता कर्त्तव्या नायिका तज्ज्ञैः ।
आस्थानराशिनिरूक्षा आविद्धगतिचेष्टिता ॥ ६४ ॥
दीर्घरोषा च दीना च तथोद्वृत्तोद्भटा सदा ।
सर्वाभरणसंयुक्ता गन्धमाल्योपशोभिता ॥ ६५ ॥
एवमेताः प्रकृतयो ज्ञेया नाट्यप्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि भरतानां विकल्पनम् ॥ ६६ ॥
शिल्पकारोपकारी च दूषकः स्तौतिको नटः ।
सूत्रधारो नाट्यकारः तथा कुटककारकः ॥ ६७ ॥
तथाहरणकृच्चैव मालाकारस्तथैव च ।
रजकश्चित्रकारश्च कारवः शिल्पिनस्तथा ॥ ६८ ॥
कुन्तीलावाश्च विज्ञेया ये चान्ये नामतो द्विजाः ।
धुर्यवदेको यस्मात उद्धारोऽनेकभूमिकायुक्तः ।
भाण्डैर्गृहोपकरणैर्नाट्यं भवति भारतस्तस्मात् ॥ ६९ ॥
लोको हृदाश्रयकृतं सर्वप्रकृतिप्रचारसंयुक्तम् ।
नानाश्रयं प्रकुरुते तथा नार्याश्रयोपि वाऽपि ॥ ७० ॥
प्रकृत्युत्पन्नप्रतिभो नर्मकृता नर्मगर्भनिर्भेद्यः ।
यस्तु विभूषितवचनो विदूषको नाम विज्ञेयः ॥ ७१ ॥
शूरपतिस्तूर्यपतिः सर्वातोद्यप्रवादने कुशलः ।
तूर्यपरिग्रहयुक्तो विज्ञेयः तौरिको नाम ॥ ७२ ॥
नाटयति धात्वर्थोयं भूयो नटयति च लोकवृत्तान्तम् ।
रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति ॥ ७३ ॥
आशीर्वादनयुक्तैर्मधुरैर्वाक्यैश्च स्वमङ्गलाचारैः ।
सर्वं स्तौति हि लोकं यस्मात्तस्माद्भवेद् नान्दी ॥ ७४ ॥
नान्यो बहुधास्मिन्नृणां वदति यतो नाट्ययोगे तु ।
प्राकृतसंस्कृतवाद्यैर्नान्दी नामैष विज्ञेयः ॥ ७५ ॥
गानस्य च वाद्यस्य पाठ्यस्याप्येकभावविहितस्य ।

शास्त्रोपदेशयोगात् सूत्रज्ञः सूत्रधारस्तु ॥ ७६ ॥
यस्माद्यथोपदिष्टान् तांश्च भावांश्च सत्त्वसंयुक्तान् ।
भूमिविकल्पो नयति च नाट्यकारसंज्ञितस्तस्मात् ॥ ७७ ॥
चतुरातोद्यविधानप्रयोगशास्त्रार्थहेतुविहितस्य ।
नाट्यस्य यः प्रयोक्ता स नटो नाम विज्ञेयः ॥ ७८ ॥
भाण्डकवाद्यज्ञा या लयतालज्ञा रसानुविद्धा च ।
सर्वाङ्गसुन्दरी चैव कर्त्तव्या नाटकीया सा ॥ ७९ ॥
नानाप्रकृतिसमुत्थं करोति शीर्षकं मुकुटयोगैः ।
विविधैर्वेषविशेषैः स मुकुटकरस्तु विज्ञेयः ॥ ८० ॥
यस्त्वाभरणं कुर्यात् बहुविधसहितं स चाभरणकृत्स्यात् ।
यश्चोपकरणयोगः स तेन नाम्ना समभिभाष्यः ॥ ८१ ॥
यो वै माल्यं कुरुते पञ्चविधं माल्यकृत् स विज्ञेयः ।
यश्चापि वेषयोगं स च वेषकरस्तु विज्ञेयः ॥ ८२ ॥
चित्रज्ञश्चित्रकरो वस्त्रस्य च रञ्जनात् भवेद्रजकः ।
जत्वश्मलोहकाष्ठैर्द्रव्यकरः कारुकश्चैव ॥ ८३ ॥
नानातोद्यविधानेप्रयोगयुक्तः प्रवादने कुशलः ।
कुशलत्वदाताव्याधितं(?) यस्मात्तस्मात् कुशीलवः स्यात ॥ ८४ ॥
यद्यत्समाश्रयते शिल्पं वा क्रमं वा प्रयोगं वा ।
तत्तेनात्मगतगुणो विज्ञेयो नामतः पुरुषः ॥ ८५ ॥
एवं तु नाटकविधौ जातिर्नटसंज्ञिता बुधैर्ज्ञेया ।
नानोपकरणयुक्ता नाटकविकल्पप्रयोगे च ॥ ८६ ॥
उक्तोत्रभूमिकान्यासः प्रयोक्तारश्च योगतः ।
आदिष्टं नाट्यशास्त्रञ्च मुनयः किमिहोच्यताम् ॥ ८७ ॥

इति भारतीये नाट्यशास्त्रे भूमिकापात्रविकल्पो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥



---

१ अतोद्यऽप्यतिकुशलः—ख ।

# ॥ अथ षट्त्रिंशोऽध्यायः ॥

[1]आत्रेयोऽथ वशिष्ठश्च पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यो मनुरायुस्तथारुवान् ॥ १ ॥
विश्वामित्रः स्थूलशिराः संवर्त्तः प्रतिमर्दनः ।
उशना बृहस्पतिर्वत्सश्च्यवनः काश्यपो ध्रुवः ॥ २ ॥
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजोऽथ रैभ्यश्च वाल्मीकिर्भगवांस्तथा ॥ ३ ॥
स्थूलाक्षः शङ्कुलाक्षश्च कण्वो मेधातिथिः कुशः ।
नारदः पर्वतश्चैव सुशर्मा चैकधन्विनौ ॥ ४ ॥
निष्ठ्यूतिर्भवनो धौम्यः शतानन्दो कृतव्रणः ।
जामदग्न्यस्तथा रामो जमदग्निश्च वामनः ॥ ५ ॥
एवं ते मुनयः प्रीताः सर्वज्ञं भरतं तथा ।
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् ॥ ६ ॥
यस्त्वया कथितो ह्येष नाट्यवेदः पुरातनः ।
एकचित्तैः सहास्माभिः सम्यक् समुपधारितः ॥ ७ ॥
भगवन् संशयो यो यत् तन्नो व्याख्यातुमर्हसि ।
को ह्यन्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति ॥ ८ ॥
न वयं परिभावेन न विरोधेन नेर्ष्यया ।
पृच्छामो भगवन्नाट्यमुपदेशाभिपूर्वकम् ॥ ९ ॥
अस्माभिश्च तदा नोक्तं तदा छेदो भवेदिति ।
तत्सर्वं निखिलेनेदं नाट्यं गुह्यं निदर्शय ॥ १० ॥
लोकस्य चरितं नाट्यमित्यवोचस्त्वमीदृशम् ।
तेषां नो लोकगुह्यानां निश्चयं वक्तुमर्हसि ॥ ११ ॥
देवस्य कस्य चरितं पूर्वरङ्गे द्विजर्षभ ।
किमर्थं पूज्यते ह्येष प्रयुक्तं किं करोति वा ॥ १२ ॥
प्रीतं किं दैवतं तत्र प्रीतिं वा किं करोति च ।

१ एते पञ्च श्लोकाः खपुस्तके न दृश्यन्ते ।

कस्मादेव पुनः शौचं श्रुतं चरति सूत्रधृक् ॥ १३ ॥
कथमुर्वीतले नाट्यं स्वर्गान् निपतितं विभो ।
कथं तवायं वंशश्च नटसंज्ञः प्रकीर्त्तितः ॥ १४ ॥

भरत उवाच

ब्रवीमि वो ह्ययं विप्राः यन्मां पृच्छत सुव्रताः ।
पूर्वरङ्गविधौ तस्य तच्च सम्यङ् निबोधत ॥ १५ ॥
प्रोक्तवानस्मि यत् पूर्वमहं विघ्ननिबर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्त्तितः ॥ १६ ॥
शास्त्राणां [1]परिहारार्थं शरीराचरणं यथा ।
तथा सर्वगतं पापं स्मृतेनैव प्रशाम्यति ॥ १७ ॥
एवं जप्यैश्च होमैश्च देवताभ्यर्चनेन च ।
स्तुत्याशीर्वचनैर्युक्तः कर्मभावानुकीर्त्तनात् ॥ १८ ॥
सर्वातोद्यनिनादैश्च यथागीतस्वनानिच ।
मया च पापहरणे कृते विघ्ननिबर्हणे ॥ १९ ॥
स्तुतिगीतादिसंहृष्टो येनाथ ह्रियते पुमान् ।
तस्मादयं प्रयोगस्तु नान्दी नाम भविष्यति ॥ २० ॥
गीतवाद्यानुनादी च यत्र काकुस्वरः शुभः ।
तस्मिन्देशे तु पापघ्नो माङ्गल्यश्च भविष्यति ॥ २१ ॥
यावन्तं पूरयेद्देशं ध्वनिरातोद्यसंश्रयः ।
तावतानां शुभं किञ्चित् न च विघ्नविनायकाः ॥ २२ ॥
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति सर्वदा ॥ २३ ॥
वाद्यं श्रुत्वा तथा चैव गानं वादिक्रमेणच ।
वेदमन्त्रार्थवचनै.............[2]स्तथैव च ॥ २४ ॥
श्रुतं मया देवदेवात् ततश्च शङ्करोदितम् ।
स्नानजप्यसहस्रेभ्यः श्रेष्ठं मे गीतवादितम् ॥ २५ ॥

---

१ प्रतिका०—ख ।
२ समं ह्येतद् भविष्यति—ख ।

यस्मिन्नातोद्यनाट्यस्थो गीतवाद्यश्च निश्चयः ।
भविष्यत्यशुभं तस्मिन् देशे नैति कदाचन ॥ २६ ॥
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
यत्र स्तोत्रकृतैर्मन्त्रैर्देवताभ्यर्चनं प्रति ॥ २७ ॥
यतोऽभिवादने क्लिष्टं शिरसा रङ्गमण्डले ।
तथा विधिसमापन्नं न शक्यं विनिगूहितुम् ॥ २८ ॥
ममैते तनयाः सर्वे नाट्यवेदमदान्विताः ।
सर्वलोकप्रहसनैर्बाध्यन्ते हास्यसंश्रयैः ॥ २९ ॥
कस्यचित्त्वथ कालस्य शिल्पकर्म ममाभ्यधात् ।
ऋषीणामङ्गकरणं कुर्वद्भिर्भाण्डसंश्रयम् ॥ ३० ॥
अग्राह्यं सुदुराचारं ग्राम्यधर्मप्रवर्त्तनम् ।
निष्ठुरश्चाप्रशस्तश्च काव्यं संसदि योजितम् ॥ ३१ ॥
तच्छ्रुत्वा मुनयः सर्वे भीमरोषाः प्रकोपिताः ।
ऊचुस्ते भरतान् सर्वान् निर्दहन्त इवाग्नयः ॥ ३२ ॥
मा तावद् भो द्विजा युक्तमिदमस्मद्विडम्बनम् ।
को नामायं परिभवः किं वा नाम्नाऽभिसम्मतम् ॥ ३३ ॥
तस्माद् ज्ञानमदोन्मत्ता भवताविनयाश्रयाः ।
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति ॥ ३४ ॥
ऋषीणां ब्राह्मणनाञ्च समवायोऽथ सङ्गमे ।
निर्ब्रह्माचरणा भूत्वा शूद्राचारा भविष्यथ ॥ ३५ ॥
शूद्रास्ते केवलं भूत्वा तत्कर्म समावप्स्यथ ।
यश्च वो भवतां वंशः स च शूद्रो भविष्यति ॥ ३६ ॥
येऽत्रापि वंशजातास्तेपि भविष्यन्त्यथ नर्त्तकाः ।
तथोपस्थानवन्तश्च सस्त्रीबालकुमारकाः ॥ ३७ ॥
शापजन्म ततो ज्ञात्वा सुतानां मे सुरास्तदा ।
सर्वे विमनसो भूत्वा तान् ऋषीन् समुपस्थिताः ॥ ३८ ॥
तावद्भिश्च तथाप्रोक्तं देवैः शक्रपुरोगमैः ।
इदानीं दुःखमुक्तश्च सर्वमेतद्विनिश्च तु ॥ ३९ ॥

ऋषिभिश्च ततो प्रोक्तं न चैतद्धि विनश्यति ।
शेषमन्यत्तु यत्प्रोक्तं सर्वमेतद्भविष्यति ॥ ४० ॥
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् ।
विषण्णास्ते सुराः सर्वे पुनरात्मावनैषिणः ॥ ४१ ॥[1]
प्रोक्तवन्तस्तु मा क्रुद्धा बहुशो नाशितास्त्वया ।
अनेन नाट्यदोषेण शूद्राचारप्रियाः कृताः ॥ ४२ ॥
मया च सान्त्वयित्वोक्तं मा शोकं व्रजतानघाः ।
कृतान्तविहितोऽस्माकं नूनमेष विधिः स्मृतः ॥ ४३ ॥
मुनीनां न मृषा वाक्यं भविष्यति कदाचन ।
निधने तु मनो मा भूत् युष्माकमिति सान्त्विताः ॥ ४४ ॥
जानीध्वं तु तथा नाट्यं ब्रह्मणा सम्प्रकीर्त्तितम् ।
शिष्येभ्यश्च तदन्येभ्यः प्रयच्छध्वं प्रयोगतः ॥ ४५ ॥
मा वै प्रणश्यतामेतन्नाट्यं दुःखात् प्रवर्त्तितम् ।
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसम्भवम् ॥ ४६ ॥
अप्सरोभ्युदयश्चैव यथोक्तं न मया श्रुतम् ।
नाट्यं दत्वा ततः सर्वे प्रायश्चित्तं चरिष्यथ ॥ ४७ ॥
[2]कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ।
प्राप्तवान् देवराज्यञ्च नयबुद्धिपराक्रमैः ॥ ४८ ॥
प्रशशास तदा राज्यं दैवीं व्युष्टिमवाप्नुवन ।
गान्धर्वं चैव नाट्यञ्च दृष्ट्वा चिन्तामुपागतः ॥ ४९ ॥
स चिन्तयित्वा मनसा कथमेषोऽग्र उन्मनाः ।
मम नाट्यप्रयोगोऽत्र भवेदिति ससम्भ्रमः ॥ ५० ॥
कृताञ्जलिः प्रयोगार्थं प्रोक्तवानमरान् नृपः ।
इदमप्सरसामित्थं नाट्यं भवतु नो गृहे ॥ ५१ ॥

---

१ श्रुत्वा तं समुत्थिताः—ख ।

२ शेषोऽशः खपुस्तके एतद्भिन्ने सप्तत्रिंशत्तमेऽध्याये न्यस्तो दृश्यते ।

प्रयुक्तः स ततो देवैर्बृहस्पतिपुरोगमैः ।
सुराङ्गनानां नोक्तोऽयं मानुषैः सह सङ्गमः ॥ ५२ ॥
हितं पथ्यं च कर्त्तव्यं भगवन् स्वर्जयेष्यया ।
आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम् ॥ ५३ ॥
प्रोक्तवांश्च ततो मां तु नृपतिः स कृताञ्जलिः ।
इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम् ॥ ५४ ॥
पूर्वमाकुलितश्चैव द्रव्यैर्हि किल वः श्रुतम् ।
व्यक्तभावाश्रयं लब्ध्वा त्वत्सकाशाद्द्विजोत्तमाः ॥ ५५ ॥
पितामहगृहेऽस्माकमेतदन्तःपुरे जने ।
पितामहक्रियायुक्तमुर्वश्याः सम्प्रकीर्त्तितम् ॥ ५६ ॥
तस्याः प्रणाशशोकेन उन्मादापहृतेन वै ।
विपन्नेऽन्तःपुरजने पुनर्नाशमुपागतः ॥ ५७ ॥
प्रकाशमेतदिच्छामो भूतले सम्प्रकीर्त्तितम् ।
तिथियज्ञक्रियास्वेवं यथा स्यान् मङ्गलं शुभम् ॥ ५८ ॥
तस्मान्मम गृहे बन्धं नानाप्रकृतिसंश्रयम् ।
स्त्रीणां ललितविन्यासैर्यशो वः प्रथयिष्यति ॥ ५९ ॥
तथास्त्विति यथा प्रोक्तो नहुषः पार्थिवस्तदा ।
सुताश्चाहूय सम्प्रोक्ताः सामपूर्वं सुरैः सह ॥ ६० ॥
अयं तु नहुषो राजा याचते नः कृताञ्जलिः ।
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव च ॥ ६१ ॥
करिष्यामि च शापान्तं अस्मिन् सम्यक्प्रयोजिते ।
ब्राह्मणानां नृपाणाञ्च न भविष्यन्ति कुत्सिताः ॥ ६२ ॥
तत्र गत्वा प्रयुञ्जध्वं प्रयोगं वसुधातले ।
न शक्यश्चान्यथा कर्त्तुं वचनं पार्थिवस्य हि ॥ ६३ ॥
युष्माकञ्चैव संक्षेपात् नहुषस्य महात्मनः ।
आप्तोपदेशसिद्धिश्च नाट्ये प्रोक्ता स्वयम्भुवा ॥ ६४ ॥
शेषमुत्तरतन्त्रेण कोहलः कथयिष्यति ।

प्रयोगः कारिकाश्चैव निरुक्तानि तथैव च ॥ ६५ ॥
अप्सरोभिरिदं शास्त्रं क्रीडनीयकहेतुकम् ।
अधिष्ठितं मया सर्वे स्वस्तिना नारदेन च ॥ ६६ ॥
ततस्ते वसुधां गत्वा नहुषस्य गृहे द्विजाः ।
स्त्रीणां प्रयोगं बहुधा सृष्टवन्तो यथाक्रमम् ॥ ६७ ॥
तत्र चोत्पाद्य ते पुत्रान् मानुषीभ्यो ममात्मजाः ।
बद्धवन्तोऽधिकं सर्गं तेषाञ्च विविधाश्रयम् ॥ ६८ ॥
पुत्रानुत्पाद्य बध्वा च प्रयोगं ते यथाक्रमम् ।
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं पुनस्तदा ॥ ६९ ॥
एवमुर्वीतले नाट्यं शापात्समवधारितम् ।
भरतानाञ्च वंशोऽयं भविष्यच्च प्रकीर्त्तितम् ॥ ७० ॥
कोहलादिभिरेतैर्वा वात्स्यशाण्डिल्यधूर्त्तिलैः ।
मर्त्यधर्मतया युक्तैर्कञ्चित्कालमवस्थितैः ॥ ७१ ॥
एतच्छास्त्रं प्रयुक्तन्तु नराणां बुद्धिवर्धनम ।
त्रैलोक्यक्रिययोपेतं सर्वशास्त्रनिदर्शनम् ॥ ७२
माङ्गल्यं ललितैश्चैव ब्रह्मणो वदनोद्भवम् ।
सुपुण्यञ्च पवित्रञ्च शुभं पापविनाशनम् ॥ ७३ ॥
य इदं शृणुयात्प्रोक्तं नाट्यमेतत् स्वयंभुवा ।
प्रयोगं यच्च कुर्वीत प्रेक्षते चावधानवान् ॥ ७४ ॥
या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनः ।
या गतिर्दानशीलानां तां गति प्राप्नुयान्नरः ॥ ७५ ॥
नृपधर्मेषु सर्वेषु कीर्त्यतेस्स महाफलम् ।
प्रोक्षणीयप्रदानं तु सर्वदानेषु पूज्यते ॥ ७६ ॥
न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः ।
यथानाट्यप्रयोगस्थैस्तुष्यन्ति स्तुतिमङ्गलैः ॥ ७७ ॥
गान्धर्वञ्चैव नाट्यञ्च यः सम्यगनुपश्यति ।
लभते सद्गतिं पुण्यां समब्रह्मर्षिभिर्नरः ॥ ७८ ॥

एवं नाट्यप्रयोगे बहु बहु विहितं कर्म शास्त्रप्रणीतं
न प्रोक्तं यच्च लोकादनुकृतिकरणं तच्च कार्यं विधिज्ञैः ॥
किञ्चान्यत्सत्यपूर्वं भवतु वसुमती शाश्वती नष्टरोगा ।
शान्तिर्गोब्राह्मणानां नरपतिरवनिं पातु चेमां समग्राम् ॥ ७९ ॥

इति भारतीये नाट्यशास्त्रे नाट्यावतारो नाम षट्-
त्रिंशोऽध्यायः ॥ ३६ ॥

समाप्तश्चायं ग्रन्थः



# काशीसंस्कृतसीरिज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

तत्र मुद्रितग्रन्थनामानि । मूल्यम् ।

१ नलपाकः नलविरचितः । संपूर्णः (पाकशास्त्रम् १) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीका-सहितम् । (वेदान्तं १) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं१) रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । (वैदिकं १) रु० ०—६

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । (व्याकरणं १) रु० ५—०

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः तत्पुरुषादि-समाप्तिपर्यन्तः । द्वितीय भाग (व्याकरणं १) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण-निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रि-कृतव्याख्यासहिता । (न्यायं १) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रि-कासमवेतविवरणेन च समन्वितम् । (वेदान्तं २) रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । (कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-नि-म्बार्कमतभाष्यचतुष्टयसहितम् । (वैदिकं २) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । (वेदान्तं ३) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । (छंदः १) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटि-प्पणा । (न्यायं २) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे ह-रिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यस-

हितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्। मधूसूदनीटीकासहितम् संपूर्णं (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम्। श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीकासहितः। ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः। (व्याकरणं ३)रु०४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः। (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः। म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम्। ( काव्यवि० ३ ) रु० ०—१२

२९ कामसूत्रम्। श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम्। बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम्। (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः। म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः। ( न्यायं ४ ) रु० ६—०

३१ परिभाषेन्दुशेखरः। म० म० श्रीनागेशभट्टरचितः। म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ५) रु० ३—०

३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम्। परमर्षिभारद्वाजोद्द्योतकरविरचितम्। महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम्। (न्यायं वि० ५) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४)(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०

३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ६) रु० ६—०

३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ७) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ६) रु० २—०

४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः मेदिनीकारविरचितः। (कोशं १) रु० १—८

४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम् सपूर्णम्। (भाग१—२) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम्। श्रीगोतममुनीप्रणीतम्। श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम्। श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं१) रु० १—८

४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं२) रु० १—८

४६ भास्वती। श्रीमच्छतानन्दविरचिता। श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता। (ज्योतिषं ३) रु० २—०

४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः। पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ८) रु० १—४

४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७) रु० १—४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०४) रु०४—०

५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम् । ( काव्य ५ ) रु० १—४

५२ काथबोधः । साजनीकृत टीकोपेतः । दत्तात्रेय सम्प्रदायाऽनुगतः । रु०—८

५३ रसचन्द्रिका । पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता । (काव्य० ६) रु०१—०

५४ अलङ्कारमुक्तावली । पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेय-निर्मिता । ( काव्य० वि० ७ ) रु०-१२-०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः । नारायणभट्टीयव्याख्यासहितः । सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १-८-०

५६ अलङ्कारशेखरः । केशवमिश्रकृतः । साहित्योपाध्याय श्री अनन्तरामशार्म्मणा भूमिकादिभिः संभूष्य संशोधितः । (अल०वि०१)१—४

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । ( न्या० वि० ७ ) २-०-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्ययासमेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता । श्रीयतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता ( अव्ययीभावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५—०—०.

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम् ( कर्म० वि० ५ ) मूल्यम् रु० ३—०—०.

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) मूल्यम् रु० ५-०-०.

पत्रादिप्रेषणस्थानम् — जयकृष्णदास—हरिदासगुप्तः, चौखम्बा संस्कृत सीरीज आफीस, विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक बनारस सिटी ।

७६ किरातार्जुनीयम् । श्रीमहाकवि भारविविरचितम् । मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० ... शर्मणा कृतया भावार्थदीपिकाख्यया समलङ्कृतम् । [सर्गत्रयमात्रम् ] [काव्य वि० ११ ] रु० ०—६

७७ शक्तिवादः श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः । [ न्यायविभागे १० ] रु० ३—०

७८ माथुरीपञ्चलक्षणी । पं० श्रीरमानाथ ... कृतव्याख्या सहिता तथा माथुरीसिंहव्याघ्रलक्षणम् । पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि ... माथुरीपञ्चलक्षणी क्रोडपत्रेण च । [ न्याय वि० ११ ] रु० ०—६

७९ रसाध्यायः । टीकया संवलितः । [ आयुर्वेदविभागे वि० २ ] रु० ०—१०

८० न्यायनिबन्धाकरणे वादरत्नम् । न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम् । ( तत्र च न्यास परिष्कारपरिशिष्टभेदेन प्रकरणत्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४९ महता ... विचारिताः तत्र प्रथमं प्रकरणं मुद्रितं द्वितीय प्रकरणमपि मुद्रित प्रायं शीघ्रमेव भवन्तं दृष्टिपथमधिगमिष्यतीति । ) प्रथमो भागः । (व्या० वि १०) रु० १—८

८१ गणितकौमुदी । ( हिन्दीभाषाटीकासहिता ) प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । [ गणितविभागे १ ] रु० ०—६

८२ छन्दःकौमुदी । ( हिन्दीभाषाटीकासहिता ) प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम् । [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम् । महर्षिप्रवरपतञ्जलिप्रणीतम् । तत्र (१) भोजवृत्तिः, (२) भावागणेशवृत्तिः, (३) नागोजीभट्टवृत्तिः, (४) ...प्रभा, (५) योगचन्द्रिका, (६) योगसुधाकराख्य टीका समलङ्कृतम् । [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा पं० ... शेषपत्रि ... व्याख्यया सहितः । १ से ४ सर्गः मू० ... -४-० । १ से ६ सर्गः रु० १—८—० तथा ६ से १० सर्गः १—८

८५ योगदर्शनम् । पण्डित बलदेवमिश्रकृतया सटिप्पण्यायोगप्रदीपिकाख्य विवृत्त्या समन्वितम् । ( योग विभागे २ ) रु० १—०

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पण्डित श्रीनारायणशास्त्रीखिस्तेकृत काव्यमीमांसा–चन्द्रिका टीका सहिता । प्रथमाध्यायमारभ्य पञ्चमाध्यायपर्यन्ता प्रथमो भागः । ( काव्य विभागे १० ) रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालया ... केन एम० ए० साहित्याचार्येति पदवी विभूषितेन पण्डित ... बलदेव ... स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्या समलङ्कृत ... भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । ( ... विभागे १ ) रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्री कालीदासविरचितम् । मल्लिनाथकृत सञ्जीविनी, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्तेकृत भावप्रबोधिनी व्याख्या टिप्पण्या च सहितम् । ( काव्य वि० १४ ) रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्य पं० श्रीशिवदत्तमिश्रविरचित ... व्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ५ )

---

सर्वविधपुस्तकप्राप्तिस्थानम्—

**चौखम्बा संस्कृत सीरिज आफिस,**

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।